पर्याय इति किम् ? विशयः । उपशयः ।।
<हस्तादाने चेरस्तेये ।। 3-3-40 ।।>
हस्तादाने गम्यमाने चिनोतेर्धातोर्घञ् प्रत्ययो भवति, न चेत्स्तेयं चौर्यं भवति । हस्तादानग्रहणेन प्रत्यासत्तिरादेयस्य लक्ष्यते । पुष्पप्रचायः । फलप्रचायः ।
हस्तादान इति किम् ? वृक्षशिखरे फलप्रचयं करोति । अस्तेय इति किम् ? पुष्पप्रचयश्चौर्येण ।
* उच्चस्य प्रतिषेधो वक्तव्यः * । (उच्चयः) ।।
<निवासचितिशरीरोपसमाधानेष्वादेश्च कः ।। 3-3-41 ।।>
`चेः' इत्येव । निवसन्त्यस्मिन्निति निवासः, चीयतेऽसौ चितिः, पाण्यादिसमुदायः = शरीरम्, राशीकरणम् = उपसमाधानम् एतेष्वर्थेषु चिनोतेर्घञ् प्रत्ययो भवति, धातोरादेश्च ककार आदेशः । निवासे तावत् - चिखल्लिनिकायः । चितौ - आकायमग्निं चिन्वीत । शरीरे-अनित्यकायः । उपसमाधाने - महान्गोमयनिकायः ।
एतेष्विति किम् ? चयः । इह कस्मान्न भवति - महान् काष्ठनिचयः ? बहुत्वमत्र गम्यते, नोपसमाधानम् ।।
<सङ्घे चानौत्तराधर्ये ।। 3-3-42 ।।>
`चेः' इत्येव । प्राणिनां समुदायः = सङ्घः, स च द्वाभ्यां प्रकाराभ्यां भवति - एकधर्मनिवेशेन, औत्तराधर्येण वा; तत्र औत्तराधर्यपर्युदासादितरो गृह्यते ।
सङ्घे वाच्ये चिनोतेर्धातोर्घञ् प्रत्ययो भवति, आदेश्च कः । भिक्षुकनिकायः । ब्राह्मणनिकायः । वैयाकरणनिकायः ।
औत्तराधर्ये इति किम् ? सूकरनिचयः । प्राणिविषयत्वात्सङ्घस्येह न भवति - कृताकृतसमुच्चयः, प्रमाणसमुच्चयः ।।
<कर्मव्यतिहारे णच् स्त्रियाम् ।। 3-3-43 ।।>
कर्म = क्रिया । व्यतिहारः = परस्परं करणम् । कर्मव्यतिहारे गम्यमाने धातोर्णच्प्रत्ययो भवति स्त्रीलिङ्गे वाच्ये, तच्च भावे । चकारो विशेषणार्थः,"णचः स्त्रियामञ्"(5.4.14/3216)इति । व्यावक्रोशी । व्यावलेखी । व्यावहासी वर्त्तते ।
स्त्रियामिति किम् ? व्यतिपाको वर्त्तते ।
बाधकविषयेऽपि क्वचिदिष्यते - व्यावचोरी, व्यावचर्ची । इह न भवति - व्यतीक्षा, व्यतीहा वर्त्तते, व्यात्युक्षी भवति । तदेतद्वैचित्र्यं कथं लभ्यते ? "कृत्यल्युटो बहुलम्"(3.3.113/2841) इति भवति ।।
<अभिविधौ भाव इनुण् ।। 3-3-44 ।।>
अभिविधिः अभिव्याप्तिः, क्रियागुणाभ्यां कार्त्स्न्येन सम्बन्धः । अभिविधौ गम्यमाने धातोर्भावे इनुण् भवति । साङ्कूटिनम् । सांराविणम् । सान्द्राविणं वर्त्तते ।
अभिविधाविति किम् ? सङ्कोटः । संरावः । सन्द्रावः ।
भाव इति वर्तमाने पुनर्भावग्रहणं वासरूपनिरासार्थम्, तेन घञ् न भवति । ल्युटा तु समावेश इष्यते - सङ्कूटनं वर्त्तते । तत्कथम् ? "कृत्यल्युटो बहुलम्"(3.3.113/2841) इति ।।
<आक्रोशेऽवन्योर्ग्रहः ।। 3-3-45 ।।>
दृष्टानुवृत्तिसामर्थ्याद् घञनुवर्त्तते, नानन्तर इनुण् । `अव', नि' इत्येतयोरुपपदयोर्ग्रहेर्धातोर्घञ् प्रत्ययो भवति, आक्रोशे गम्यमाने । आक्रोशः = शपनम् । अवग्राहो हन्त ते वृषल भूयात् । निग्राहो हन्त ते वृषल भूयात् ।
आक्रोश इति किम् ? अवग्रहः पदस्य । निग्रहश्चोरस्य ।।
<प्रे लिप्सायाम् ।। 3-3-46 ।।>
`ग्रहः' इत्येव । प्रशब्द उपपदे ग्रहेर्धातोर्घञ् प्रत्ययो भवति लिप्सायां गम्यमानायाम् । पात्रप्रग्राहेण चरति भिक्षुः पिण्डार्थी । स्रुवग्राहेण चरति द्विजो दक्षिणार्थी ।
लिप्सायामिति किम् ? प्रग्रहो देवदत्तस्य ।।
<परौ यज्ञे ।। 3-3-47 ।।.
परिशब्द उपपदे ग्रहेर्घञ् प्रत्ययो भवति । यज्ञविषयश्चेत्प्रत्ययान्ताभिधेयः स्यात् । उत्तरपरिग्राहः, अधरपरिग्राहः ।
यज्ञ इति किम् ? परिग्रहो देवदत्तस्य ।।
<नौ वृ धान्ये ।। 3-3-48 ।।>
`वृ' इति वृङ्वृञोः सामान्येन ग्रहणम् । निशब्दे उपपदे `वृ' इत्येतस्माद्धातोर्धान्यविशेषेऽभिधेये घञ् प्रत्ययो भवति । अपोऽपवादः । नीवारा नाम व्रीहयो भवन्ति ।
धान्य इति किम् ? निवरा कन्या ।।
<उदि श्रयतियौतिपूद्रुवः ।। 3-3-49 ।।>

उच्छब्द उपपदे श्रयत्यादिभ्यो घञ् प्रत्ययो भवति । अजपोरपवादः । उच्छ्रायः । उद्यावः । उत्पावः । उद्द्रावः ।
कथं `पतनान्ताः समुच्छ्रयाः ? वक्ष्यमाणं विभाषाग्रहणमिह सिंहावलोकितन्यायेन सम्बध्यते ।।
<विभाषाऽऽङि रुप्लुवोः ।। 3-3-50 ।।.
आङि उपपदे रौतेः प्लवतेश्च विभाषा घञ् प्रत्ययो भवति । आरावः, आरवः । आप्लावः, आप्लवः ।
<अवे ग्रहो वर्षप्रतिबन्धे ।। 3-3-51 ।।>
`विभाषा' इति वर्त्तते । अव उपपदे ग्रहेर्धातोर्घञ् प्रत्ययो भवति विभाषा वर्षप्रतिबन्धेऽभिधेये ।। प्राप्तकालस्य वर्षस्य कुतश्चिन्निमित्तादभावः = वर्षप्रतिबन्धः । अवग्राहो देवस्य । अवग्रहो देवस्य ।
वर्षप्रतिबन्ध इति किम् ? अवग्रहः पदस्य ।।
<प्रे वणिजाम् ।। 3-3-52 ।।>
`ग्रहः' इति वर्त्तते । `विभाषा' इत्येव । प्रशब्द उपपदे ग्रहेर्धातोर्विभाषा घञ् प्रत्ययो भवति । प्रत्ययान्तवाच्यश्चेद्वणिजां सम्बन्धी भवति । वणिक्सम्बन्धेन च तुलासूत्रं लक्ष्यते, न तु वणिजस्तन्त्रम् । तुला प्रगृह्यते येन सूत्रेण स शब्दार्थः । तुलाप्रग्राहेण चरति, तुलाप्रग्रहेण चरति वणिगन्यो वा ।
वणिजामिति किम् ? प्रग्रहो देवदत्तस्य ।।
<रश्मौ च ।। 3-3-53 ।।>
`ग्रहः', `विभाषा', `प्र' इति वर्त्तते । प्रशब्द उपपदे ग्रहेर्धातोर्विभाषा घञ् प्रत्ययो भवति, रश्मिश्चेत् प्रत्ययान्तेनाभिधीयते । रथादियुक्तानामश्वादीनां संयमनार्था रज्जुः, सा रश्मिरिह गृह्यते । प्रग्रहः, प्रग्राहः ।।
<वृणोतेराच्छादने ।। 3-3-54 ।।>
`विभाषा' `प्र' इति वर्त्तते । प्रशब्द उपपदे वृणोतेर्धातोर्विभाषा घञ् प्रत्ययो भवति, प्रत्ययान्तेन चेदाच्छादनविशेष उच्यते । प्रावारः, प्रवरः ।
आच्छादन इति किम् ? प्रवरा गौः ।।
<परौ भुवोऽवज्ञाने ।। 3-3-55 ।।>
विभाषा इत्येव । परिशब्द उपपपदे भवतेर्धातोर्विभाषा घञ् प्रत्ययो भवति, अवज्ञाने गम्यमाने । अवज्ञानम् = असत्कारः । परिभावः,परिभवः ।
अवज्ञान इति किम् ? सर्वतो भवनं परिभवः ।।
<एरच् ।। 3-3-56 ।।>
`भावे' `अकर्त्तरि च कारके' इति प्रकृतमनुवर्त्तते, यावत् "कृत्यल्युटो बहुलम्"(3.3.113/2841) इति । इवर्णान्ताद्धातोः "भावे"(3.3.18/3184) "अकर्त्तरि च कारके संज्ञायाम्"(3.3.19/3188)अच् प्रत्ययो भवति । घञोऽपवादः । चकारो विशेषणार्थः "अन्तः"(6.2.143/3877) "थाथघञ्क्ताजबित्रकाणाम्"(6.2.144/3878) इति । चयः । अयः । जयः । क्षयः ।
* अज्विधौ भयादीनामुपसङ्ख्यानम् *(म.भा.2.149) । नपुंसके क्तादिनिवृत्त्यर्थम् । भयम् । वर्षम् ।
* जवसवौ छन्दसि वक्तव्यौ *(म.भा.2.150) । `ऊर्वोरस्तु मे जवः'(पै.20.36.7) । `पञ्चौदनसवः'(पै.8.19.3) ।।
<ॠदोरप् ।। 3-3-57 ।।>
ऋकारान्तेभ्य उवर्णान्तेभ्यश्च अप् प्रत्ययो भवति । घञोऽपवादः । पित्करणं स्वरार्थम् । करः । गरः । शरः । उवर्णान्तेभ्यः - यवः । स्तवः । लवः । पवः ।
दकारो मुखसुखार्थः । मा भूत्तादपि परस्तपरः ।।
<ग्रहवृदृनिश्चिगमश्च ।। 3-3-58 ।।>
ग्रहादिभ्यो धातुभ्योऽप् प्रत्ययो भवति । घञोऽपवादः । निश्चिनोतेस्त्वचोऽपवादः । ग्रहः । वरः । दरः । निश्चयः । गमः । निश्चिग्रहणं स्वरार्थम् ।
* वशिरण्योरुपसङ्ख्यानम् *(म.भा.2.150) । वशः । रणः ।
* घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम् *(म.भा.2.150) । प्रतिष्ठन्तेऽस्मिन्निति प्रस्थः पर्वतस्य । प्रस्नात्यस्मिन्प्रस्नः । प्रपिबत्यस्यामिति प्रपा । आविध्यन्ति तेनेत्याविधः । विहन्यन्तेऽस्मिन्निति विघ्नः । आयुध्यते अनेन इति आयुधम्।।
<उपसर्गेऽदः ।। 3-3-59 ।।>
`अप्' इत्येव । उपसर्ग उपपदेऽदेर्धातोरप् प्रत्ययो भवति । विघसः । प्रघसः ।
उपसर्ग इति किम् ? घासः ।।
<नौ ण च ।। 3-3-60 ।।>
निशब्द उपपदे अदेर्धातोर्णः प्रत्ययो भवति, चकारादप् च । न्यादः । निघसः ।।
<व्यधजुपोरनुपसर्गे ।। 3-3-61 ।।>

`व्यध', `जप' इत्येतयोरनुपसर्गयोरप् प्रत्ययो भवति । घञोऽपवादः । व्यधः । जपः ।

अनुपसर्ग इति किम् ? आव्याधा । उपजापः ।।

<स्वनहसोर्वा ।। 3-3-62 ।।>

`अनुपसर्गे' इत्येव । स्वनहसोरनुपसर्गयोर्वा अप् प्रत्ययो भवति । स्वनः, स्वानः । हसः, हासः ।

अनुपसर्ग इति किम् ? प्रस्वानः प्रहासः ।

<यमः समुपनिविषु च ।। 3-3-63 ।।>

`अनुपसर्गे, `वा' इति वर्त्तते । सम्, उप्, नि, वि इत्येतेषूपपदेषु अनुपसर्गेऽपि यमेर्वा अप् प्रत्ययो भवति । घञोऽपवादः । संयमः, संयामः । उपयमः, उपयामः । नियमः, नियामः । वियमः, वियामः ।

अनुपसर्गात्खल्वपि - यमः, यामः ।।

<नौ गदनदपठस्वनः ।। 3-3-64 ।।>

`अप्' इत्येव । निशब्द उपपदे गद, नद, पठ, स्वन इत्येतेभ्यो धातुभ्यो वा अप् प्रत्ययो भवति । घञोऽपवादः । निगदः, निगादः । निनदः, निनादः । निपठः, निपाठः । निस्वनः, निस्वानः ।।

<क्वणो वीणायां च ।। 3-3-65 ।।>

`नौ' `वा' `अनुपसर्गे' इति वर्त्तते । क्वणतेर्धातोर्निपूर्वादनुपसर्गाच्च वीणायां वा अप् प्रत्ययो भवति । घञोऽपवादः । सोपसर्गार्थं वीणाया ग्रहणम् । निक्वणः, निक्वाणः । अनुपसर्गात् - क्वणः, क्वाणः । वीणायां खल्वपि - कल्याणप्रक्वणा वीणा ।

एतेष्विति किम् ? अतिक्वाणो वर्त्तते ।।

<नित्यं पणः परिमाणे ।। 3-3-66 ।।>

`पण व्यवहारे स्तुतौ च'(धा.पा.439)अस्माद्धातोर्नित्यमप् प्रत्ययो भवति परिमाणे गम्यमाने । नित्यग्रहणं विकल्पनिवृत्त्यर्थम् । मूलकपणः । शाकपणः । संव्यवहाराय मूलकादीनां यः परिमितो मुष्टिर्बध्यते तस्येदमभिधानम् ।

परिमाण इति किम् ? पाणः ।।

<मदोऽनुपसर्गे ।। 3-3-67 ।।>

मदेर्धातोरनुपसर्गादप् प्रत्ययो भवति । घञोऽपवादः । विद्यामदः । धनमदः । कुलमदः ।

अनुपसर्ग इति किम् ? उन्मादः । प्रमादः ।।

<प्रमदसंमदौ हर्षे ।। 3-3-68 ।।>

`प्रमद' `संमद' इत्येतौ शब्दौ निपात्येते हर्षेऽभिधेये । कन्यानां प्रमदः । कोकिलानां संमदः ।

हर्ष इति किम् ? प्रमादः । संमादः ।

प्रसम्भ्यामिति नोक्तम्, निपातनं रूढ्यर्थम् ।।

<समुदोरजः पशुषु ।। 3-3-69 ।।>

समुदोरुपपदयोरजतेर्धातोः पशुविषये धात्वर्थे अप् प्रत्ययो भवति । घञोऽपवादः । `अज गतिक्षेपणयोः'(धा.पा.230) इति पठ्यते, स सम्पूर्वः समुदाये वर्तते, उत्पूर्वश्च प्रेरणे । समजः पशूनाम् । समुदाय इत्यर्थः । उदजः पशनाम् । प्रेरणमित्यर्थः ।

पशुष्विति किम् ? समाजो ब्राह्मणानाम् । उदाजः क्षत्रियाणाम् ।।

<अक्षेषु ग्लहः ।। 3-3-70 ।।>

`ग्लहः' इति निपात्यते अक्षविषयश्चेद्धात्वर्थो भवति । ग्रहेरप् सिद्ध एव, लत्वार्थं निपातनम् । अक्षस्य ग्लहः ।

अक्षेष्विति किम् ? ग्रहः पादस्य ।

अन्ये ग्लहिं प्रकृत्यन्तरमाहुः, ते घञं प्रत्युदाहरन्ति - ग्लाह इति ।।

<प्रजने सर्त्तेः ।। 3-3-71 ।।>

सर्तेर्धातोः प्रजने विषये अप् प्रत्ययो भवति । घञोऽपवादः । प्रजनम् = प्रथमं गर्भग्रहणम् । गवामुपसरः । पशूनामुपसरः । स्त्रीगवीषु पुङ्गवानां गर्भाधानाय प्रथममुपसरणमुच्यते ।।

<ह्वः सम्प्रसारणं च न्यभ्युपविषु ।। 3-3-72 ।।>

नि, अभि, उप, वि इत्येतेषु उपपदेषु ह्वयतेर्धातोः सम्प्रसारणम्, अप् प्रत्ययश्च भवति। घञोऽपवादः निहवः । अभिहवः । उपहवः । विहवः ।

एतेष्विति किम् ? प्रह्वायः ।।

<आङि युद्धे ।। 3-3-73 ।।>

आङि उपपदे ह्वयतेर्द्धातोः सम्प्रसारणम्, अप् प्रत्ययश्च भवति, युद्धेऽभिधेये । आहूयन्तेऽस्मिन्नित्याहवः ।
युद्ध इति किम् ? आह्वायः ।।
<निपानमाहावः ।। 3-3-74 ।।>
आङ् पूर्वस्य ह्वयतेर्धातोः सम्प्रसारणम्, अप् प्रत्ययः, वृद्धिश्च निपात्यते, निपानं चेदभिधेयं भवति । निपिबन्त्यस्मिन्निति निपानमुदकाधार उच्यते । आहावः पशूनाम्, कूपोपसरेषु य उदकाधारस्तत्र हि पानाय पशव आहूयन्ते ।
निपानमिति किम् ? आह्वायः ।।
<भावेऽनुपसर्गस्य ।। 3-3-75 ।।>
अनुपर्गस्य ह्वयतेः सम्प्रसारणम्, अप् प्रत्ययश्च भवित, भावेऽभिधेये । हवः । `हवे हवे सुहवं शूरमिन्द्रम्'(ऋ.6.7.11) ।
अनुपसर्गस्येति किम् ? आह्वायः । भावग्रहणम् "अकर्तरि च कारके संज्ञायाम्"(3.3.19/3188) इत्यस्य निरासार्थम् ।।
<हनश्च वधः ।। 3-3-76 ।।>
`भावे', `अनुपसर्गस्य' इति वर्तते । हन्तेर्धातोरनुपसर्गे भावे अप् प्रत्ययो भवति, तत्संनियोगेन च वधादेशः, स चान्तोदात्तः । तत्रोदात्तनिवृत्तिस्वरेणाप उदात्तत्वं भवति । वधश्चोराणाम् । वधो दस्यूनाम् । `भावे' इत्येव - घातः ।`अनुपसर्गस्य' इत्येव - प्रघातः, विघातः ।
चकारो भिन्नक्रमत्वान्नादेशेन सम्बध्यते, किं तर्हि ? प्रकृतेन प्रत्ययेन । अप् च, यश्चापरः प्राप्नोति । तेन घञपि भवति। घातो वर्त्तते ।।
<मूर्तौ घनः ।। 3-3-77 ।।>
`हनः' इत्येव । मूर्तिः = काठिन्यम् । मूर्तावभिधेयायां हन्तेरप् प्रत्ययो भवति, घनश्चादेशः । अभ्रघनः । दधिघनः ।
कथं घनं दधीति ? धर्मशब्देन धर्मी भण्यते ।।
<अन्तर्घनो देशे ।। 3-3-78 ।।>
अन्तः पूर्वाद्धन्तेरप् प्रत्ययो भवति, घनादेशश्च भवति, देशेऽभिधेये । अन्तर्घनः, संज्ञीभूतो वाहीकेषु देशविशेष उच्यते ।
अन्ये णकारं पठन्ति - अन्तर्घणो देश इति, तदपि ग्राह्यमेव ।
देश इति किम् ? अन्तर्घातोऽन्यः ।।
<अगारैकदेशे प्रघणः प्रघाणश्च ।। 3-3-79 ।।>
प्रपूर्वस्य हन्तेः प्रघण, प्रघाण इत्येतौ शब्दौ निपात्येते, अगारैकदेशे वाच्ये । प्रघणः । प्रघाणः । द्वारप्रकोष्ठो बाह्य उच्यते ।
अगारैकदेश इति किम् ? प्रघातोऽन्यः ।।
<उद्घनोऽत्याधानम् ।। 3-3-80 ।।>
उत्पूर्वस्य हन्तेरुद्घन इति निपात्यते, अत्याधानं चेद्भवति । उद्घनः, यस्मिन्काष्ठे स्थापयित्वा अन्यानि काष्ठानि तक्ष्यन्ते तदभिधीयते। उद्घातोऽन्यः ।।
<अपघनोऽङ्गम् ।। 3-3-81 ।।>
अपपूर्वस्य हन्तेरपघन इति निपात्यते, अङ्गं चेत्तद्भवति । अपघनः, अङ्गम् । (अत्र) अवयवो न सर्व एकदेशः, किं तर्हि ? पाणिः पादश्चाभिधीयते । अपघातोऽन्यः ।।
<करणेऽयोविद्रुषु ।। 3-3-82 ।।>
`हनः' इति वर्त्तते । अयस्, वि, द्रु इत्येतेषूपपदेषु हन्तेर्धातोः करणे कारकेऽप् प्रत्ययो भवति, घनादेशश्च । अयो हन्यतेऽनेनेत्ययोघनः । विघनः । द्रुघनः । द्रुघण इति केचिदुदाहरन्ति । कथं णत्वम् ? अरीहणादिषु पाठात् । "पूर्वपदात्संज्ञायामगः"(8.4.3/857) इति वा ।।
<स्तम्बे क च ।। 3-3-83 ।।>
`करणे' `हनः' इति वर्त्तते । स्तम्बशब्द उपपदे करणे कारके हन्तेः कः प्रत्ययो भवति । चकारादप्, तत्र घनादेशः । स्तम्बघ्नः । स्तम्बघनः ।
* स्त्रियां स्तम्बघ्ना स्तम्बघना इति इष्यते * । करण इत्येव, स्तम्बघातः ।।
<परौ घः ।। 3-3-84 ।।>
`करणे' `हनः' इत्येव । परिशब्द उपपदे हन्तेर्धातोरप् प्रत्ययो भवति, करणे कारके घशब्दश्चादेशः । परिहन्यतेऽनेनेति परिघः । पलिघः ।।
<उपघ्न आश्रये ।। 3-3-85 ।।>
उपपूर्वस्य हन्तेरप् प्रत्यय उपधालोपश्च निपात्यते । आश्रयशब्दः सामीप्यं प्रत्यासत्तिं लक्षयति । पर्वतोपघ्नः । ग्रामोपघ्नः ।
आश्रय इति किम् ? पर्वतोपघात एवान्यः ।।
<सङ्घोद्घौ गणप्रसंशयोः ।। 3-3-86 ।।>
समुदोरुपपदयोर्हन्तेर्द्धातोरप् प्रत्ययो भवति, टिलोपो घत्वं च निपात्यते, यथासङ्ख्यं गणेऽभिधेये प्रशंसायां गम्यमानायाम् । सङ्घः पशूनाम् । उद्घो मनुष्याणाम् ।।

गणप्रशंसयोरिति किम् ? सङ्घातः ।।

<निघो निमितम् ।। 3-3-87 ।।>

`निघ' इति निपूर्वाद्धन्तेरप् प्रत्ययष्टिलोपो घत्वं च निपात्यते, निमितं चेदभिधेयं भवति । समन्तान्मितम् = निमितम्, समारोहपरिणाहम् । निघा वृक्षाः । निघाः शालयः ।

निमितमिति किम् ? निघातः ।

<ड्वितः क्त्रिः ।। 3-3-88 ।।>

`भावे' `अकर्तरि च कारके' इति वर्तते । `डु' इद्यस्य तस्माद्ड्वितो धातोः क्त्रिः प्रत्ययो भवति । "क्त्रेर्मम्नित्यम्"(4.4.20/1570) इति वचनात् केवलो न प्रयुज्यते । `डुपचष् पाके'(धा.पा.997) पक्त्रिमम् । `डुवप्'(धा.पा.1004) उप्त्रिमम् ।

<ट्वितोऽथुच् ।। 3-3-89 ।।>

`टु' इद्यस्य तस्मात् ट्वितो धातोरथुच् प्रत्ययो भवति भावादौ । `टुवेपृ'(धा.पा.367)-वेपथुः । `टुओश्वि'(धा.पा.1011)-श्वयथुः । `टुक्षु'(धा.पा.1037)-क्षवथुः ।।

<यजयाचयतविच्छप्रच्छरक्षो नङ् ।। 3-3-90 ।।>

`भावे' `अकर्त्तरि च कारके' इति वर्तते । यजादिभ्यो धातुभ्यो नङ् प्रत्ययो भवति । ङकारो गुणवृद्धिप्रतिषेधार्थः । यज्ञः । याच्ञा यत्नः । विश्नः । प्रश्नः । रक्ष्णः ।

प्रच्छेरसम्प्रसारणं ज्ञापकात् -"प्रश्ने चासन्नकाले"(3.2.117/2777) इति ।।

<स्वपो नन् ।। 3-3-91 ।।>

स्वपेर्धातोर्नन् प्रत्ययो भवति । नकारः स्वरार्थः (6.1.197/3686)। स्वप्नः ।।

<उपसर्गे घोः किः ।। 3-3-92 ।।>

`भावे' `अकर्तरि च कारके' इति वर्तते । उपसर्गे उपपदे घुसंज्ञकेभ्यो धातुभ्यः किः प्रत्ययो भवति । कित्करणमातो लोपार्थम्(64.64/2372) । प्रदिः । प्रधिः । अन्तर्द्धिः ।।

<कर्मण्यधिकरणे च ।। 3-3-93 ।।>

`घोः' इत्येव । कर्मण्युपपदे घुसंज्ञकेभ्यो धातुभ्यः किः प्रत्ययो भवति, अधिकरणे कारके । जलं धीयतेऽस्मिन्निति जलधिः । शरधिः । अधिकरणग्रहणमर्थान्तरनिरासार्थम् । चकारः प्रत्ययानुकर्षणार्थः ।।

<स्त्रियां क्तिन् ।। 3-3-94 ।।>

`भावे' `अकर्तरि च कारके' इति वर्तते । स्त्रीलिङ्गे भावादौ धातोः क्तिन्प्रत्ययो भवति । घञजपामपवादः । कृतिः । चितिः। मतिः ।

* क्तिन्नाबादिभ्यश्च वक्तव्यः *(म.भा.2.151) । आबादयः प्रयोगतोऽनुसर्तव्याः ।

आप्तिः । राद्धिः । दीप्तिः । ध्वस्तिः । आस्तिः । लब्धिः ।

* श्रुयजिस्तुभ्य करणे *(म.भा.2.151) श्रूयतेऽनयेति श्रुतिः । इष्टिः । स्तुतिः ।

* ग्लाम्लाज्याहाभ्यो निः *(म.भा.2.152) । ग्लानिः । म्लानिः । ज्यानिः । हानिः ।

*ऋकारल्वादिभ्यः क्तिन्निष्ठावद्भवति इति वक्तव्यम् *(म.भा.2.152) । कीर्ण्णिः । गीर्ण्णिः । जीर्ण्णिः । शीर्ण्णिः । लूनिः । पूनिः ।

* सम्पदादिभ्यः क्विप् *(म.भा.2.152) । सम्पत् । विपत् । प्रतिपत् ।

* क्तिन्नपीष्यते * सम्पत्तिः । विपत्तिः ।।

<स्थागापापचो भावे ।। 3-3-95 ।।>

`स्त्रियाम्' इति वर्त्तते । स्थादिभ्यो धातुभ्यः स्त्रीलिङ्गे भावे क्तिन् प्रत्ययो भवति । अङोऽपवादस्य बाधकः । प्रस्थितिः । उद्गीतिः । सङ्गीतिः । प्रपीतिः । सम्पीति । पक्तिः । भावग्रहणमर्थान्तरनिरासार्थम् ।

कथमवस्था, संस्थेति ? "व्यवस्थायामसंज्ञयाम्"(1.1.34/218) इति ज्ञापकात् नात्यन्ताय बाधा भवतीति ।।

<मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः ।। 3-3-96 ।।>

`भावे' `स्त्रियाम्' इति वर्तते । मन्त्रे विषये वृषादिभ्यो धातुभ्यः क्तिन् प्रत्ययो भवति, उदात्तः । प्रकृतिप्रत्यययोर्विभक्तिविपरिणमेन सम्बन्धः । कस्मादेवं कृतम् ? वैचित्र्यार्थम् । `वृष्टिः'(ऋ.1.38.8) । `इष्टिः'(ऋ.44.7) । `पक्तिः'(ऋ.4.24.5) । `मतिः'(ऋ.1.141.1) । `वित्तिः'(वा.सं.1814) । `भूतिः',(वा.सं.18.14) । `वीतिः'(अ.वे.20.69.3) । `रातिः'(ऋ.1.34.1) ।

सर्वत्र सर्वधातुभ्यः सामान्येन विहित एव क्तिन् । उदात्तार्थं वचनम् । इषेस्तु इच्छेति निपातनं वक्ष्यति, ततः क्तिन्नपि विधीयते । मन्त्रादन्यत्रादिरुदात्तः ।।

<ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च ।। 3-3-97 ।।>

`मन्त्रे' इति नानुवर्त्तते । ऊत्यादयः शब्दा निपात्यन्ते । `उदात्तः' इति वर्त्तते । अवतेः "ज्वरत्वरस्रिव्यविमवामुपधायाश्च"(6.4.20/2654) इति ऊठ्। ऊतिः । स्वरार्थं वचनम् । यौतेर्जवतेश्च - यूतिः । जूतिः । दीर्घत्वं च निपात्यते । सातिः - स्यतेः इत्वाभावोऽपि निपात्यते । सनोतेर्वा "जनसनखनां सञ्झलोः"(6.4.42/2504) इत्यात्वे कृते स्वरार्थं निपातनम् । हन्तेर्हिनोतेर्वा हेतिः । कीर्त्तयतेः - कीर्त्तिः ।।

<व्रजयजोर्भावे क्यप् ।। 3-3-98 ।।>

`उदात्त' इत्येव । व्रजयजोर्धात्वोः स्त्रीलिङ्गे भावे क्यप् प्रत्ययो भवति, उदात्तः । क्तिनोऽपवादः । व्रज्या । इज्या । पित्करणमुत्तरत्र तुगर्थम् ।।

<संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः ।। 3-3-99 ।।>

`भावे' इति न स्वर्यते । पूर्व एवात्रार्थाधिकारः । समजादिभ्यो धातुभ्यः स्त्रियां क्यप् प्रत्ययो भवति उदात्तः, संज्ञायां विषये । समजन्त्यस्यामिति समज्या । निषद्या । निपत्या । मत्या । विद्या । सुत्या । शय्या । मृत्या । इत्या । कथं तदुक्तम् --

`स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिध्यति' इति ?

भावाधिकारः = भावव्यापारः वाच्यत्वेन विवक्षितः, न तु शास्त्रीयोऽधिकारः ।।

<कृञः श च ।। 3-3-100 ।।>

करोतेर्धातोः स्त्रियां श प्रत्ययो भवति । चकारात् क्यप् च । योगविभागोऽत्र कर्त्तव्यः क्तिन्नपि यथा स्यात् । क्रिया । कृत्या । कृतिः ।।

<इच्छा ।। 3-3-101 ।।>

इषेर्धातोः शः प्रत्ययो यगभावश्च निपात्यते । इच्छा ।

* परिचर्यापरिसर्यामृगयाटाट्यानामुपसङ्ख्यानम् *(म.भा.2.153) । परिचर्या । परिसर्या । मृगया । अटाट्या ।

* जागर्तेरकारो वा *(म.भा.2.153) । जागरा, जागर्या ।।

<अ प्रत्ययात् ।। 3-3-102 ।।>

प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारः प्रत्ययो भवति । क्तिनोऽपवादः । चिकीर्षा । जिहीर्षा । पुत्त्रीया । पुत्त्रकाम्या । लोलूया। कण्डूया ।।

<गुरोश्च हलः ।। 3-3-103 ।।>

हलन्तो यो धातुर्गुरुमान् ततः स्त्रियामकारः प्रत्ययो भवति । क्तिनोऽपवादः । कुण्डा । हुण्डा । ईहा । ऊहा ।

गुरोरिति किम् ? भक्तिः । हल इति किम् ? नीतिः ।।

<षिद्भिदादिभ्योऽङ् ।। 3-3-104 ।।>

षिद्भ्यो भिदादिभ्यश्च स्त्रियामङ् प्रत्ययो भवति । गणपठितेषु भिदादिषु निष्कृष्य प्रकृतयो गृह्यन्ते ।

जृष्--जरा । त्रपूष्--त्रपा ।

भिदादिभ्यः खल्वपि--भिदा । छिदा । विदा । क्षिपा । * गुहा गिर्योषध्योः * । श्रद्धा । मेधा । गोधा । आरा । हारा । कारा । क्षिया । तारा । धारा । लेखा। रेखा । चूडा । पीडा । वपा । वसा । सृजा । * क्रपेः सम्प्रसारणं च *(ग.सू.36) । कृपा । * भिधा विदारणे *(ग.सू.29) । भित्तिरन्या । * छिदा द्वैधिकरणे *(ग.सू.30)। छित्तिः अन्या । * आरा शस्त्र्याम् *(ग.सू.32)। आर्तिरन्या * धारा प्रपाते * धृतिरन्या ।।

<चिन्तिपूजिकथिकुम्बिचर्चश्च ।। 3-3-105 ।।>

`चिति स्मृत्याम्'(धा.पा.1536), `पूज पूजायाम्'(धा.पा.1643), `कथ वाक्यप्रबन्धे'(धा.पा.1852), `कुबि आच्छादने'(धा.पा.1656), `चर्च अध्ययने'(धा.पा.1713) चुरादिः, इत्येतेभ्यो धातुभ्यो युचि प्राप्ते स्त्रियामङ् प्रत्ययो भवति । चिन्ता । पूजा । कथा । कुम्बा । चर्चा । चकाराद्युजपि भवति - चिन्तना ।।

<आतश्चोपसर्गे ।। 3-3-106 ।।>

आकारान्तेभ्यो धातुभ्य उपसर्गे उपपदे स्त्रियामङ् प्रत्ययो भवति । क्तिनोऽपवादः । प्रदा । उपदा । प्रधा । उपधा ।

* श्रदन्तरोरुपसर्गवद् वृत्तिः * श्रद्धा । अन्तर्द्धा ।।

<ण्यासश्रन्थो युच् ।। 3-3-107 ।।>

ण्यन्तेभ्यो धातुभ्यः, आस, श्रन्थ इत्येताभ्यां च स्त्रियां युच्प्रत्ययो भवति । अकारस्यपवादः । कारणा । हारणा । आसना । श्रन्थना ।।

कथमास्या ? "ऋहलोर्ण्यत्"(3.1.124/2872) भविष्यति । वासरूपप्रतिषेधश्च स्त्रीप्रकरणविषयस्यैवोत्सर्गापवादस्य ।

श्रन्थिः क्र्यादिर्गृह्यते--`श्रन्थ विमोचनप्रतिहर्षयोः'(धा.पा.1511) इति, न चुरादिः-`श्रन्थ ग्रन्थ सम्दर्भे'(धा.पा.1839/1840) इति; ण्यन्तत्वेनैव सिद्धत्वात् ।।

* घट्टिवन्दिविधिभ्य उपसङ्ख्यानम् *(म.भा.2.154) । घट्टना । वन्दना । वेदना ।

घट्टेस्तौदादिकस्य ग्रहणम् -`घट्ट चलने'(धा.पा.259) इति, न चौरादिकस्य--`घट्ट संवरणे'(धा.पा.259) इत्यस्य ग्रहणम्; तस्य णेरित्येव सिद्धत्वात् ।

* इषेरनिच्छार्थस्य युज्वक्तव्यः *(म.भा.2.154) । अध्येषणा । अन्वेषणा ।।

* परेर्वा *(म.भा.2.154) । पर्येषणा, परीष्टिः ।।
<रोगाख्यायां ण्धुल्बहुलम् ।। 3-3-108 ।।>
रोगाख्यायां गम्यमानायां धातोर्बहुलं ण्वुल् प्रत्ययो भवति । क्तिन्नादीनामपवादः । आख्याग्रहणं रोगस्य चेत्प्रत्ययान्तेन संज्ञा भवति । बहुलग्रहणं व्यभिचारार्थम् । प्रच्छर्द्दिका । प्रवाहिका । विचर्चिका । न च भवति--शिरोऽर्त्तिः ।
* धात्वर्थनिर्द्देशे ण्वुल्वक्तव्यः *(म.भा.2.154) । आशिका । शायिका वर्त्तते ।।
* इक्श्तिपौ धातुनिर्देशे इति वक्तव्यम् *(म.भा.2.154) । भिदिः । छिदिः । पचतिः । पठतिः ।
* वर्णात्कारः *(म.भा.2.154) । निर्देश इति प्रकृतम् । अकारः । इकारः ।।
* रादिफः *(म.भा.2.154) । रेफः ।
* मत्वर्थाच्छः *(म.भा.2.155) । (अकारलोपश्च ।) मत्वर्थीयः ।
* इणजादिभ्यः *(म.भा.2.155) । आजिः । आतिः । आदिः ।।
* इक् कृष्यादिभ्यः *(म.भा.2.155) । कृषिः । किरिः ।।
<संज्ञायाम् ।। 3-3-109 ।।>
संज्ञायां विषये धातोर्ण्वुल् प्रत्ययो भवति । उद्दालकपुष्पभञ्जिका । वरणपुष्पप्रचायिका । अभ्यूषखादिका । आचोषखादिका । शालभञ्जिका । तालभञ्जिका ।।
<विभाषाख्यानपरिप्रश्नयोरिञ् च ।। 3-3-110 ।।>
पूर्वं परिप्रश्नः, पश्चादाख्यानम् ; सूत्रेऽल्पाच्तरस्य पूर्वनिपातः । परिप्रश्ने आख्याने च गम्यमाने धातोरिञ् प्रत्ययो भवति, चकाराद् ण्वुलपि । विभाषाग्रहणात्परोऽपि यः प्राप्नोति सोऽपि भवति । कां त्वं कारिमकार्षीः, कां कारिकामकार्षीः, कां क्रियामकार्षीः, कां कृत्यामकार्षीः, कां कृतिमकार्षीः ? सर्वां कारिमकार्षम्, सर्वां कारिकामकार्षम्, सर्वां कृतिमकार्षम्, सर्वां कृत्यामकार्षम्, सर्वां कृतिमकार्षम् । कां गणिमजीगणः ? कां गणनामजीगणः ?कां गणिकामजीगणः ? सर्वां गणिमजीगणम्, सर्वां गणिकाम्, सर्वां गणनाम् । एवं कां याजिम्, कां याजिकाम् ? कां याचितम्, कां याचिकाम् ? कां पाचिम्, कां पाचिकाम्, कां पचाम्, कां पक्तिम् ? कां पाठिम्, कां पाठिकाम्, कां पठितिम् ? इति द्रष्टव्यम् ।
आख्यानपरिप्रश्नयोरिति किम् ? कृतिः । हृतिः ।।
<पर्यायार्हर्णोत्पत्तिषु ण्वुच् ।। 3-3-111 ।।>
पर्यायः = परिपाटीक्रमः । अर्हणमर्हः = तद्योग्यता । ऋणं तद्यत् परस्य धार्यतेः, उत्पत्तिः = जन्म एतेष्वर्थेषु धातोर्ण्वुच् प्रत्ययो भवति । क्तिन्नादीनामपवादः । पर्याये तावत्--भवतः शायिका । भवतोऽग्रग्रासिका । अर्हे--अर्हति भवानिक्षुभक्षिकाम् । ऋणे--इक्षुभक्षिकां मे धारयसि । ओदनभोजिकाम् । पयः पायिकाम् । उत्पत्तौइक्षुभक्षिका मे उदपादि । ओदनभोजिका । पयः पायिका ।
विभाषेत्येव--चिकीर्षोत्पद्यते । ण्वुलि प्रकृते प्रत्ययान्तरकरणं स्वरार्थम् ।।
<आक्रोशे नञ्यनिः ।। 3-3-112 ।।>
`विभाषा' इति निवृत्तम् । आक्रोशः = शपनम् । आक्रोशे गम्यमाने नञ्युपपदे धातोरनिः प्रत्ययो भवति । क्तिन्नादीनामपवादः । अकरणिस्ते वृषल भूयात् । आक्रोश इति किम् ? अकृतिस्तस्य कटस्य । नञीति किम् ? मृतिस्ते वृषल भूयात् ।।
<कृत्यल्युचो बहुलम् ।। 3-3-113 ।।>
`भावे' `अकर्त्तरि च कारके' इति निवृत्तम् । कृत्यसंज्ञकाः प्रत्यया ल्युट् च बहुलमर्थेषु भवन्ति । यत्र विहितास्ततोऽन्यत्रापि भवन्ति । भावकर्मणोः कृत्या विहिताः कारकान्तरेऽपि भवन्ति--स्नानीयं चूर्णम्, दानीयो ब्राह्मणः । करणाधिकरणयोर्भावे च ल्युट् ।
अन्यत्रापि भवति--अपसेचनम्, अवस्रावणम् । राजभोजनाः शालयः । राजाच्छादनानि वासांसि । प्रस्कन्दनम् । प्रपतनम् ।
बहुलग्रहणादन्येऽपि कृतो यथाप्राप्तमभिधेयं व्यभिचरन्ति। पादाभ्यां ह्रियते पादहारकः । गले चोप्यते गलेचोपकः ।।
<नपुंसके भावे क्तः ।। 3-3-114 ।।>
नपुंसकलिङ्गे भावे धातोः क्तः प्रत्ययो भवति । हसितम् । सहितम् । जल्पितम् ।।
<ल्युट् च ।। 3-3-115 ।।>
नपुंसकलिङ्गे भावे धातोर्ल्युट् प्रत्ययो भवति । हसनं छात्रस्य । शोभनम् । जल्पनम् । शयनम् । आसनम् । योगविभाग उत्तरार्थः ।।
<कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम् ।। 3-3-116 ।।>
येन कर्मणा संस्पृश्यमानस्य कर्तुः शरीरसुखमुत्पद्यते तस्मिन्कर्मण्युपपदे धातोर्नपुंसकलिङ्गे भावे ल्युट् प्रत्ययो भवति । पूर्वेणैव सिद्धे प्रत्यये नित्यसमासार्थं वचनम् । उपपदसमासो हि नित्यः समासः । पयः पानं सुखम् । ओदनभोजनं सुखम् ।
कर्मणीति किम् ? तूलिकाया उत्थानं सुखम् । संस्पर्शादिति किम् ? अग्निकुण्डस्योपासनं सुखम् । कर्तुरिति किम् ? गुरोः स्नापनं सुखम् । स्नापयतेर्न गुरुः कर्त्ता, किं तर्हि ? कर्म । शरीरग्रहणं किम् ? पुत्तस्य परिष्वञ्जनं सुखम् । सुखम् = मानसी प्रीतिः । सुखमिति किम् ? कण्टकानां मर्दनं दुःखम् ।

सर्वत्रासमासः प्रत्युदाह्रियते ।।

<करणाधिकरणयोश्च ।। 3-3-117 ।।>

करणेऽधिकरणे च कारके धातोर्ल्युट् प्रत्ययो भवति । इध्मप्रव्रश्चनः । पलाशशातनः । अधिकरणे--गोदोहनी । सक्तुधानी ।।

<पुंसि संज्ञायां घः प्रायेण ।। 3-3-118 ।।>

`करणाधिकरणयोः' इत्येव । पुंल्लिङ्गयोः करणाधिकरणयोरभिधेययोर्धातोर्घः प्रत्ययो भवति, समुदायेन चेत्संज्ञा गम्यते । प्रायग्रहणमकार्त्स्न्यार्थम् । दन्तच्छदः पटः । अधिकरणे खल्वपि--एत्य तस्मिन्कुर्वन्ति इत्याकरः । आलयः ।

पुंसीति किम् ? प्रसाधनम् । संज्ञायामिति किम् ? प्रहरणो दण्डः । घकारः "छादेर्घेऽद्व्युपसर्गस्य"(6.4.96/3297) इति विशेषणार्थः ।।

<गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च ।। 3-3-119 ।।>

गोचरादयः शब्दा घप्रत्ययान्ता निपात्यन्ते पूर्वस्मिन्नेवार्थे । "हलश्च"(3.3.121/3300) इति घञं वक्ष्यति, तस्यायमपवादः । गावश्चरन्त्यस्मिन्निति गोचरः । सञ्चरन्तेऽनेनेति सञ्चरः । वहन्ति तेन वहः । व्रजन्ति तेन व्रजः। व्यजन्ति तेन व्यजः । निपातनाद् "अजेर्व्यघञपोः"(2.4.56/2292) इति वीभावो न भवति । एत्य तस्मिन्नापणन्ते इत्यापणः । निगच्छन्ति तस्मिन्निति निगमः । चकारोऽनुक्तसमुच्चयार्थः । कषः । निकषः ।।

<अवेतस्त्रोर्घञ् ।। 3-3-120 ।।>

`अव' उपपदे तरतेस्स्तृणातेश्च धातोः करणाधिकरणयोः संज्ञायां घञ् प्रत्ययो भवति । घस्यापवादः । ञकारो वृद्ध्यर्थः, स्वरार्थश्च । घकार उत्तरत्र कुत्वार्थः । अवतारः । अवस्तारः ।

कथमवतारो नद्याः ? न हीयं संज्ञा । प्रायानुवृत्तेरसंज्ञायामपि भवति ।।

<हलश्च ।। 3-3-121 ।।>

`पुंसि संज्ञायाम्', `करणाधिकरणयोश्च' इति सर्वमनुवर्त्तते । हलन्ताद्धातोः करणाधिकरणयोर्घञ् प्रत्ययो भवति । घस्यापवादः । लेखः । वेदः । वेष्टः । बन्धः । मार्गः । अपामार्गः । वीमार्गः ।।

<अध्यायन्यायोद्यावसंहाराधारावायाश्च ।। 3-3-122 ।।>

अध्यायादयः शब्दा घञन्ता निपात्यन्ते । पुंसि संज्ञायां घे प्राप्ते घञ्विधीयते । अहलन्तार्थ आरम्भः । अधीयतेऽस्मिन्नित्यध्यायः । नीयतेऽनेनेति न्यायः । उद्युवन्ति अस्मिन्नित्युद्यावः । संह्रियन्तेऽनेनेति संहारः । आध्रियतेऽस्मिन्नित्याधारः । आवयन्त्यस्मिन्नित्यावायः । चकारोऽनुक्तसमुच्चयार्थः--अवहारः ।।

<उदङ्कोऽनुदके ।। 3-3-123 ।।>

`उदङ्कः' इति निपात्यते, अनुदकविषयश्चेद्धात्वर्थो भवति । उत्पूर्वादञ्चतेर्घञ्निपात्यते, ननु च "हलश्च"(3.3.121/3300) इति सिद्ध एव घञ् ? उदके प्रतिषेधार्थमिदं वचनम् । तैलोदङ्कः ।

अनुदक इति किम् ? उदकोदञ्चनः । घः कस्मान्न प्रत्युदाह्रियते ? विशेषाभावात् । घञ्यपि थाथादिस्वरेणान्तोदात्त एव ।।

<जालमानायः ।। 3-3-124 ।।>

`आनायः' इति निपात्यते, जालं चेत्तद्भवति । आङ् पूर्वान्नयतेः करणे घञ् निपात्यते । आनायो मत्स्यानाम् । आनायो मृगाणाम् ।।

<खनो घ च ।। 3-3-125 ।।>

खनतेर्धातोः करणाधिकरणयोर्घः प्रत्ययो भवति । चकाराद् घञ्च । आखनः, आखानः ।

* डो वक्तव्यः *(म.भा.2.156) । आखः ।

* डरो वक्तव्यः *(म.भा.2.156) । आखरः ।

* इको वक्तव्यः *(म.भा.2.156) । आखनिकः ।

* इकवको वक्तव्यः *(म.भा.2.156) । आखनिकवकः ।।

<ईषद्दुः सुषु कृच्छ्राकृच्छ्रार्थेषु खल् ।। 3-3-126 ।।>

`करणाधिकरणयोः' इति निवृत्तम् । ईषत्, दुस्, सु इत्येतेषूपपदेसु कृच्छ्राकृच्छ्रार्थेषु धातोः खल् प्रत्ययो भवति । कृच्छ्रं दुःखम्, तद् दुरो विशेषणम् । अकृच्छ्रं सुखम् , तदितरयोर्विशेषणम्; सम्भवात् । ईषत्करो भवता कटः । दुष्करः । सुकरः । ईषद्भोजः । दुर्भोजः । सुभोजः ।

ईषदादिष्विति किम् ? कृच्छ्रेण कार्यः कटः । कृच्छ्राकृच्छ्रार्थेष्विति किम् ? ईषत्कार्यः ।

लकारः स्वरार्थः । खित्करणमुत्तरत्र मुमर्थम् ।।

<कर्तृकर्मणोश्च भूकृञोः ।। 3-3-127 ।।>

भवतेः करोतेश्च धातोर्यथासङ्ख्यं कर्त्तरि कर्मणि चोपपदे, चकारादीषदादिषु च खल् प्रत्ययो भवति । ईषदाढ्यम्भवं भवता । दुराढ्यम्भवम् । ईषदाढ्यङ्करः, स्वाढ्यङ्करो देवदत्तो भवता ।।

* कर्तृकर्मणोश्च्व्यर्थयोरिति वक्तव्यम् *(म.भा.2.157) । इह मा भूत्--स्वाढ्येन भूयते ।।

<आतो युच् ।। 3-3-128 ।।>

ईषदादयोऽनुवर्त्तन्ते । `कर्तृकर्मणोः' इति न स्वर्यते । कृच्छ्राकृच्छ्रार्थेषु ईषदादिषूपपदेषु आकारान्तेभ्यो धातुभ्यो युच् प्रत्ययो भवति । खलोऽपवादः । ईषत्पानः सोमो भवता । दुष्पानः । सुपानः । ईषद्दानो गौर्भवता । दुर्दानः। सुदानः ।।

<छन्दसि गत्यर्थेभ्यः ।। 3-3-129 ।।>

ईषदादिषु कृच्छ्राकृच्छ्रार्थेषूपपदेषु गत्यर्थेभ्यो धातुभ्यश्छन्दसि विषये युच्प्रत्ययो भवति । खलोऽपवादः । `सूपसदनोऽग्निः'(तै.सं.7.5.20.1) । सूपसदनमन्तरिक्षम् ।।

<अन्येभ्योऽपि दृश्यते ।। 3-3-130 ।।.

अन्येभ्योऽपि धातुभ्यो गत्यर्थेभ्यश्छन्दसि विषये युच्प्रत्ययो दृश्यते । `सुदोहनामकृणोद् ब्रह्मणे गाम्'(नि.11.43) । `सुवेदनामकृणोद् ब्रह्मणे गाम्'(ऋ.10.112.8) ।।

* भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज् वक्तव्यः *(म.भा.2.157) । दुःशासनः । दुर्योधनः । दुर्दर्शनः । दुर्द्धर्षणः । दुर्मर्षणः ।।

<वर्त्तमानसामीप्ये वर्त्तमानवद्वा ।। 3-3-131 ।।>

समीपमेव सामीप्यम् । ष्यञः स्वार्थिकत्वं ज्ञाप्यते चातुर्वर्ण्यादिसिद्ध्यर्थम् । वर्त्तमानसमीपे भूते भविष्यति च वर्त्तमानाद् धातोर्वर्त्तमानवत्प्रत्यया वा भवन्ति । "वर्त्तमाने लट्"(3.2.123/2151) इत्यारभ्य यावद् "उणादयो बहुलम्"(3.3.1/3169) इति वर्त्तमाने प्रत्यया उक्तास्ते भूतभविष्यतोर्विधीयन्ते । कदा देवदत्त आगतोऽसि ? अयमागच्छामि, आगच्छन्तमेव मां विद्धि, अयमागमम्, एषोऽस्म्यागतः । कदा देवदत्त गमिष्यसि ? एष गच्छामि, गच्छन्तमेव मां विद्धि, एष गमिष्यामि, गान्तास्मि ।

वत्करणं सर्वसादृश्यार्थम् । येन विशेषेण वर्त्तमाने प्रत्यया विहिताः प्रकृत्योपपदोपाधिना तथैवात्र भवन्ति । पवमानः । यजमानः । अलङ्करिष्णुः । सामीप्यग्रहणं किम् ? विप्रकर्षविवक्षायां मा भूत् । परुदगच्छत् पाटलिपुत्त्रम् । वर्षेण गमिष्यति ।

यो मन्यते - "गच्छामीति पदं वर्त्तमाने काल एव वर्त्तते, कालान्तरगतिस्तु वाक्याद्भवति । न च वाक्यगम्यः कालः पदसंस्कारवेलायामुपयुज्यते" इति, तादृशं वाक्यार्थप्रतिपत्तारं प्रति प्रकरणमिदं नारभ्यते, तथा च - श्वः करिष्यति, वर्षेण गमिष्यतीति सर्वमुपपद्यते ।।

<आशंसायां भूतवच्च ।। 3-3-132 ।।>

`वा' इत्येव । `वर्त्तमानसामीप्ये' इति नानुवर्त्तते । आशंसनमाशंसा = अप्राप्तस्य प्रियार्थस्य प्राप्तुमिच्छा, तस्याश्च भविष्यत्कालो विषयः । तत्र भविष्यति काले आशंसायां गम्यमानायां धातोर्वा भूतवत्प्रत्यया भवन्ति, चकाराद्वर्त्तमानवच्च । उपाध्यायश्चेदागमत्, आगतः, आगच्छति, आगमिष्यति, एते व्याकरणमध्यगीष्महि, एते व्याकरणमधीतवन्तः, अधीमहे, अध्येष्यामहे ।

सामान्यातिदेशे विशेषानतिदेशाल्लङ् लिटौ न भवतः ।

आशंसायामिति किम् ? आगमिष्यति ।।

<क्षिप्रवचने लृट् ।। 3-3-133 ।।>

`आशंसायाम्' इत्येव । क्षिप्रवचन उपपदे आशंसायां गम्यमानायां धातोर्लृट् प्रत्ययो भवति । `भूतवच्च' इत्यस्यायमपवादः ।

उपाध्यायश्चेत्क्षिप्रमागमिष्यति, क्षिप्रं व्याकरणमध्येष्यामहे ।

वचनग्रहणं पर्यायार्थम् । क्षिप्रम्, शीघ्रम्, आशु, त्वरितम् अध्येष्यामहे । `न' इति वक्तव्ये लृड्ग्रहणं लुटोऽपि विषये यथा स्यात् श्वः क्षिप्रमध्येष्यामहे ।।

<आशंसावचने लिङ् ।। 3-3-134 ।।>

आशंसा येनोच्यते तदाशंसावचनम्, तस्मिन्नुपपदे धातोर्लिङ् प्रत्ययो भवति । `भूतवच्च' इत्यस्यायमपवादः । उपाध्यायश्चेदागच्छेत् आशंसे युक्तोऽधीयीय । आशंसेऽवकल्पये युक्तोऽधीयीय । आशंसे क्षिप्रमधीयीय ।।

<नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः ।। 3-3-135 ।।>

भूतानद्यतने भविष्यदनद्यतने च लङ् लुटौ विहितौ, तयोरयं प्रतिषेधः । अनद्यतनवत्प्रत्ययविधिर्न भवति, क्रियाप्रबन्धे सामीप्ये च गम्यमाने । क्रियाणां प्रबन्धः = सातत्येनानुष्ठानम् । कालानां सामीप्यम् = तुल्यजातीयेनाव्यवधानम् । यावज्जीवं भृशमन्नमदात् । भृशमन्नं दास्यति । यावज्जीवं पुत्त्रोऽध्यापिपत् ।। यावज्जीवमध्यापयिष्यति।

सामीप्ये खल्वपि - येयं पौर्णमास्यतिक्रान्ता, एतस्यामुपाध्यायोऽग्नीनाधित, सोमेनायष्ट, गामदित । येयममावास्याऽऽगामिनी, एतस्यामुपाध्यायोऽग्नीनाधास्यते, सोमेन यक्ष्यते । स गां दास्यते ।

द्वौ प्रतिषेधौ यथाप्राप्तस्याभ्यनुज्ञापनाय ।।

<भविष्यति मर्यादावचनेऽवरस्मिन् ।। 3-3-136 ।।>

`नानद्यतनवत्' इति वर्त्तते । अक्रियाप्रबन्धार्थमसामीप्यार्थञ्च वचनम् । भविष्यति काले मर्यादावचने सत्यवरस्मिन्प्रविभागेऽनद्यतनवत्प्रत्ययविधिर्न भवति । योऽयमध्वा गन्तव्य आपाटलिपुत्त्रात् तस्य यदवरं कौशाम्ब्यास्तत्र द्विरोदनं भोक्ष्यामहे । तत्र सक्तून्पास्यामः ।

भविष्यतीति किम् ? योऽयमध्वा गत आपाटलिपुत्त्रात् तस्य यदवरं कौशाम्ब्यास्तत्र द्विरोदनं भोक्ष्यामहे । तत्र सक्तून्पास्यामः ।

भविष्यतीति किम् ? योऽयमध्वा गत आपाटलिपुत्त्रात् तस्य यदवरं कौशाम्ब्यास्तत्र युक्ता अध्यैमहि, तत्र द्विरोदनम् अभुञ्ज्महि, तत्र सक्तूनपिबाम ।
मर्यादावचन इति किम् ? योऽयमध्वा निरवधिको गन्तव्यस्तस्य यदवरं कौशाम्ब्यास्तत्र द्विरोदनं भोक्तास्महे, सक्तून् पातास्मः । अवरस्मिन्निति किम् ?
योऽयमध्वा गन्तव्य आपाटलिपुत्त्रात् तस्य यत्परं कौशाम्ब्यास्तत्र द्विरोदनं भोक्तास्महे, तत्र सक्तून्पातास्मः ।
इह सूत्रे देशकृता मर्यादा, उत्तरत्र कालकृताः, तत्र च विशेषं वक्ष्यति ।।

<कालविभागे चानहोरात्राणाम् ।। 3-3-137 ।।>

`भविष्यति' मर्यादावचनेऽवरस्मिन्' इति वर्त्तते । कालमर्यादाविभागे सत्यवरस्मिन्प्रविभागे भविष्यति कालेऽनद्यतनवत्प्रत्ययविधिर्न भवति, न चेदहोरात्रसम्बन्धी विभागः, तैस्तेषां च विभागे प्रतिषेधः । पूर्वेणैव सिद्धे वचनमिदमहोरात्रनिषेधार्थम् । योगविभाग उत्तरार्थः । योऽयं संवत्सर आगामी तत्र यदवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे, तत्रौदनं भोक्ष्यामहे।`भविष्यति' इत्येव - योऽयं वत्सरोऽतीतस्तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्यैमहि, तत्रौदनमभुञ्ज्महि ।

`मर्यादावचने' इत्येव - योऽयं निरवधिकः काल आगामी तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येतास्महे, तत्रौदनं भोक्तास्महे ।`अवरस्मिन्' इत्येव । परस्मिन्विभाषां(3.3.138/2796) वक्ष्यति। अनहोरात्राणामिति किम् ? त्रिविधमुदाहरणम् - योऽयं मास आगामी तस्य योऽवरः पञ्चदशरात्रः, योऽयं त्रिंशद्रात्र आगामी तस्य योऽवरोऽर्द्धमासः, योऽयं त्रिंशदहोरात्र आगामी तस्य योऽवरः पञ्चदशरात्रस्तत्र युक्ता अध्येतास्महे, तत्र सक्तून्पातास्मः । सर्वथा अहोरात्रस्पर्शे प्रतिषेधः ।।

<परस्मिन्विभाषा ।। 3-3-138 ।।>

`भविष्यति मर्यादावचने' `कालविभागे चानहोरात्राणाम्' इति सर्वमनुवर्त्तते । कालमर्यादाविभागे सति भविष्यति काले परस्मिन्प्रविभागे विभाषाऽनद्यतनवत्प्रत्ययविधिर्न भवति, न चेदहोरात्रसम्बन्धी प्रविभागः । अवरस्मिन्वर्जं पूर्वमनुवर्त्तते । अवरस्मिन्पूर्वेण प्रतिषेध उक्तः, सम्प्रति परस्मिन्नप्राप्त एव विकल्प उच्यते । योऽयं संवत्सर आगामी तस्य यत्परमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे, अध्येतास्महे, तत्र सक्तून् पास्यामः, तत्र सक्तून्पातास्मः ।
`अनहोरात्राणाम्' इत्येव - योऽयं त्रिंशद्रात्र आगामी तस्य यः परः पञ्चदशरात्रस्तत्र युक्ता अध्येतास्महे, तत्र सक्तून् पातास्मः ।
`भविष्यति' इत्येव - योऽयं संवत्सरोऽतीतस्तस्य यत्परमाग्रहायण्यास्तत्र युक्ता अध्यैमहि, तत्रौदनमभुञ्ज्महि ।
`मर्यादावचने' इत्येव - योऽयं संवत्सरो निरवधिकः काल आगामी तस्य यत्परमाग्रहायण्यास्तत्र युक्ता अध्येतास्महे, तत्र सक्तून्पातस्मः ।
`कालविभागे' इत्येव - योऽयमध्वा गन्तव्य आपाटलिपुत्त्रात् तस्य यत्परं कौशाम्ब्यास्तत्र युक्ता अध्येतास्महे, ओदनं भोक्तास्महे । इति सर्वत्रानद्यतनवत्प्रत्यया उदाहार्याः ।।

<लिङ्निमित्ते लृङ् क्रियातिपत्तौ ।। 3-3-139 ।।>

`भविष्यति' इत्यनुवर्त्तते । "हेतुहेतुमतोर्लिङ्"(3.3.156/2813) इत्येवमादिकं लिङो निमित्तम् । तत्र लिङ्निमित्ते भविष्यति काले लृङ् प्रत्ययो भवति क्रियातिपत्तौ सत्याम् । कुतश्चिद्वैगुण्यादनभिनिर्वृत्तिः क्रियायाः = क्रियातिपत्तिः । दक्षिणेन चेदायास्यन्न शकटं पर्याभविष्यत् । यदि कमलकमाह्वास्यद्दक्षिणेन मार्गेणन्न शकटं पर्याभविष्यत् ।। अभोक्ष्यत भवान्घृतेन यदि मत्समीपमागमिष्यत् ।।
भविष्यत्कालविषयमेतद्वचनम्, भविष्यदपर्याभवनं च हेतुमत्, तत्र हेतुभूतं च कमलकाह्वानम् । लिङ्गिलिङ्गे बुध्वा तदतिपत्तिं च प्रमाणान्तरादगम्य वक्ता वाक्यं प्रयुङ्क्ते,यदि कमलकमाह्वास्यन्न शकटं पर्याभविष्यदिति, हेतुहेतुमतोराह्वानापर्याभवनयोर्भविष्यत्कालविषययोरतिपत्तिरितो वाक्यादवगम्यते ।।

<भूते च ।। 3-3-140 ।।>

`लिङ् निमित्ते लृङ् क्रियातिपत्तौ' इति सर्वमनुवर्त्तते । पूर्वेण भविष्यति विहितः सम्प्रति भूते विधीयते । भूते च काले लिङ् निमित्ते क्रियातिपत्तौ सत्यां लृङ् प्रत्ययो भवति । "उताप्योः समर्थयोर्लिङ्"(3.3.152/2809) इत्यारभ्य लिङ् निमित्तेषु विधानमेतत् । प्राक् ततो विकल्पं वक्ष्यति । दृष्टो मया भवत्पुत्त्रोऽन्नार्थी चङ्क्रम्यमाणः, अपरश्च द्विजो ब्राह्मणार्थी, यदि स तेन दृष्टोऽभविष्यत् तदाऽभोक्ष्यत, न तु भुक्तवान्, अन्येन पथा स गतः ।।

<वोताप्योः ।। 3-3-141 ।।>

`भूते' `लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इति सर्वमनुवर्त्तते । वा + आ + उताप्योः = वोताप्योः । मर्यादायामयमाङ्, नाभिविधौ । "उताप्योः समर्थयोर्लिङ्"(3.3.152/2809) इति वक्ष्यति, प्रागेतस्मात् सूत्रावधेर्यदित ऊर्ध्वमनुक्रमिष्यामः, तत्र भूते लिङ्निमित्ते क्रियातिपत्तौ लृङ् वा भवतीत्येतदधिकृतं वेदितव्यम् । वक्ष्यति - "विभाषा कथमि लिङ् च"(3.3.143/2800), कथं नाम तत्र भवान्वृषलमयाजयिष्यत् । यथाप्राप्तं च - याजयेत् ।।

<गर्हायां लडपिजात्वोः ।। 3-3-142 ।।>

गर्हा, कुत्सेत्यनर्थान्तरम् । गर्हायां गम्यमानायाम् अपिजात्वोरुपपदयोर्धातोर्लट् प्रत्ययो भवति । "वर्त्तमाने लट्"(3.2.123/2151)उक्तः कालसामान्ये न प्राप्नोतीति विधीयते । कालविशेषविहितांश्चापि प्रत्ययानयं परत्वाद् अस्मिन्विषये बाधते । अपि तत्र भवान्वृषलं याजयति, जातु तत्र भवान्वृषलं याजयति । गर्हामहे, अहो अन्याय्यमेतत् ।। लिङ्निमित्ताभावादिह क्रियातिपत्तौ लृङ् न भवति ।।

<विभाषा कथमि लिङ् च ।। 3-3-143 ।।>

`गर्हायाम्' इति वर्त्तते । कथंशब्दे उपपदे गर्हायां गम्यमानायां धातोर्लिङ्प्रत्ययो भवति, चकाराल्लट् च । विभाषाग्रहणं यथास्वं कालविषये विहितानामबाधनार्थम् । कथं नाम तत्र भवान्वृषलं याजयेत्, कथं नाम तत्र भवान्वृषलं याजयति, कथं नाम तत्र भवान्वृषलं याजयिष्यति । कथं नाम तत्र भवान्वृषलं याजयिता । कथं नाम तत्र भवान्वृषलं याजयेत् । कथं नाम तत्र भवान्वृषलमयीयजत् । अयाजयत् । कथं नाम तत्र भवान्वृषलं याजयाञ्चकार । अत्र लिङ्निमित्तमस्तीति भूतविवक्षायां क्रियातिपत्तौ वा लृङ् । भविष्यद्विवक्षायां सर्वत्र नित्येनैव लृङा भवितव्यम् ।

<किंवृत्ते लिङ् लृटौ ।। 3-3-144 ।।>

`गर्हायाम्' इत्येव । विभाषा न स्वर्यते । किंवृत्त उपपदे गर्हायां गम्यमानायां धातोर्लिङ्लृटौ प्रत्ययौ भवतः । सर्वलकाराणामपवादः । लिङ्ग्रहणं लटोऽपरिग्रहार्थम् । को नाम वृषलो यं तत्र भवान् याजयेत् । यं तत्र भवान्वृषलं याजयिष्यति । कतरो नाम, कतमो नाम यं तत्र भवान्वृषलं याजयेत् । याजयिष्यति । भूते क्रियातिपत्तौ वा लृङ् । भविष्यति तु नित्यम् - को नाम वृषलो यं तत्र भवानयाजयिष्यत् ।।

<अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि ।। 3-3-145 ।।>

`गर्हायाम्' इति निवृत्तम् । अनवक्लृप्तिः= असम्भावना । अमर्षः = अक्षमा । किंवृत्तेऽकिंवृत्ते चोपपदेऽनवक्लृप्त्यमर्षयोर्धातोर्लिङ्लृटौ प्रत्ययौ भवतः । सर्वलकाराणामपवादः । बह्वचः पूर्वनिपातो लक्षणव्यभिचारचिह्नम्, तेन यथासङ्ख्यं न भवति । अनवक्लृप्तौ तावत् नावकल्पयामि, न सम्भावयामि, न श्रद्दधे तत्र भवान्नाम वृषलं याजयेत् । तत्र भवान्नाम वृषलं याजयिष्यति । को नाम वृषलो यं तत्र भवान् वृषलं याजयेत् । को नाम तत्र भवान्वृषलं याजयिष्यति । अमर्षे - न मर्षयामि तत्र भवान्वृषलं याजयेत् । याजयिष्यति । को नाम वृषलो यं तत्र भवान्याजयेत्, याजयिष्यति । भूतविवक्षायां तु क्रियातिपत्तौ वा लृङ् भवति भविष्यति नित्यम् - नावकल्पयामि तत्र भवान्नाम वृषलमयाजयिष्यत् ।।

<किंकिलास्त्यर्थेषु लृट् ।। 3-3-146 ।।>

`अनवक्लृप्त्यमर्षयोः' इति वर्त्तते । किंकिलशब्दः समुदाय एवोपपदम् । अस्त्यर्थाः = अस्तिभवतिविद्यतयः । किंकिलास्त्यर्थेषूपपदेषु अनवक्लृप्त्यमर्षयोर्धातोर्लृट्प्रत्ययो भवति । लिङोऽपवादः । किंकिल नाम तत्र भवान्वृषलं याजयिष्यति । अस्ति नाम तत्र भवान्वृषलं याजयिष्यति । भवति नाम तत्र भवान्वृषलं याजयिष्यति । विद्यते नाम तत्र भवान्वृषलं याजयिष्यति, न श्रद्दधे, न मर्षयामि । लिङ्निमित्तमिह नास्ति, तेन लृङ् न भवति ।।

<जातुयदोर्लिङ् ।। 3-3-147 ।।>

`अनवक्लृप्त्यमर्षयोः' इत्येव । जातु, यदा इत्येतयोरुपपदयोरनवक्लृप्त्यमर्षयोर्गम्यमानयोर्धातोर्लिङ्प्रत्ययो भवति । लृटोऽपवादः । जातु तत्र भवान्वृषलं याजयेत् , यन्नाम तत्र भवान्वृषलं याजयेत् न श्रद्दधे, न मर्षयामि ।।

* जातुयदोर्लिङ् विधाने यदायद्योरुपसङ्ख्यानम् *(म.भा.2.164) यदा भवद्विधः क्षत्त्रियं याजयेत्, यदि भवद्विधः क्षत्त्रियं याजयेत्, न श्रद्दधे न मर्षयामि । क्रियातिपत्तौ भूते वा लृङ्। भविष्यति नित्यम् ।।

<यच्चयत्रयोः ।। 3-3-148 ।।>

`अनवक्लृप्त्यमर्षयोः' इत्येव । यच्च, यत्र इत्येतयोरुपपदयोरनवक्लृप्त्यमर्षयोर्गम्यमानयोर्धातोर्लिङ् प्रत्ययो भवति । लृटोऽपवादः । योगविभाग उत्तरार्थः । यथासङ्ख्यं नेष्यते । यच्च तत्रभवान् वृषलं याजयेत् । यत्र तत्रभवान् वृषलं याजयेत् । क्रियातिपत्तौ यथायथं लृङ् भवति ।

<गर्हायां च ।। 3-3-149 ।।>

`अनवक्लृप्त्यमर्षयोः' इति निवृत्तम् । गर्हा, निन्दा, कुत्सा इत्यनर्थान्तरम् । यच्च, यत्र इत्येतयोरुपपदयोर्धातोर्लिङ् प्रत्ययो भवति गर्हायां गम्यमानायाम् । सर्वलकाराणामपवादः । यच्च तत्रभवान् वृषलं याजयेत्, यत्र तत्रभवान् वृषलं याजयेद् ऋद्धो वृद्धः सन् ब्राह्मणः, गर्हामहे, अहो अन्याय्यमेतत् । क्रियातिपत्तौ यथायथं लृङ् भवति ।।

<चित्रीकरणे च ।। 3-3-150 ।।>

`यच्चयत्रयोः' इत्येव । चित्रीकरणम् = आश्चर्यम्, अद्भुतम्, विस्मयनीयम् । यच्च-यत्रयोरुपपदयोश्चित्रीकरणे गम्यमाने धातोर्लिङ्प्रत्ययो भवति । सर्वलकाराणामपवादः । यच्च तत्र भवान्वृषलं याजयेत, यत्र तत्र भवान्वृषलं याजयेत, आश्चर्यमेतत् । क्रियातिपत्तौ यथायथं लृङ् भवति ।।

<शेषे लृडयदौ ।। 3-3-151 ।।>

यच्चयत्राभ्यामन्यत्र चित्रीकरणं शेषः । शेषे उपपदे चित्रीकरणे गम्यमाने धातोलृट् प्रत्ययो भवति, यदिशब्दश्चेन्न प्रयुज्यते । सर्वलकाराणामपवादः । आश्चर्यम्, चित्रम्, अद्भुतम्, अन्धो नाम पर्वतमारोक्ष्यति । बधिरो नाम व्याकरणमध्येष्यते ।

अयदाविति किम् ? आश्चर्यं यदि स भुञ्जीत । यदि सोऽधीयीत । लिङ्निमित्ताभावादिह लृङ् न भवति ।।

<उताप्योः समर्थलोर्लिङ् ।। 3-3-152 ।।>

उत, अपि इत्येतयोः समर्थयोर्धातोर्लिङ् प्रत्ययो भवति । सर्वलकाराणामपवादः । बाढमित्यस्मिन्नर्थे समानार्थत्वमनयोः । उत कुर्यात् । अपि कुर्यात् । उताधीयीत । अप्यधीयीत । बाढमध्येष्यत इत्यर्थः ।

समर्थयोरिति किम् ? उत दण्डः पतिष्यति । अपि द्वारं धास्यति । प्रश्नः प्रच्छादनं च गम्यते । "वोताप्योः"(3.3.141/2798) इति विकल्पो निवृत्तः । इतः प्रभृति भूतेऽपि लिङ् निमित्ते क्रियातिपत्तौ नित्यं लृङ् ।। भविष्यति तु सर्वत्रैव नित्यः ।।

<कामप्रवेदनेऽकच्चिति ।। 3-3-153 ।।>

स्वाभिप्रायाविष्करणम् = कामप्रवेदनम् । कामः, इच्छा, अभिलाष इत्यनर्थान्तरम्, तस्य प्रवेदनम् = प्रकाशनम् । तस्मिन् गम्यमानेऽकच्चित्युपपदे धातोर्लिङ्प्रत्ययो भवति । सर्वलकाराणामपवादः । कामो मे भुञ्जीत भवान् । अभिलाषो मे भुञ्जीत भवान् ।

अकच्चितीति किम् ?

कच्चिज्जीवति ते मता कच्चिज्जीवति ते पिता ।

माराविद त्वां पृच्छामि कच्चिज्जीवति पार्वती ।।

<संभावनेऽलमिति चेत्सिद्धाप्रयोगे ।। 3-3-154 ।।>

`लिङ्' इत्येव । सम्भावनम् = क्रियासु योग्यताध्यवसानम्, शक्तिश्रद्धानम् । तदिदानीमलमर्थेन विशेष्यते । तच्चेत्सम्भावनं पर्याप्तमवितथं भवति । सिद्धाप्रयोग इत्यलमो विशेषणम् - सिद्धश्चेदलमोऽप्रयोगः । क्व चासौ सिद्धः ? यत्र गम्यते चार्थो न चासौ प्रयुज्यते । तदीदृशसम्भावनोपाधिकेऽर्थे वर्त्तमानाद्धातोर्लिङ् प्रत्ययो भवति । सर्वलकाराणामपवादः । अपि पर्वतं शिरसा भिन्द्यात् । अपि द्रोणपाकं भुञ्जीत ।

अलमिति किम् ? विदेशस्थायी देवदत्तः प्रायेण गमिष्यति ग्रामम् । सिद्धाप्रयोग इति किम् ? अलं देवदत्तो हस्तिनं हनिष्यति । क्रियातिपत्तौ भूते भविष्यति च नित्यं लृङ् भवति ।।

<विभाषा धातौ सम्भावनवचनेऽयदि ।। 3-3-155 ।।>

"सम्भावनेऽलमिति चेत् सिद्धाप्रयोगे"(3.3.154/2811) इति सर्वमनुवर्त्तते । सम्भावनमुच्यते येन स सम्भावनवचनः । सम्भावनवचने धातावुपपदे यच्छब्दवर्जिते धातोर्विभाषा लिङ् भवति । पूर्वेण नित्यप्राप्तौ विकल्पार्थं वचनम् । सम्भावयामि भुञ्जीत भवान् । सम्भावयामि भोक्ष्यते भवान् ।

अवकल्पयामि भुञ्जीत भवान्, भोक्ष्यते भवान् । श्रद्दधे भुञ्जीत भवान्, भोक्ष्यते भवान् ।

अयदीति किम् ? सम्भावयामि यद्भुञ्जीत भवान् ।।

<हेतुहेतुमतोर्लिङ् ।। 3-3-156 ।।>

हेतुः = कारणम्, हेतुमत्फलम् । हेतुभूते हेतुमति चार्थे वर्त्तमानाद् धातोर्लिङ् प्रत्ययो भवति । सर्वलकाराणामपवादः । दक्षिणेन चेद्यायान्न शकटं पर्याभवेत् । यदि कमलकमाह्वयेन्न शकटं पर्याभवेत् । दक्षिणेन यानं हेतुः, अपर्याभवनं हेतुमत् । विभाषा चायमिष्यते, भविष्यति च काले, तेन लृडपिभवति - दक्षिणेन चेद्यास्यति न शकटं पर्याभविष्यति । तत्र विभाषाग्रहणं तावदनन्तरमेवानुवर्तते ।

लिङिति वर्तमाने पुनर्लिङ्ग्रहणं कालविशेषप्रतिपत्त्यर्थम् । तेनेह न भवति - हन्तीति पलायते, वर्षतीति धावति । क्रियातिपत्तौ लृङ् भवति ।।

<इच्छार्थेषु लिङ् लोटौ ।। 3-3-157 ।।>

इच्छार्थेषु धातुषूपपदेषु धातोर्लिङ्लोटौ प्रत्ययौ भवतः । सर्वलकाराणामपवादः । इच्छामि भुञ्जीत भवान् । इच्छामि भुङ्क्तां भवान् । कामये । प्रार्थये ।।

* कामप्रवेदन इति वक्तव्यम् *(म.भा.2.165) ।। इह मा भूत् - इच्छन् करोति ।।

<समानकर्तृकेषु तुमुन् ।। 3-3-158 ।।>

इच्छार्थेषु धातुषु समानकर्तृकेषूपपदेषु धातोस्तुमुन् प्रत्ययो भवति । तुमुन्प्रकृत्यपेक्षमेव समानकर्तृकत्वम् । इच्छति भोक्तुम् । कामयते भोक्तुम् । वष्टि भोक्तुम् । वाञ्छति भोक्तुम् ।

समानकर्तृकेष्विति - किम् ? देवदत्तं भुञ्जानमिच्छति यज्ञदत्तः । इह कस्मान्न भवति - इच्छन्करोति ? अनभिधानात् ।।

<लिङ् च ।। 3-3-159 ।।>

इच्छार्थेषु समानकर्तृकेषु धातुषूपपदेषु धातोर्लिङ् प्रत्ययो भवति । भुञ्जीयेतीच्छति । अधीयीयेतीच्छति । क्रियातिपत्तौ लृङ् भवति । योगविभाग उत्तरार्थः ।।

<इच्छार्थेभ्यो विभाषा वर्तमाने ।। 3-3-160 ।।>

इच्छार्थेभ्यो धातुभ्यो वर्तमाने काले विभाषा लिङ्प्रत्ययो भवति । लटि प्राप्ते वचनम् । इच्छति, इच्छेत् । वष्टि, उश्यात् । कामयते, कामयेत ।।

<विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ् ।। 3-3-161 ।।>

विधिः = प्रेरणम् । निमन्त्रणम् = नियोगकरणम् । आमन्त्रणम् = कामचारकरणम् । अधीष्टः= सत्कारपूर्वको व्यापारः । सम्प्रश्नः = सम्प्रधारणम् । प्रार्थनम् = याच्ञा । विध्याद्यर्थेषु प्रत्ययो भवति । सर्वलकाराणामपवादः । विध्यादयश्च प्रत्ययार्थविशेषणम् । विध्यादिविशिष्टेषु कर्त्रादिषु लिङ् प्रत्ययो भवति । विधौ तावत् - कटं कुर्यात् । ग्रामं भवानागच्छेत् । निमन्त्रणे इह भवान्भुञ्जीत । इह भवानासीत । आमन्त्रणे - इह भवानासीत । इह भवान्भुञ्जीत । अधीष्टे - अधीच्छामो भवन्तं माणवकं भवानुपनयेत् । सम्प्रश्ने - किं नु खलु भो व्याकरणमधीयीय । प्रार्थने - भवति मे प्रार्थना व्याकरणमधीयीय ।

<लोट् च ।। 3-3-162 ।।>

लोट्प्रत्ययो भवति धातोर्विध्यादिष्वर्थेषु । योगविभाग उत्तरार्थः । विधौ तावत् - कटं तावद् भवान्करोतु । ग्रामं भवानागच्छतु । निमन्त्रणे - अमुत्र भवानास्ताम् । अमुत्र भवान्भुङ्क्ताम् । आमन्त्रणे इह भवान् भुङ्क्ताम् । अधीष्टे - अधीच्छामो भवन्तं माणवकं भवानध्यापयतु । माणवकं भवानुपनयताम् । सम्प्रश्ने - किं न खलु भो व्याकरणमध्ययै । प्रार्थने - भवति मे प्रार्थना व्याकरणमध्ययै, छन्दोऽध्ययै ।।

<प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ।। 3-3-163 ।।>

प्रेषणम् = प्रैषः, कामचाराभ्यनुज्ञानम् = अतिसर्गः, निमित्तभूतस्य कालस्यावसरः = प्राप्तकालता एतेष्वर्थेषु धातोः कृत्यसंज्ञकाः प्रत्यया भवन्ति । चकाराल्लोट् च । भवता कटः करणीयः, कर्त्तव्यः, कृत्यः, कार्यः । लोट् खल्वपि - करोतु कटं भवानिह प्रेषितः । भवानतिसृष्टः । भवतः प्राप्तकालः कटकरणे ।।

किमर्थं प्रैषादिषु कृत्या विधीयन्ते न सामान्येन, भावकर्मणोर्विहिता एव ते प्रैषादिष्वन्यत्र च भविष्यन्ति ? विशेषविहितेनानेन लोटा बाध्यन्ते । वासरूपविधिना भविष्यन्ति ? एवं तर्हि ज्ञापयति`स्त्र्यधिकारात्परेण वासरूपविधिर्नावश्यं भवति' इति ।

विधिप्रैषयोः को विशेषः ? केचिदाहुः--अज्ञातज्ञापनं विधिः, प्रेषणं प्रैष इति ।।

<लिङ् चोर्ध्वमौहूर्तिके ।। 3-3-164 ।।>

प्रैषादयो वर्त्तन्ते । प्रैषादिषु गम्यमानेषु ऊर्ध्वमौहूर्त्तिकेऽर्थे वर्तमानाद्धातोर्लिङ् प्रत्ययो भवति । चकाराद्यथाप्राप्तं च । ऊर्ध्वं मुहूर्त्तात् = उपरिमुहूर्तस्य भवता खलु कटः कर्त्तव्यः, करणीयः, कार्यः । भवान्खलु कटं कुर्यात्, भवान्खलु करोतु । भवानिह प्रेषितः । भवानतिसृष्टः । भवान्प्राप्तकालः ।।

<स्मे लोट् ।। 3-3-165 ।।>

`प्रैषादिषु' `ऊर्ध्वमौहूर्तिके' इति वर्तते । स्मशब्द उपपदे प्रैषादिषु गम्यमानेषूर्ध्वमौहूर्तिकेऽर्थे वर्तमानाद्धातोर्लोट् प्रत्ययो भवति । लिङ्कृत्यानामपवादः । ऊर्ध्वं मुहूर्ताद् भवान्कटं करोतु स्म । ग्रामं गच्छतुस्म । माणवकमध्यापयतु स्म ।।

<अधीष्टेच ।। 3-3-166 ।।>

`स्मे' इति वर्तते । अधीष्टं व्याख्यातम् । स्मशब्द उपपदेऽधीष्टे गम्यमाने धातोर्लोट् प्रत्ययो भवति । लिङोऽपवादः । अङ्ग स्म राजन्माणवकमध्यापय । अङ्ग स्म राजन्नग्निहोत्रं जुहुधि ।।

<कालसमयवेलासु तुमुन् ।। 3-3-167 ।।>

कालादिषूपपदेषु धातोस्तुमुन्प्रत्ययो भवति । कालो भोक्तुम् । वेला भोक्तुम् ।। इह कस्मान्न भवति - `कालः पचति भूतानि'(मै.उ.6.15) इति ? प्रैषादिग्रहणमिहाभिसम्बध्यते ।।

इह कस्मान्न भवति - कालो भोजनस्य ? वासरूपेण ल्युडपि भवति । उक्तमिदम् - `स्त्र्यधिकरात्परत्र वासरूपविधिरनित्यः' इति ।।

<लिङ् यदि ।। 3-3-168 ।।>

कालादयोऽनुवर्त्तन्ते । यच्छब्दे उपपदे कालादिषु धातोर्लिङ् प्रत्ययो भवति । तुमुनोऽपवादः । कालो यद् भुञ्जीत भवान् । समयो यद् भुञ्जीत भवान् । वेला यद्भुञ्जीत भवान् ।।

<अर्हे कृत्यतृचश्च ।। 3-3-169 ।।>

अर्हतीत्यर्हः = तद्योग्यः । अर्हे कर्तरि वाच्ये गम्यमाने वा धातोः कृत्यतृचः प्रत्यया भवन्ति । चकाराल्लिङ् च । भवता खलु कन्या वोढव्या, वाह्या, वहनीया । भवान् खलु कन्याया वोढा । भवान् खलु कन्यां वहेत् । भवानेतदर्हेदिति ।

अथ कस्मादर्हे कृत्यतृचो विधीयन्ते, यावता सामान्येन विहितत्वादर्हेऽपि भविष्यन्ति ? योऽयमिह लिङ् विधीयते, तेन बाधा मा भूदिति । वासरूपविधिश्चानित्यः ।।

<आवश्यकाधमर्ण्ययोर्णिनिः ।। 3-3-170 ।।>

अवश्यं भावः = आवश्यकम् । उपाधिरयम्, नोपपदम् । अवश्यम्भावविशिष्टे आधमर्ण्यविशिष्टे च कर्तरि वाच्ये धातोर्णिनिः प्रत्ययो भवति । अवश्यङ्कारी । मयूरव्यंसकादित्वात्समासः ।

आधमर्ण्ये खल्वपि - शतं दायी । सहस्रं दायी । निष्कं दायी ।।

<कृत्याश्च ।। 3-3-171 ।।>

`आवश्यकाधमर्ण्ययोः' इति वर्तते । कृत्यसंज्ञकाश्च प्रत्यया आवश्यकाधमर्ण्ययोरुपाधिभूतयोर्धातोर्भवन्ति । भवता खलु अवश्यं कटः कर्त्तव्यः, अवश्यं करणीयः, अवश्यं कार्यः, अवश्यं कृत्यः । आधमर्ण्ये - भवता शतं दातव्यम् । सहस्रं देयम् ।।

किमर्थमिदम्, यावता सामान्येन विहिता अस्मिन्नपि विषये भविष्यन्ति ? विशेषविहितेन णिनिना बाध्येरन् ।।

कर्त्तरि णिनिः, भावकर्मणोः कृत्याः, तत्र कुतो बाधप्रसङ्गः ? तत्र केचिदाहुः - भव्यगेयादयः कर्तृवाचिनः कृत्याः, त इहोदाहरणमिति ।।

<शकि लिङ् च ।। 3-3-172 ।।>

`शकि' इति प्रकृत्यर्थविशेषणम् । शक्नोत्यर्थोपाधिके धात्वर्थे लिङ् प्रत्ययो भवति । चकारात्कृत्याश्च । भवता खलु भारो वोढव्यः, वहनीयः, वाह्यः । भवान् खलु भारं वहेत् । भवानिह शक्तः ।

सामान्यविहितानां पुनर्वचनम् - लिङा बाधा मा भूदिति ।

<आशिषि लिङ् लोटौ ।। 3-3-173 ।।>

आशंसनमाशीः = अप्राप्तस्येष्टस्यार्थस्य प्राप्तुमिच्छा । प्रकृत्यर्थविशेषणं चैतत् । आशीर्विशिष्टेऽर्थे वर्त्तमानाद्धातोर्लिङ्लोटौ प्रत्ययौ भवतः । चिरं जीव्याद्

भवान् । चिरं जीवतु भवान् ।
आशिषीति किम् ? चिरं जीवति देवदत्तः ।।
<क्तिच्क्तौ च संज्ञायाम् ।। 3-3-174 ।।>
`आशिषि' इत्येव । आशिषि विषये धातोः क्तिच्क्तौ प्रत्ययौ भवतः, समुदायेन चेत्संज्ञा गम्यते । तनुतात् तन्तिः । सनुतात् सातिः । भवतात् भूतिः । मनुतात् मन्तिः । क्तः खल्वपि - देवा एनं देयासुर्देवदत्तः ।
सामान्येन विहितः क्तः पुनरुच्यते - क्तिचा बाधा मा भूदिति । चकारो विशेषणार्थः - "न क्तिचि दीर्घश्च"(6.4.39/3314) इति ।।
<माङि लुङ् ।। 3-3-175 ।।>
माङ्युपपदे धातोर्लुङ् प्रत्ययो भवति । सर्वलकाराणामपवादः । मा कार्षीत् । मा हार्षीत् । कथं मा भवतु तस्य पापम्, मा भविष्यतीति ? असाधुरेवायम् । केचिदाहुः - अङिदपरो माशब्दो विद्यते, तस्यायं प्रयोगः ।।
<स्मोत्तरे लङ् च ।। 3-3-176 ।।>
स्मशब्दोत्तरे माङ्युपदे धातोर्लङ् प्रत्ययो भवति । चकाराल्लुङ्च । मा स्म करोत्, मा स्म कार्षीत् । मा स्म हरत्, मा स्म हार्षीत् ।।
इति श्रीजयादित्यविरचितायां काशिकावृत्तौ
तृतीयाध्याये तृतीयः पादः ।।
---------------*******************--------------

## 3.4

अथ तृतीयाध्याये चतुर्थः पादः
<धातुसम्बन्धे प्रत्ययाः ।। 3-4-1 ।।>
धात्वर्थे धातुशब्दः । धात्वर्थानां सम्बन्धो धातुसम्बन्धः = विशेषणविशेष्यभावः । तस्मिन्सति अयथाकालोक्ता अपि प्रत्ययाः साधवो भवन्ति । अग्निष्टोमयाज्यस्य पुत्त्रो जनिता । कृतः कटः श्वो भविता । भावि कृत्यमासीत् । अग्निष्टोमयाजीति भूतकालः, जनितेति भविष्यत्कालः, तत्र भूतः कालो भविष्यत्कालेनाभिसम्बध्यमानः साधुर्भवति । विशेषणं गुणत्वाद्विशेष्यकालमनुरुध्यते, तेन विपर्ययो न भवति ।
प्रत्ययाधिकारे पुनः प्रत्ययग्रहणम्-अधात्वधिकारविहिता अपि प्रत्ययास्तद्धिता धातुसम्बन्धे सति कालभेदे साधवो यथा स्युरिति । गोमानासीत् । गोमान्भविता । गावो विद्यन्तेऽस्येति वर्तमानविहितो मतुप् आसीद् भवितेति सम्बन्धादतीते भविष्यति च साधुर्भवति ।।
<क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः ।। 3-4-2 ।।>
`धातुसम्बन्धे' इति वर्तते । पौनः पुन्यं भृशार्थो वा क्रियासमभिहारः । प्रकृत्यर्थविशेषणं चैतत् । समभिहारविशिष्टक्रियावचनाद्धातोर्लोट् प्रत्ययो भवति, सर्वेषु कालेषु । सर्वलकाराणामपवादः । तस्य च लोटो हि, स्व इत्येतावादेशौ भवतः, तध्वंभाविनस्तु वा भवतः ।
योगविभागोऽत्र कर्तव्यः, क्रियासमभिहारे लोड् भवति, ततो लोटो हिस्वौ । लोडित्येव, लोड्धर्माणौ हिस्वौ भवत इत्यर्थः । तेनात्मनेपदपरस्मैपदत्वं भेदेनावतिष्ठते, तिङ्त्वं च द्वयोरपि भवति ।। लुनीहि लुनीहीत्येवायं लुनाति, इमौ लुनीतः, इमे लुनन्ति । लुनीहि लुनीहीत्येव त्वं लुनासि, युवां लुनीथः, यूयं लुनीथ । अथ वा लुनीत लुनीतेत्येव यूयं लुनीथ । लुनीहि लुनीहीत्येवाहं लुनामि, आवां लुनीवः, वयं लुनीमः ।।
भूते - लुनीहि लुनीहीत्येवायमलावीत् ,अलाविष्टाम्, अलाविषुः । एवं मध्यमोत्तमयोरुदाहार्यम् ।।
भविष्यति - लुनीहि लुनीहीत्येवायं लविष्यति, लविष्यतः, लविष्यन्ति । एवं मध्यमोत्तमयोरुदाहार्यम् ।।
अधीष्वादीष्वेत्येवायमधीते, इमावधीयाते, इमेऽधीयते । अधीष्वाधीष्वेत्येव त्वमधीषे, युवामधीयाथे, यूयमधीध्वे । अथवा,अधीध्वमधीध्वमित्येव यूयमधीध्वे । अधीष्वाधीष्वेत्येवाहमधीये, आवामधीवहे, वयमधीमहे । एवं सर्वेष्वेव लकारेषूदाहार्यम् ।।
क्रियासमभिहाराभिव्यक्तौ द्विर्वचनमयं लोडपेक्षते - क्रियासमभिहारे द्वे भवत इति । यङ्प्रत्ययः पुनरस्मिन्नेवार्थे विधीयमानः स्वयमेव शक्तत्वान्नापेक्षते द्विर्वचनम् ।।
<समुच्चयेऽन्यतरस्याम् ।। 3-4-3 ।।>
अनेकक्रियाध्याहारः = समुच्चयः । समुच्चीयमानक्रियावचनाद्धातोरन्यतरस्यां लोट् प्रत्ययो भवति, तस्य लोटो हिस्वावादेशौ भवतः । तध्वंभाविनस्तु वा भवतः ।
भ्राष्ट्रमट मठमट खदूरमट स्थाल्यपिधानमटेत्येवायमटति, इमावटतः, इमेऽटन्ति । भ्राष्ट्रमट मठमट खदूरमट स्थाल्यपिधानमटेत्येव त्वमटसि, युवामटथः, यूयमटथ । अथ वा - भ्राष्ट्रमटत मठमटत खदूरमटत स्थाल्यपिधानमटतेत्येव यूयमटथ । भ्राष्ट्रमट मठमट खदूरमट स्थाल्यपिधानमटेत्येवाहमटामि,

<भर्गात्त्रैगर्त्ते ।। 4-1-111 ।।>
भर्गशब्दादपत्ये विशेषे त्रैगर्ते गोत्रे फञ् प्रत्ययो भवति । भार्गायणो भवति त्रैगर्त्तश्चेत् भार्गिरन्यः ।।
<शिवादिभ्योऽण् ।। 4-1-112 ।।>
`गोत्रे' इति निवृत्तम् । अतः प्रभृति सामान्येन प्रत्ययो विज्ञायन्ते । शिवादिभ्योऽपत्येऽण् प्रत्ययो भवति । यथायथमिञादीनामपवादः । शैवः । प्रौष्ठः ।
तक्षन्शब्दोऽत्र पठ्यते कारिलक्षणमुदीचामिञं बाधितुम् । ण्यप्रत्ययस्य तु बाधा नेष्यते । ताक्ष्णः, ताक्षण्यः ।
गङ्गाशब्दः पठ्यते तिकादिफिञा शुभ्रादिढका च समावेशार्थम् । तेन त्रैरूप्यं भवति - गाङ्गः, गाङ्गायनिः, गाङ्गेयः ।
विपाशशब्दः पठ्यते कुञ्जादिलक्षणेन च्फञा समावेशार्थम् । वैपाशः, वैपाशायन्यः ।
शिव । प्रौष्ठ । प्रौष्ठिक । चण्ड । जम्भ । भुरि । सन्धि । मुनि । कुठार। अनभिम्लान । ककुत्स्थ । कहोड । लेख । रोध । खञ्जन । कोहड । पिष्ट । हेहय । खञ्जार । कञ्जाल । सुरोहिका । पर्ण । कहूष । परिल । वतण्ड । तृण । कर्ण । क्षीरह्रद । जलह्रद । परिषिक । जटिलिक । गोफिलिक । बधिरिका । मञ्जीरक । वृष्णिक । रेख । आलेखन । विश्रवण । रवण । वर्त्तनाक्ष । पिटक । पिटाक । तृक्षाक । नभाक । ऊर्णनाभ । जरत्कारु । उत्क्षिपा । रोहितिक । आर्यश्वेत । सुपिष्ट । खर्जूरकर्ण । मसूरकर्ण । तूणकर्ण । मयूरकर्ण । खडरक । तक्षन् । ऋष्टिषेण । गङ्गा । विपाश । यस्क । लह्य । द्रुघ । अयः स्थूण । भलन्दन । विरूपाक्ष । भूमि । इला । सपत्नी । * द्व्यचो नद्याः * (ग.सू.76)। * त्रिवेणी त्रिवणंच * (ग.सू.77)।।
<अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः ।। 4-1-113 ।।>
"वृद्धिर्यस्याचामादिस्तद् वृद्धम्"(1.1.73/1335) । `अवृद्धाभ्यः' इति शब्दधर्मः, `नदीमानुषीभ्यः' इत्यर्थधर्मः, तेनाभेदात्प्रकृतयो निर्दिश्यन्ते ।
`तन्नामिकाभ्यः' इति सर्वनाम्ना प्रत्ययप्रकृतेः परामर्शः । अवृद्धानि यानि नदीनां मानुषीणां च नामधेयानि तेभ्योऽपत्येऽण्प्रत्ययो भवति । ढकोऽपवादः ।
यमुनाया अपत्यं यामुनः । इरावत्या अपत्यम् ऐरावतः । वैतस्तः । नार्मदः ।
मानुषीभ्यः खल्वपि - शिक्षिताया अपत्यं शैक्षितः । चिन्तिताया अपत्यं चैन्तितः ।
अवृद्धाभ्यः किम् ? चान्द्र भाग्याया अपत्यं चान्द्रभागेयः । वासवदत्तेयः । नदीमानुषीभ्य इति किम् ? सौपर्णेयः । वैनतेयः । तन्नामिकाभ्य इति किम् ?
शोभनायाः - शौभनेयः ।।
<ऋष्यन्धकवृष्णिकुरुभ्यश्च ।। 4-1-114 ।।>
ऋषयः प्रसिद्धा वसिष्ठायः । अन्धकाः, वृष्णयः, कुरव इति वंशाख्याः । ऋष्यादिकुर्वन्तेभ्यः प्रातिपदिकेभ्योऽपत्येऽण्प्रत्ययो भवति । इञोऽपवादः ।
अत्र्यादिभ्यस्तु परत्वाड्ढगादिभिरेव भवितव्यम् । ऋषिभ्यस्तावत् - वासिष्ठः । वैश्वामित्रः । अन्धकेभ्यः - श्वाफल्कः । रान्धसः । वृष्णिभ्यः - वासुदेवः ।
आनिरुद्धः । कुरुभ्यः - नाकुलः । साहदेवः ।
कथं पुनर्नित्यानां शब्दानामन्धकादिवंशसमाश्रयणेनान्वाख्यानं युज्यते ? केचिदाहुः - कथमपि काकतालीयन्यायेन कुर्वादिवंशेष्वसङ्करेणैव नकुलसहदेवादयः
शब्दास्सुबहवः सङ्कलिताः, तानुपादाय पाणिनिना स्मृतिरुपनिबद्धेति ।
अथ वा - अन्धकवृष्णिकुरुवंशा अपि नित्या एव, तेषु ये शब्दाः प्रयुज्यन्ते - नकुलसहदेवादयः; तत्रेदं प्रत्ययविधानमित्यदोषः ।।
<मातुरुत्सङ्ख्यासम्भद्रपूर्वायाः ।। 4-1-115 ।।>
मातृशब्दात्सङ्ख्यापूर्वात्सम्पूर्वाद्भद्रपूर्वाच्चापत्येऽण् प्रत्ययो भवति, उकारश्चान्तादेशः । द्वयोर्मात्रोरपत्यं द्वैमातुरः । षाण्मातुरः । साम्मातुरः । भाद्रमातुरः ।
उकारादेशार्थं वचनम्, प्रत्ययः पुनरुत्सर्गेणैव सिद्धः । स्त्रीलिङ्गनिर्देशोऽर्थापेक्षः, तेन धान्यमातुर्ग्रहणं न भवति ।
सङ्ख्यासम्भद्रपूर्वाया इति किम् ? सौमात्रः ।
<कन्यायाः कनीन च ।। 4-1-116 ।।>
कन्याशब्दादपत्येऽण्प्रत्ययो भवति । तत्सन्नियोगेन कनीनशब्द आदेशो भवति । ढकोऽपवादः । कन्याया अपत्यं कानीनः कर्णः । कानीनो व्यासः ।।
<विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु ।। 4-1-117 ।।>
विकर्णशुङ्गच्छगलशब्देभ्यो यथासङ्ख्यं वत्सभरद्वाजात्रिष्वपत्यविशेषेष्वण्प्रत्ययो भवति । वैकर्णो भवति वात्स्यश्चेत्, वैकर्णिरन्यः । शौङ्गो भवति ।
भारद्वाजश्चेत्, शौङ्गिरन्यः । छागलो भवत्यात्त्रेयश्चेत्, छागलिरन्यः ।
शुङ्गाशब्दं स्त्रीलिङ्गमन्ये पठन्ति, ततो ढकं प्रत्युदाहरन्ति--शौङ्गेय इति ।
द्वयमपि चैतत्प्रमाणम्; उभयथा सूत्रप्रणयनात् ।
<पीलाया वा ।। 4-1-118 ।।>
तन्नामिकाणो बाधके `द्वयचः' इति ढकि प्राप्तेऽण्प्रत्ययः पक्षे विधीयते । पीलाया अपत्ये वाऽण्प्रत्ययो भवति । पीलाया अपत्यं पैलः । पैलेयः ।।
<ढक्च मण्डूकात् ।। 4-1-119 ।।>
मण्डूकशब्दादपत्ये ढक् प्रत्ययो भवति । चकारादण् च वा । तेन त्रैरूप्यं भवति -माण्डूकेयः, माण्डूकः, माण्डूकिः ।।
<स्त्रीभ्यो ढक् ।। 4-1-120 ।।>
इह स्त्रीग्रहणेन टाबादिप्रत्ययान्ताः शब्दा गृह्यन्ते । स्त्रीभ्योऽपत्ये ढक् प्रत्ययो भवति । सौपर्णेयः । वैनतेयः ।

स्त्रीप्रत्ययविज्ञापनादसत्यर्थग्रहणे इह न भवति - इडबिडोऽपत्यम्, दरदोऽपत्यम् - ऐडबिडः, दारद इति ।

* वडवाया वृषे वाच्ये * (म.भा.2.258)। वाडवेयो वृषः स्मृतः । अपत्ये प्राप्तस्ततोऽपकृष्य विधीयते, तेनापत्ये वाडव इति भवति ।

* अण् क्रुञ्चाकोकिलात्स्मृतः * (म.भा.2.258)। क्रुञ्चाया अपत्यं क्रौञ्चः । कौकिलः ।।

<द्व्यचः ।। 4-1-121 ।।>

`स्त्रीभ्यः' इत्येव । द्व्यचः स्त्रीप्रत्ययान्तादपत्ये ढक्प्रत्ययो भवति । तन्नामिकाणोऽपवादः । दत्ताया अपत्यं दात्तेयः । गौपेयः ।

द्व्यच इति किम् ? यामुनः ।।

<इतश्चानिञः ।। 4-1-122 ।।>

स्त्रीग्रहणं निवृत्तम् । चकारः `द्व्यचः' इत्यस्यानुकर्षणार्थः । इकारान्तात्प्रातिपदिकादनिञन्तादपत्ये ढक्प्रत्ययो भवति । आत्त्रेयः । नैधेयः ।

इत इति किम् ? दाक्षिः । प्लाक्षिः । अनिञ इति किम् ? दाक्षायणः । प्लाक्षायणः । द्व्यच इत्येव - मरीचेरपत्यं मारीचः ।।

<शुभ्रादिभ्यश्च ।। 4-1-123 ।।>

`शुभ्र' इत्येवमादिभ्यः प्रातिपदिकेभ्यो ढक् प्रत्ययो भवति । यथायोगमिञादीनामपवादः । शौभ्रेयः । वैष्टपुरेयः । चकारोऽनुक्तसमुच्चयार्थ आकृतिगणतामस्य बोधयति, तेन गाङ्गेयः पाण्डवेय इत्येवमादि सिद्धं भवति ।

शुभ्र । विष्टपुर । ब्रह्मकृत । शतद्वार । शतावर । शलाका । शालाचल । शलाकाभ्रू । लेखाभ्रू । विमातृ । विधवा । किङ्कसा । रोहिणी । रुक्मिणी । दिशा । शालूक । अजवस्ति । शकन्धि । * लक्ष्मणश्यामयोर्वासिष्ठे *(ग.सू.78) । गोधा । कृकलास । अणीव । प्रवाहण । भरत । भारम । मृकण्डु । मघष्टु । मकष्टु । कर्पूर । इतर । अन्यतर । आलीढ । सुदत्त । सुचक्षस् । सुनामन् । कद्रु । तुद । अकशाप । कुरेका । किशोरिका । कुवेणिका । जिह्माशिन् । परिधि । वायुदत्त । ककल । खट्वा । अम्बिका । अशोका । शुद्धपिङ्गला । खण्डोन्मत्ता । अनुदृष्टि । जरतिन् । बलिवर्दिन् । विग्रज । बीज । श्वन् । अश्मन् । अश्व । अजिर ।।

<विकर्णकुषीतकात्काश्यपे ।। 4-1-124 ।।>

विकर्णशब्दात्कुषीतकशब्दाच्च काश्यपेऽपत्यविशेषे ढक् प्रत्ययो भवति । वैकर्णेयः । कौषीतकेयः ।

काश्यप इति किम् ? वैकर्णिः । कौषीतकिः ।।

<भ्रुवो वुक्च ।। 4-1-125 ।।>

भ्रूशब्दादपत्ये ढक् प्रत्ययो भवति, तत्सन्नियोगेन च वुगागमः । भ्रावेयः ।।

<कल्याण्यादीनामिनङ् ।। 4-1-126 ।।>

`कल्याणी' इत्येवमादीनां शब्दानामपत्ये ढक् प्रत्ययो भवति, तत्सन्नियोगेन च इनङादेशः । स्त्रीप्रत्ययान्तानामादेशार्थं ग्रहणम्; प्रत्ययस्य सिद्धत्वात् । अन्येषामुभयार्थम् । काल्याणिनेयः । सौभागिनेयः । दौर्भागिनेयः । "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च"(7.3.19/1133) इत्युभयपदवृद्धिः ।

कल्याणी । सुभगा । दुर्भगा । बन्धकी । अनुदृष्टि । अनुसृष्टि । जरती । बलीवर्दी । ज्येष्ठा । कनिष्ठा । मध्यमा । परस्त्री ।।

<कुलटाया वा ।। 4-1-127 ।।>

कुलान्यटतीति कुलटा; पररूपं निपातनात् । कुलटाया अपत्ये ढक् प्रत्ययो भवति, तत्सन्नियोगेन च वा इनङादेशो भवति । आदेशार्थं वचनम्, प्रत्ययः पूर्वेणैव सिद्धः । कौलटिनेयः, कौलटेयः ।

या तु कुलान्यटन्ती शीलं भिनत्ति, ततः "क्षुद्राभ्यो वा"(4.1.131/1137) इति परत्वाड् ढ्रका भवितव्यम् - कौलटेरः ।।

<चटकाया ऐरक् ।। 4-1-128 ।।>

चटकाया अपत्ये ऐरक् प्रत्ययो भवति । चाटकैरः ।

* चटकाच्चेति वक्तव्यम् * (म.भा.2.258)। चटकस्यापत्यं चाटकैरः ।

* स्त्रियामपत्ये लुग्वक्तव्यः * (म.भा.2.258)। चटकाया अपत्यं स्त्री चटका ।।

<गोधाया ढ्रक् ।। 4-1-129 ।।>

गोधाया अपत्ये ढ्रक् प्रत्ययो भवति । गौधेरः । शुभ्रादिष्वयं पठ्यते, तेन गौधेयः इत्यपि भवति ।।

<आरगुदीचाम् ।। 4-1-130 ।।>

गोधाया अपत्ये उदीचामाचार्याणां मतेन आरक् प्रत्ययो भवति । गौधारः ।

आचार्यग्रहणं पूजार्थम्, वचनसामर्थ्यादेव पूर्वेण समावेशो भविष्यति । आरग्वचनमनर्थकम्, रका सिद्धत्वात् ? ज्ञापकं त्वयम् - अन्येभ्योऽपि भवतीति । जाडारः । पाण्डारः ।।

<क्षुद्राभ्यो वा ।। 4-1-131 ।।>

ढ्रगनुवर्तते, न आरक् । क्षुद्राः = अङ्गहीना; शीलहीनाश्च । अर्थधर्मेण तदभिधायिन्यः स्त्रीलिङ्गाः प्रकृतयो निर्दिश्यन्ते । क्षुद्राभ्यो वापऽत्ये ढ्रक् प्रत्ययो भवति । ढकोऽपवादः । काणेरः, काणेयः । दासेरः, दासेयः ।।

<पितृष्वसुश्छण् ।। 4-1-132 ।।>
पितृष्वसृशब्दादपत्ये छण्प्रत्ययो भवति । अणोऽपवादः । पैतृष्वस्रीयः ।।
<ढकि लोपः ।। 4-1-133 ।।>
पितृष्वसुरपत्यप्रत्यये ढकि परतो लोपो भवति । पैतृष्वसेयः ।
कथं पुनरिह ढक् प्रत्ययः ? एतदेव ज्ञापकं ढको भावस्य ।।
<मातृष्वसुश्च ।। 4-1-134 ।।>
`पितृष्वसुः' इत्येतदपेक्षते, पितृष्वसुर्यदुक्तं तन्मातृष्वसुरपि भवति - छण्प्रत्ययो ढकि लोपश्च । मातृष्वसेयः ।।
<चतुष्पाद्भ्यो ढञ् ।। 4-1-135 ।।>
चतुष्पादभिधायिनीभ्यः प्रकृतिभ्योऽपत्ये ढञ्प्रत्ययो भवति । अणादीनामपवादः । कामण्डलेयः । शौन्तिबाहेयः । जाम्बेयः ।।
<गृष्ट्यादिभ्यश्च ।। 4-1-136 ।।>
गृष्ट्यादिभ्यः शब्देभ्योऽपत्ये ढञ्प्रत्ययो भवति । अणादीनामपवादः । गार्ष्टेयः । हार्ष्टेयः ।
गृष्टिशब्दो यश्चतुष्पाद्वचनस्ततः पूर्वेणैव सिद्धः, अचतुष्पादर्थं वचनम् ।
गृष्टि । हृष्टि । हलि । बलि । विश्रि । कुद्रि । अजबस्ति । मित्त्रयु ।।
<राजश्वशुराद्यत् ।। 4-1-137 ।।>
राजन्-श्वशुरशब्दाभ्यामपत्ये यत्प्रत्ययो भवति । यथाक्रममणिञोरपवादः । राजन्यः । श्वशुर्यः ।
* राज्ञोऽपत्ये जातिग्रहणम् *(म.भा.2.259) । राजन्यो भवति, क्षत्त्रियश्चेत् । राजनोऽन्यः ।।
<क्षत्त्राद्घः ।। 4-1-138 ।।>
क्षत्त्रशब्दादपत्ये घः प्रत्ययो भवति । क्षत्त्रियः । अयमपि जातिशब्द एव । क्षात्त्रिरन्यः ।।
<कुलात्खः ।। 4-1-139 ।।>
उत्तरसूत्रे पूर्वपदप्रतिषेधादिह तदन्तः केवलश्च दृश्यते । कुलशब्दान्तात्प्रातिपदिकात्केवलाच्चापत्ये खः प्रत्ययो भवति । आढ्यकुलीनः । श्रोत्रियकुलीनः । कुलीनः ।।
<अपूर्वपदादन्यतरस्यां यड्ढकञौ ।। 4-1-140 ।।>
`कुलात्' इत्येव । अविद्यमानं पूर्वपदं यस्य तदपूर्वपदम्, समाससम्बन्धिपूर्वपदस्याभावेन कुलशब्दो विशेष्यते । अपूर्वपदात्कुलशब्दादन्यतरस्यां यत्, ढकञ् इत्येतौ प्रत्ययौ भवतः । ताभ्यां मुक्ते खोऽपि भवति । कुल्यः, कौलेयकः, कुलीनः ।
पदग्रहणं किम् ? बहुच्पूर्वादपि यथा स्यात् । बहुकुल्यः । बाहुकुलेयकः । बहुकुलीनः ।।
<महाकुलादञ्खञौ ।। 4-1-141 ।।>
`अन्यतरस्याम्' इत्यनुवर्त्तते । महाकुलशब्दादञ्खञौ प्रत्ययौ भवतः, पक्षे खः । माहाकुलः, माहाकुलीनः, महाकुलीनः ।।
<दुष्कुलाड्ढक् ।। 4-1-142 ।।>
दुष्कुलशब्दादपत्ये ढक् प्रत्ययो भवति । `अन्यतरस्याम्' इत्यनुवृत्तेः खश्च । दौष्कुलेयः, दुष्कुलीनः ।।
<स्वसुश्छः ।। 4-1-143 ।।>
स्वसृशब्दादपत्ये छः प्रत्ययो भवति । अणोऽपवादः । स्वसुरपत्यं स्वस्रीयः ।।
<भ्रातुर्व्यच्च ।। 4-1-144 ।।>
भ्रातृशब्दादपत्ये व्यत् प्रत्ययो भवति । चकाराच्छश्च । अणोऽपवादः । भ्रातृव्यः । भ्रात्रीयः । तकारः स्वरार्थः ।।
<व्यन्सपत्ने ।। 4-1-145 ।।>
सपत्नशब्दः शत्त्रुपर्यायः शब्दान्तरव्युत्पन्नमेव । सपत्नीशब्दादपरेऽकारम् इवार्थे निपातयन्ति । सपत्नीव सपत्नः । भ्रातृशब्दाद् व्यन्प्रत्ययो भवति समुदायेन चेदमित्त्रः सपत्न उच्यते । अपत्यार्थोऽत्र नास्त्येव - पाप्मना भ्रातृव्येण । भ्रातृव्यः कण्टकः ।।
<रेवत्यादिभ्यष्ठक् ।। 4-1-146 ।।>
रेवतीत्येवमादिभ्योऽपत्ये ठक् प्रत्ययो भवति । यथायोगं ढगादीनामपवादः । रैवतिकः । आश्वपालिकः ।
रेवती । अश्वपाली । मणिपाली । द्वारपाली । वृकवञ्चिन् । वृकग्राह । कर्णग्राह । दण्डग्राह । कुक्कुटाक्ष ।।
<गोत्रस्त्रियाः कुत्सने ण च ।। 4-1-147 ।।>
`अपत्यं पौत्रप्रभृति गोत्रम्' गृह्यते । गोत्रं या स्त्री तदभिधायिनः शब्दादपत्ये णः प्रत्ययो भवति, चकाराट्ठक्च, कुत्सने गम्यमाने । पितुरसंविज्ञाने मात्रा व्यपदेशोऽपत्यस्य कुत्सा । गार्ग्या अपत्यं गार्गोजाल्मः, गार्गिकः । ग्लुचुकायन्या अपत्यं ग्लौचुकायनः, ग्लौचुकायनिकः । `गोत्राद्यूनि' इति यूनि प्रत्ययो भवति ।
गोत्रमिति किम् ? कारिकेयो जाल्मः । स्त्रिया इति किम् ? औपगविर्जाल्मः । कुत्सन इति किम् ? गार्गेयो माणवकः ।।

<वृद्धाट्ठक्सौवीरेषु बहुलम् ।। 4-1-148 ।।>

`कुत्सने' इत्येव । `सौवीरेषु' इति प्रकृतिविशेषणम् । वृद्धात् सौवीरगोत्रादपत्ये बहुलं ठक्प्रत्ययो भवति, कुत्सने गम्यमाने । भागवित्तेर्भागवित्तिकः । तार्णबन्दवस्य तार्णबिन्दविकः । पक्षे यथाप्राप्तं फक् - भागवित्तायनः । पक्षे - तार्णबिन्दविः । अकशापः शुभ्रादिः - आकशापेयः, तस्यापत्यमाकशापेयिकः । पक्षे - आकशापेयिः ।

भागपूर्वपदो वित्तिर्द्वितीयस्तार्णबिन्दवः ।
तृतीयस्त्वाकशापेयो गोत्राट्ठग्बहुलं ततः ।।

वृद्धग्रहणं स्त्रीनिवृत्त्यर्थम् ।

सौवीरेष्विति किम् ? औपगविर्जाल्मः । `कुत्सने' इत्येव - भागवित्तायनो माणवकः ।

बहुलग्रहणमुपाधिवैचित्र्यार्थम् । `गोत्रस्त्रियाः' इत्यारभ्य चत्वारो योगाः - तेषु प्रथमः कुत्सन एव, अन्त्यः सौवीरगोत्रे एव, मध्यमौ द्वयोरपि । तदेतद्बहुलग्रहणाल्लभ्यते ।।

<फेश्छ च ।। 4-1-149 ।।>

`कुत्सने' इत्येव, `सौवीरेषु' इति च । `फेः' इति फिञो ग्रहणम्, न फिनः; वृद्धाधिकारात् । फिञन्तात्प्रातिपदिकात्सौवीरगोत्रादपत्ये छः प्रत्ययो भवति, चकाराट्ठक् कुत्सने गम्यमाने । यमुन्दस्यापत्यम् - "तिकादिभ्यः फिञ्"(4.1.154/1178), तस्यापत्यं यामुन्दायनीयः । यामुन्दायनिकः । कुत्सन इत्येव - यामुन्दायनिः । फिञन्तादौत्सर्गिकस्याण आगतस्य "ण्यक्षत्त्रियार्षञितो यूनिलुगणिञोः"(2.4.58/1276) इति लुक् । सौवीरेष्वित्येव - तैकायनिः ।

यमुन्दश्च सुयामा च वार्ष्यायणिः फिञः स्मृताः ।
सौवीरेषु च कुत्सायां द्वौ योगौ शब्दवित् स्मरेत् ।।

<फाण्टाहृतिमिमताभ्यां णफिञौ ।। 4-1-150 ।।>

सौवीरेषु, इत्येव । `कुत्सने' इति निवृत्तम् । `फाण्टहृति' `मिमत' शब्दाभ्यां सौवीरविषयाभ्यामपत्ये णफिञौ प्रत्ययौ भवतः । फकोऽपवादः । अल्पाच्तरस्यापूर्वनिपातो लक्षणव्यभिचारचिह्नम्, तेन यथासङ्ख्यमिह न भवतीति । फाण्टाहृतः, फाण्टाहृतायनिः (म.भा.2.261)। मैमतः, मैमतायनिः । सौवीरेष्वित्येव - फाण्टाहृतायनः । मैमतायनः । फाण्टाहृतेः "यञिञोश्च"(4.1.101/1103) इति फक् । मिमतशब्दोऽपि नडादिषु पठ्यते ।

<कुर्वादिभ्यो ण्यः ।। 4-1-151 ।।>

`सौवीरेषु' `बहुलम्' इति च निवृत्तम् । `कुरु' इत्येवमादिभ्यः शब्देभ्योऽपत्ये ण्यः प्रत्ययो भवति । कौरव्यः । गार्ग्यः । "कुरुनादिभ्यो ण्यः"(4.1.172/1190) इति कुरुशब्दादपरो ण्यप्रत्ययो भविष्यति । स तु क्षत्त्रियात्तद्राजसंज्ञकः, तस्य बहुषु लुका भवितव्यम्; अयं तु श्रूयत एव - कौरव्याः । कौरव्यशब्दस्य क्षत्त्रियवचनस्य तिकादिषु पाठात्फिञपि भवति । कौरव्यायणिः । रथकारशब्दोऽत्र पठ्यते, स जातिवचनः । त्रैवर्णिकेभ्यः किञ्चिन्न्यूना रथकारजातिः । कारिणस्तु रथकारशब्दादुत्तरसूत्रेणैव ण्यः सिद्धः । केशिनीशब्दः पठ्यते, तस्य कैशिन्यः । पुंवद्भावो न भवति; स्त्रीप्रत्ययनिर्देशसामर्थ्यात् ।

`वेनाच्छन्दसि'(ग.सू.80) इति पठ्यते, कथं भाषायां वैन्यो राजेति ? छान्दस एवायं प्रमादात्कविभिः प्रयुक्तः ।

वामरथशब्दः पठ्यते, तस्य कण्वादिवत्कार्यमिष्यते स्वरं वर्जयित्वा, लुगादिकमतिदिश्यते । बहुषु - वामरथाः । स्त्री - वामरथी । वामरथ्यायनी । युवा - वामरथ्यायनः । वामरथ्यस्य छात्त्रा वामरथाः । वामरथानि सङ्घाङ्कलक्षणानि । स्वरस्तु ण्यप्रत्ययस्यैव भवति, नातिदेशिकमाद्युदात्तत्वम् ।

कुरु । गर्ग । मङ्गुष । अजमारक । रथकार । वावदूक । * सम्राजः क्षत्त्रिये * (ग.सू.79)। कवि । मति । वाक् । पितृमत् । इन्द्रजालि । दामोष्णीषि । गणकारि । कैशोरि । कापिञ्जलादि । कुट । शलाका । मुर । परक । अभ्र । दर्भ । केशिनी । * वेनाच्छन्दसि * (ग.सू.80)। शूर्पणाय । श्यावनाय । श्यावरथ । श्यावपुत्र । सत्यङ्कार । वडभीकार । शङ्कु । शाक । पथिकारिन् । मूढ । शकन्धु । कर्तृ । हर्तृ । शाकिन् । इनपिण्डी ।। वामरथस्य कण्वादिवत्स्वरवर्जम् ।।

<सेनान्तलक्षणकारिभ्यश्च ।। 4-1-152 ।।>

सेनान्तात्प्रातिपदिकाल्लक्षणशब्दात्कारिवचनेभ्यश्चापत्ये ण्यः प्रत्ययो भवति । कारिशब्दः कारूणां तन्तुवायादीनां वाचकः । कारिषेण्यः । हारिषेण्यः । लाक्षण्यः । कारिभ्यः - तान्तुवाय्यः । कौम्भकार्यः । नापित्यः ।।

<उदीचामिञ् ।। 4-1-153 ।।>

ण्ये प्राप्ते इञपरो विधीयते । सेनान्तलक्षणकारिभ्योऽपत्ये इञ् प्रत्ययो भवति उदीचां मतेन । कारिषेणिः । हारिषेणिः । लाक्षणिः । तान्तुवायिः । कौम्भकारिः ।

वचनसामर्थ्यादेव प्रत्ययसमावेशे लब्धे आचार्यग्रहणं वैचित्र्यार्थम् । तक्षन्शब्दः शिवादिः, तेनाणायमिञ् बाध्यते, न तु ण्यः । तक्ष्णोऽपत्यं ताक्ष्णः । ताक्षण्यः ।।

<तिकादिभ्यः फिञ् ।। 4-1-154 ।।>

`तिक' इत्येवमादिभ्यः शब्देभ्योऽपत्ये फिञ् प्रत्ययो भवति । तैकायनिः । कैतवायनिः । वृषशब्दोऽत्र पठ्यते, तस्य प्रत्ययसन्नियोगेन यकारान्तत्वमिष्यते ।

वार्ष्यायणिः । कौरव्यशब्दः पठ्यते, स च क्षत्त्रियवचनः; औरसशब्देन क्षत्त्रियप्रत्ययान्ते साहचर्यात् ।

यस्तु "कुर्वादिभ्यो ण्यः"(4.1.151/1175), तदन्ताद् इञैव भवितव्यम्; तथा च "ण्यक्षत्त्रियार्षञितो यूनिलुगणिञोः"(2.4.58/1276) इत्यत्रोदाहृतम् - कौरव्यः पिता, कौरव्यः पुत्र इति ।

तिक । कितव । संज्ञा । बाल। शिखा । उरस् । शाट्य । सैन्धव । यमुन्द । रूप्य । ग्राम्य । नील । अमित्र । गौकक्ष्य । करु । देवरथ । तैतिल । औरस । कौरव्य । भौरिकि । भौलिकि । चौपयत । चैटयत । शैकयत । क्षैतयत । ध्वाजवत । चन्द्रमस् । शुभ । गङ्गा । वरेण्य । सुयामन् । आरद । वह्यका । खल्या । वृष । लोमका । उदन्य । यज्ञ ।

<कौशल्यकार्मार्याभ्यां च ।। 4-1-155 ।।>

कौशल्यकार्मार्यशब्दाभ्यामपत्ये फिञ् प्रत्ययो भवति । इञोऽपवादः । कौशल्यायनिः । कार्मार्यायणिः ।

परमप्रकृतेरेवायं प्रत्यय इष्यते - कोसलस्यापत्यम्, कर्मारस्यापत्यमिति ।

प्रत्ययसन्नियोगेन तु प्रकृतिरूपं निपात्यते । तथा च स्मृत्यन्तरम् - `दगुकोसलकर्मारच्छागवृषाणां युड् वादिष्टस्य'(म.भा.2.263) इति । दागव्यायनिः । कौसल्यायनिः । कार्मार्यायणिः । छाग्यायनिः । वार्ष्यायणिः ।।

<अणो द्व्यचः ।। 4-1-156 ।।>

अणन्ताद् द्व्यचः प्रातिपदिकादपत्ये फिञ् प्रत्ययो भवति । इञोऽपवादः । कार्त्रायणिः । हार्त्रायणिः ।

अण इति किम् ? दाक्षायणः । द्व्यच इति किम् ? औपगविः ।

* त्यदादीनां वा फिञ् वक्तव्यः * । त्यादायनिः, त्यादः । यादायनिः, यादः । तादायनिः, तादः । अणत्र प्राप्तः ।।

<उदीचां वृद्धादगोत्रात् ।। 4-1-157 ।।>

वृद्धं यच्छब्दरूपमगोत्रं तस्मादपत्ये फिञ्प्रत्ययो भवति । उदीचामाचार्याणां मतेन । आम्रगुप्तायनिः । ग्रामरक्षायणिः ।
कारिशब्दादपि वृद्धादगोत्रात्परत्वादनेनैव भवितव्यम् । नापितायनिः ।

उदीचामिति किम् ? आम्रगुप्तिः । वृद्धादिति किम् ? याज्ञदत्तिः । अगोत्रादिति किम् ? औपगविः ।।

<वाकिनादीनां कुक्च ।। 4-1-158 ।।>

`वाकिन' इत्येवमादिभ्यः शब्देभ्योऽपत्ये फिञ् प्रत्ययो भवति, तत्सन्नियोगेन चैषां कुगागमः । यदिह वृद्धमगोत्रं शब्दरूपं तस्यागमार्थमेव ग्रहणम्, अन्येषामुभयार्थम् । वाकिनकायनिः । गारेधकायनिः ।

इञाद्यपवादो योगः । `उदीचाम्' इत्यधिकारात्पक्षे तेऽपि भवन्ति । वाकिनिः । गारेधिः ।

वाकिन । गारेध । कार्कट्य । काक । लङ्का । * चर्मिवर्मिणोर्नलोपश्च *(ग.सू.81) ।।

<पुत्रान्तादन्यतरस्याम् ।। 4-1-159 ।।>

`उदीचां वृद्धात्' इति वर्त्तते । पुत्रान्तमगोत्रमिति पूर्वेणैव प्रत्ययः सिद्धः, तस्मिन्ननेन कुगागमोऽन्यतरस्यां विधीयते । पुत्रान्तात् प्रातिपदिकाद्यः फिञ्प्रत्ययस्तस्मिन् परभूतेऽन्यतरस्यां कुगागमो भवति पुत्रान्तस्य । तेन त्रैरूप्यं सम्पद्यते - गार्गीपुत्रकायणिः, गार्गीपुत्रायणिः, गार्गीपुत्रिः ।
वात्सीपुत्रकायणिः, वात्सीपुत्रायणिः, वात्सीपुत्रिः ।।

<प्राचामवृद्धात्फिन्बहुलम् ।। 4-1-160 ।।>

अवृद्धाच्छब्दरूपादपत्ये फिन् प्रत्ययो भवति बहुलं प्राचां मतेन । ग्लुचुकायनिः । अहिचुम्बकायनिः ।

प्राचामिति किम् ? ग्लौचुकिः । अवृद्धादिति किम् ? राजदन्तिः ।

उदीचाम्, प्राचाम्, अन्यतरस्याम्, बहुलमिति सर्व एते विकल्पार्थाः, तेषामेकेनैव सिद्ध्यति ? तत्राचार्यग्रहणं पूजार्थम् । बहुलग्रहणं वैचित्र्यार्थम्, क्वचिन्न भवत्येव - दाक्षिः । प्लाक्षिः ।।

<मनोर्जातावञ्यतौ षुक्च ।। 4-1-161 ।।>

मनुशब्दादञ्, यत् - इत्येतौ प्रत्ययौ भवतः, तत्सन्नियोगेन षुगागमः, समुदायेन चेज्जातिर्गम्यते । मानुषः, मनुष्यः। जातिशब्दावेतौ ।

अपत्यार्थोऽत्र नास्त्येव, तथा च मानुषा इति बहुषु न लुग्भवति । अपत्यविवक्षायां त्वणैव भवतिव्यम् - मानवी प्रजा ।

`अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः ।

नकारस्य च मूर्द्धन्यस्तेन सिद्ध्यति माणवः' ।।(म.भा.2.264)

<अपत्यं पौत्रप्रभृति गोत्रम् ।। 4-1-162 ।।>

पौत्रप्रभृति यदपत्यं तद् गोत्रसंज्ञं भवति । सम्बन्धिशब्दत्वादपत्यशब्दस्य यदपत्यं तदपेक्षया पौत्रप्रभृतेर्गोत्रसंज्ञा विधीयते । गर्गस्यापत्यं पौत्रप्रभृति गार्ग्यः । वात्स्यः । अपत्यमिति व्यपदेशोऽयं पौत्रप्रभृतेः ।

पौत्रप्रभृतीति किम् ? अन्यस्य मा भूत् । कौञ्जिः । गार्गिः ।

गोत्रप्रदेशाः - "एको गोत्रे"(4.1.93/1093) इत्येवमादयः ।।

<जीवति तु वंश्ये युवा ।। 4-1-163 ।।>
अभिजनप्रबन्धः = वंशः । तत्र भवो वंश्यः पित्रादिः, तस्मिन् जीवति सति पौत्रप्रभृत्यपत्यं युवसंज्ञं भवति । पौत्रप्रभृतीति च न सामानाधिकरण्येनापत्यं विशेषयति, किं तर्हि ? षष्ठ्या विपरिणम्यते - पौत्रप्रभृतेर्यदपत्यमिति । तेन चतुर्थादारभ्य युवसंज्ञा विधीयते । गार्ग्याणः । वात्स्यायनः ।
तुशब्दोऽवधारणार्थः - युवैव भवति, न गोत्रमिति ।।
<भ्रातरि च ज्यायसि ।। 4-1-164 ।।>
भ्रातरि ज्यायसि जीवति कनीयान् भ्राता युवसंज्ञो भवति पौत्रप्रभृतेरपत्यम् । गार्ग्यस्य द्वौ पुत्रौ, तयोः कनीयान् मृते पित्रादौ वंश्ये भ्रातरि ज्यायसि जीवति युवसंज्ञो भवति । अवंश्यार्थोऽयमारम्भः । पूर्वजाः पित्रादयः `वंश्याः' इत्युच्यन्ते । भ्राता तु न वंश्यः; अकारणत्वात् । गार्ग्ये जीवति गार्ग्यायणोऽस्य कनीयान्भ्राता । वात्स्यायनः । दाक्षायणः । प्लाक्षायणः ।।
<वान्यस्मिन् सपिण्डे स्थविरतरे जीवति ।। 4-1-165 ।।>
सप्तमपुरुषावधयः सपिण्डाः स्मर्यन्ते । येषाम् --
`उभयत्र दशाहानि कुलस्यान्नं न भुज्यते'।
इत्येवमादिकायां क्रियायामनधिकारः । भ्रातुरन्यस्मिन्सपिण्डे स्थविरतरे जीवति पौत्रप्रभृतेरपत्यं जीवदेव युवसंज्ञं वा भवति । प्रकृतं जीवतिग्रहणं सपिण्डस्य विशेषणम्, इदं तु संज्ञितः । तरब्निर्देश उभयोरुत्कर्षार्थः । स्थानेन वयसा चोत्कृष्टे सपिण्डे यथा स्यात्, पितृव्ये पितामहे भ्रातरि च वयसाधिके जीवति । गर्गस्यापत्यं गार्ग्यायणः, गार्ग्यो वा । वात्स्यायनः, वात्स्यो वा । दाक्षायणः, दाक्षिर्वा ।
स्थविरेति किम् ? स्थानवयोन्यूने गार्ग्य एव भवति । जीवतीति किम् ? मृते मृतो वा गार्ग्य एव भवति ।।
<वृद्धस्य च पूजायाम् ।। 4-1-166 ।।>
अपत्यमन्तर्हितं वृद्धमिति शास्त्रान्तरे परिभाषणाद् गोत्रं वृद्धमित्युच्यते । वृद्धस्य युवसंज्ञा वा भवति पूजायां गम्यमानायाम् । संज्ञासामर्थ्याद् गोत्रं युवप्रत्ययेन पुनरुच्यते । `वृद्धस्य' इति षष्ठीनिर्देशः, विचित्रा सूत्रस्य कृतिरिति । तत्र भवान् गार्ग्यायणः, गार्ग्यो वा । तत्र भवान् वात्स्यायनः, वात्स्यो वा । तत्र भवान् दाक्षायणः, दाक्षिर्वा ।
पूजायामिति किम् ? गार्ग्यः । वात्स्यः ।।
<यूनश्च कुत्सायाम् ।। 4-1-167 ।।>
कुत्सायां गम्यमानायां यूनो वा युवसंज्ञा भवति । निवृत्तिप्रधानो विकल्पः, युवसंज्ञायां प्रतिषिद्धायां पक्षे गोत्रसंज्ञैव भवति; प्रतिपक्षाभावात् । गार्ग्यो जाल्मः, गार्ग्यायणो वा । वात्स्यो जाल्मः, बात्स्यायनो वा । दाक्षिर्जाल्मः, दाक्षायणो वा ।
कुत्सायामिति किम् ? गार्ग्यायणः ।।
<जनपदशब्दात्क्षत्त्रियादञ् ।। 4-1-168 ।।>
जनपदशब्दो यः क्षत्त्रियवाची तस्मादपत्येऽञ् प्रत्ययो भवति । पाञ्चालः । ऐक्ष्वाकः । वैदेहः ।
जनपदशब्दादिति किम् ? द्रुह्योरपत्यं द्रौह्यवः । पौरवः । क्षत्त्रियादिति किम् ? ब्राह्मणस्य पञ्चालस्यापत्यं पाञ्चालिः । वैदेहिः ।
* क्षत्त्रियसमानशब्दाज्जनपदशब्दात् तस्य राजन्यपत्यवत् * (म.भा.2.269)। पञ्चालानां राजा पाञ्चालः । वैदेहः । मागधः ।।
<साल्वेयगान्धारिभ्यां च ।। 4-1-169 ।।>
साल्वेयगान्धारिशब्दाभ्यामपत्येऽञ् प्रत्ययो भवति । जनपदशब्दावेतौ क्षत्त्रियाभिधायिनौ ताभ्यामञपवादे `वृद्धात्' इति ञ्यङि प्राप्ते पुनरञ्विधीयते । साल्वेयः । गान्धारः । तस्य राजनीत्येव - साल्वेयो राजा । गान्धारो राजा ।
<द्व्यञ्मगधकलिङ्गसूरमसादण् ।। 4-1-170 ।।>
जनपदशब्दात्क्षत्त्रियाभिधायिनो द्व्यचः, मगध, कलिङ्ग, सूरमस इत्येतेभ्यश्चापत्येऽण् प्रत्ययो भवति । अञोऽपवादः । आङ्गः । वाङ्गः । पौण्ड्रः । सौह्मः । मागधः । कालिङ्गः । सौरमसः । तस्य राजनीत्येव - आङ्गो राजा ।।
<वृद्धेत्कोसलाजादाञ्ञ्यङ् ।। 4-1-171 ।।>
`जनपदशब्दात्क्षत्त्रियात्' इत्येव । वृद्धाच्च प्रातिपदिकादिकारान्ताच्च कोसल-अजादशब्दाभ्यां चापत्ये ञ्यङ् प्रत्ययो भवति । अञोऽपवादः । वृद्धात्तावत् - आम्बष्ठ्यः । सौवीर्यः । इकारान्तात् - आवन्त्यः । कौन्त्यः । कोसलाजादयोरवृद्धार्थं वचनम् । कौसल्यः । आजाद्यः ।
तपरकरणं किम् ? कुमारी नाम जनपदसमानशब्दः क्षत्त्रियः, तस्यापत्यं कौमारः ।
* पाण्डोर्जनपदशब्दात् क्षत्त्रियाड्ड्यण् वक्तव्यः * । पाण्ड्यः । अन्यस्मात्पाण्डव एव । तस्य राजनीत्येव - आम्बष्ठ्यो राजा । आवन्त्यः । कौन्त्यः । कौशल्यः । आजाद्यः ।।
<कुरुनादिभ्यो ण्यः ।। 4-1-172 ।।>
जनपदशब्दात्क्षत्त्रियादित्येव । कुरुशब्दान्नादिभ्यश्च प्रातिपदिकेभ्यो ण्यः प्रत्ययो भवति । अणञोरपवादः । कौरव्यः । नकारादिभ्यः - नैषध्यः । नैपथ्यः ।

तस्य राजनीत्येव - कौरव्यो राजा ।।
<साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ।। 4-1-173 ।।>
जनपदशब्दात् क्षत्त्रियादित्येव । सल्वा नाम क्षत्त्रिया तन्नामिका, तस्या अपत्यम्, "द्व्यचः"(4.1.121/1124) इति ढक्, साल्वेयः । अणपीष्यते - साल्वः । `तस्य निवासः' साल्वो जनपदः । तदवयवा उदुम्बरादयः, तेभ्यः क्षत्त्रियवृत्तिभ्य इदं प्रत्ययविधानम् । साल्वावयवेभ्यः प्रत्यग्रथकलकूटाश्मकशब्देभ्यश्चापत्ये इञ् प्रत्ययो भवति । अञोऽपवादः । औदुम्बरिः । तैलखलिः । माद्रकारिः । यौगन्धरिः । भौलिङ्गिः । शरदण्डिः । प्रात्यग्रथिः । कालकूटिः । आश्मकिः । तस्य राजनीत्येव - औदुम्बरी राजा ।
उदुम्बरास्तिलखला मद्रकारा युगन्धराः ।
भुलिङ्गाः शरदण्डाश्च साल्वावयवसंज्ञिताः ।।
<ते तद्राजाः ।। 4-1-174 ।।>
"जनपदशब्दात् क्षत्त्रियादञ्"(4.1.168/1186) इत्येवमादयः प्रत्ययाः सर्वनाम्ना प्रत्यवमृश्यन्ते, न तु पूर्वे; गोत्रयुवसंज्ञाकाण्डेन व्यवहितत्वात् । तेऽञादयस्तद्राजसंज्ञा भवन्ति । तथा चैवोदाहृतम् ।
तद्राजप्रदेशाः - "तद्राजस्य बहुषु तेनैवास्त्रियाम्"(2.4.62/1193) इत्येवमादयः ।।
<कम्बोजाल्लुक् ।। 4-1-175 ।।>
"जनपदशब्दात् क्षत्त्रियात्"(4.1.168/1186) इत्यनेन विहितस्याञो लुगुच्यते । कम्बोजात्प्रत्ययस्य लुग् भवति । कम्बोजः ।
* कम्बोजादिभ्यो लुग्वचनं चोलाद्यर्थम् * (म.भा.2.270)। कम्बोजः । चोलः । केरलः । शकः । यवनः । तस्य राजनीत्येव - कम्बोजो राजा ।।
<स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ।। 4-1-176 ।।>
अवन्ति-कुन्ति-कुरुशब्देभ्य उत्पन्नस्य तद्राजस्य स्त्रियामभिधेयायां लुग्भवति । अवन्तिकुन्तिभ्यां ञ्यङः, कुरोर्ण्यस्य । अवन्ती । कुन्ती । कुरूः ।
स्त्रियामिति किम् ? आवन्त्यः । कौन्त्यः । कौरव्यः ।।
<अतश्च ।। 4-1-177 ।।>
`स्त्रियाम्' इत्येव । अकारप्रत्ययस्य तद्राजस्य स्त्रियामबिधेयायां लुग्भवति । तकारो विस्पृष्टार्थः । शूरसेनी । मद्री । दरत् ।
अवन्त्यादिभ्यो लुग्वचनात् तदन्तविधिरत्र नास्ति, तेनेह न भवति - आम्बष्ठ्या । सौवीर्या ।।
<न प्राच्यभर्गादियौधेयादिभ्यः ।। 4-1-178 ।।>
प्राच्येभ्यो भर्गादिभ्यो यौधेयादिभ्यश्चोत्पन्नस्य लुग्न भवति । "अतश्च"(4.1.177/1196) इत्यनेन स्त्रियां लुक् प्राप्तः प्रतिषिद्ध्यते । प्राच्येभ्यः क्षत्त्रियेभ्यस्तावत् - पाञ्चाली । वैदेही । आङ्गी । वाङ्गी । मागधी । भर्गादिभ्यः - भार्गी । कारूषी । कैकेयी । यौधेयादिभ्यः - यौधेयी । शौभ्रेयी । शौक्रेयी ।
कस्य पुनरकारस्य प्रत्ययस्य यौधेयादिभ्यो लुक् प्राप्तः प्रतिषिद्ध्यते ? पाञ्चमिकस्याञः "पर्श्वादियौधेयादिभ्यामणञौ"(5.3.117/2070) इत्येतस्य । कथं पुनस्तस्य भिन्नप्रकरणस्थस्यानेन लुक् प्राप्नोति ? एतदेव विज्ञापयति - पाञ्चमिकस्यापि तद्राजस्य "अतश्च"(4.1.177/1196) इत्यनेन लुग्भवतीति । किमेतस्य ज्ञापनेन प्रयोजनम् ? पर्श्वाद्यणः स्त्रियां लुक् सिद्धो भवति । पर्शूः । रक्षाः । असुरी । तथा चोक्तम् - `यौधेयादिप्रतिषेधो ज्ञापकः पर्श्वाद्यणो लुक्' इति ।
भर्ग । करूष । केकय । कश्मीर । साल्व । सुस्थाल । उरश । कौरव्य । भर्गादिः ।
यौधेय । शौभ्रेय । शौक्रेय । ज्याबाणेय । घार्त्तेय । धार्त्तेय । त्रिगर्त्त । भरत । उशीनर । यौधेयादिः ।।
इति श्रीजयादित्यविरचितायां काशिकावृत्तौ
चतुर्थाध्यायस्य प्रथमः पादः।
----------------*****************-------------------

## 4.2

* अथ चतुर्थाध्याये द्वितीयः पादः *
<तेन रक्तं रागात् ।। 4-2-1 ।।>
शुक्लस्य वर्णान्तरापादनमिह रञ्जेरर्थः । रज्यतेऽनेनेति रागः । तेनेति तृतीयासमर्थाद्रागविशेषवाचिनः शब्दात् `रक्तम्' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । कषायेण रक्तं वस्त्रं काषायम् । माञ्जिष्ठम् । कौसुम्भम् ।
रागादिति किम् ? देवदत्तेन रक्तं वस्त्रम् ।

कथं काषायौ कर्णौ, हारिद्रौ कुक्कुटस्य पादाविति ? उपमानाद्भविष्यति - काषायाविव काषायौ, हारिद्राविव हारिद्रौ ।
"द्वैपवैयाघ्रादञ्"(4.2.12/1213) इति यावत्तृतीयासमर्थविभक्तिरनुवर्त्तते ।।
<लाक्षारोचनाशकलकर्दमाट्ठक् ।। 4-2-2 ।।>
लाक्षादिभ्यो रागवचनेभ्यस्तृतीयासमर्थभ्यः `रक्तम्' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । अणोऽपवादः । लाक्षया रक्तं वस्त्रं लाक्षिकम् । रौचनिकम् । शाकलिकम् । कार्दमिकम् ।
* शकलकर्दमाभ्यामणपीष्यते *(म.भा.2.270) । शाकलम् । कार्दमम् ।
* नील्या अन् वक्तव्यः * (म.भा.2.271)। नील्या रक्तं नीलं वस्त्रम् ।
* पीतात् कन् वक्तव्यः * (म.भा.2.271)। पीतेन रक्तं पीतकम् ।
* हरिद्रामहारजनाभ्यामञ्वक्तव्यः * (म.भा.2.271)। हारिद्रम् । माहारजनम् ।।
<नक्षत्रेण युक्तः कालः ।। 4-2-3 ।।>
तृतीया समर्थविभक्तिरनुवर्तते । तेनेति तृतीयासमर्थाद् नक्षत्रविशेषवाचिनः शब्दाद् `युक्तः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । योऽसौ युक्तः, कालश्चेत्स भवति ।
कथं पुनर्नक्षत्रेण पुष्यादिना कालो युज्यते ? पुष्यादिसमीपस्थे चन्द्रमसि वर्तमानाः पुष्यादिशब्दाः प्रत्ययमुत्पादयन्ति । पुष्येण युक्तः कालः । पुष्यसमीपस्थेन चन्द्रमसा युक्त इत्यर्थः । पौषी रात्रिः । पौषमहः । माघी रात्रिः । माघमहः ।
(म.भा.2.272)नक्षत्रेणेति किम् ? चन्द्रमसा युक्ता रात्रिः । काल इति किम् ? पुष्येण युक्तश्चन्द्रमाः ।।
<लुबविशेषे ।। 4-2-4 ।।>
पूर्वेण विहितस्य प्रत्ययस्य लुब् भवति अविशेषे । न चेन्नक्षत्रयुक्तस्य कालस्य रात्र्यादिविशेषोऽभिधीयते । यावान् कालो नक्षत्रेण युज्यतेऽहोरात्रस्तस्याविशेषे लुब् भवति । अद्य पुष्यः । अद्य कृत्तिकाः ।
अविशेष इति किम् ? पौषी रात्रिः। पौषमहः ।।
<संज्ञायां श्रवणाश्वत्थाभ्याम् ।। 4-2-5 ।।>
अविशेषे लुब्विहितः पूर्वेण, विशेषार्थोऽयमारम्भः । श्रवणशब्दादश्वत्थशब्दाच्चोत्पन्नस्य प्रत्ययस्य लुब् भवति संज्ञायां विषये । श्रवणा रात्रिः । अश्वत्थो मुहूर्त्तः ।
लुपि युक्तवद्भावः कस्मान्न भवति ? निपातनाद् "विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः"(4.2.23/1225) इति ।
संज्ञायामिति किम् ? श्रावणी, आश्वत्थी रात्रिः ।।
<द्वन्द्वाच्छः ।। 4-2-6 ।।>
नक्षत्रद्वन्द्वात्तृतीयासमर्थाद्युक्ते काले छः प्रत्ययो भवति, विशेषे चाविशेषे च । राधानुराधीया रात्रिः । तिष्यपुनर्वसवीयमहः । अविशेषे - अद्य राधानुराधीयम् । अद्य तिष्यपुनर्वसवीयम् । लुपं परत्वाद् बाधते ।।
<दृष्टं साम ।। 4-2-7 ।।>
तेनेति तृतीयासमर्थाद् `दृष्टं साम' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । यद् दृष्टं साम चेत्तद्भवति । क्रुञ्चेन दृष्टं क्रौञ्चं साम । वासिष्ठम् । वैश्वामित्रम् ।।
<कलेर्ढक् ।। 4-2-8 ।।>
कलिशब्दात्तृतीयासमर्थाद् `दृष्टं साम' इत्येतस्मिन्नर्थे ढक् प्रत्ययो भवति । अणोऽपवादः । कलिना दृष्टं साम कालेयम् ।
* सर्वत्राग्निकलिभ्यां ढग्वक्तव्यः * (म.भा.2.273)।। अग्निना दृष्टमाग्नेयम् । एवमग्नौ भवम्, अग्नेरागतम्, अग्नेः स्वम् - इति सर्वत्र ढगेव भवति । आग्नेयम्, तथा कालेयमपि प्रतिपत्तव्यम् ।
* दृष्टे सामनि अण्वा डिद्भवतीति वक्तव्यम् * (म.भा.2.273)। उशनसा दृष्टं साम औशनसम्, औशनम् ।
* जाते चार्थे योऽन्येन बाधितः पुनरण्विधीयते स वा डिद्भवतीति वक्तव्यम् * (म.भा.2.273)। "प्राग्दीव्यतोऽण्"(4.1.83/1073) प्राप्तः कालठञा(4.3.11/1381) बाधितः "सन्धिवेलाद्यृतुनक्षत्रेभ्यः"(4.3.16/1387) इति पुनर्विधीयते, स वा डिद्भवतीति वक्तव्यम् । शतभिषजि जातः शातभिषः, शातभिषजः ।
* तीयादीकक् स्वार्थे वा वक्तव्यः * (म.भा.2.273)। द्वैतीयीकम्, तार्तीयीकम् । द्वितीयकम्, तृतीयकम् ।
* न विद्यायाः * (म.भा.2.273)। द्वितीया, तृतीया विद्या ।
* गोत्रादङ्कवदिष्यते * (म.भा.2.273)। दृष्टं सामेत्यस्मिन्नर्थे । औपगवेन दृष्टं साम औपगवकम् । कापटवकम् । "गोत्रचरणाद् वुञ्"(4.3.126/1506) भवति ।
`दृष्टे सामनि जाते च द्विरण्डिद्वा विधीयते ।

तीयादीकक् न विद्याया गोत्रादङ्कवदिष्यते '।।(म.भा.2.273)

<वामदेवाड् ड्यड्ड्यौ ।। 4-2-9 ।।>

वामदेवशब्दात्तृतीयासमर्थाद् `दृष्टं साम' इत्येतस्मिन्नर्थे ड्यत्, ड्य इत्येतौ प्रत्ययौ भवतः । अणोऽपवादः । वामदेवेन दृष्टं साम वामदेव्यं साम । तित्करणं स्वरार्थम् ।

डित्करणं किमर्थम् ? "ययतोश्चातदर्थे"(6.2.156/3890) इति नञ उत्तरस्यान्तोदात्तत्वे विधीयमानेऽनयोर्ग्रहणं मा भूत् । अननुबन्धकग्रहणपरिभाषया एकानुबन्धकग्रहणपरिभाषया चानयोर्निवृत्तिः क्रियते । अवामदेव्यम् ।

`सिद्धे यस्येति लोपेन किमर्थं ययतौ डितौ ।

ग्रहणं माऽतदर्थे भूद्वामदेव्यस्य नञ्स्वरे' ।।(म.भा.2.274)

<परिवृतो रथः ।। 4-2-10 ।।>

तेनेति तृतीयासमर्थात् `परिवृतः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, योऽसौ परिवृतो रथश्चेत्स भवति । वस्त्रेण परिवृतो रथः वास्त्रो रथः । काम्बलः । चार्मणः ।

रथ इति किम् ? वस्त्रेण परिवृतः कायः । समन्ताद्वेष्टितः परिवृत उच्यते । यस्य न कश्चिदवयवो वस्त्रादिभिर्वेष्टितः तत्र न भवति । तेनेह न - छात्त्रैः परिवृतो रथः ।।

<पाण्डुकम्बलादिनिः ।। 4-2-11 ।।>

पाण्डुकम्बलशब्दात्तृतीयासमर्थात् `परिवृतो रथः' इत्येतस्मिन्नर्थे इनिः प्रत्ययो भवति । अणोऽपवादः । पाण्डुकम्बली, पाण्डुकम्बलिनौ, पाण्डुकम्बलिनः । पाण्डुकम्बलशब्दो राजास्तरणस्य वर्णकम्बलस्य वाचकः ।

मत्वर्थीयेनैव सिद्धे वचनमणो निवृत्त्यर्थम् ।

<द्वैपवैयाघ्रादञ् ।। 4-2-12 ।।>

द्वीपिव्याघ्रयोर्विकारभूते चर्मणी द्वैपवैयाघ्रे, ताभ्यां तृतीयासमर्थाभ्याम् `परिवृतो रथः' इत्येतस्मिन्नर्थेऽञ् प्रत्ययो भवति । अमोऽपवादः । स्वरे विशेषः । द्वैपेन परिवृतो रथो द्वैपः । वैयाघ्रः ।।

<कौमारापूर्ववचने।। 4-2-13 ।।>

`कौमार' इत्येतदण्प्रत्ययान्तं निपात्यतेऽपूर्ववचने । पाणिग्रहणस्यापूर्ववचनम् । उभयतः स्त्रियाम् अपूर्वत्वे निपातनमेतत् । अपूर्बपतिं कुमारीं पतिरुपपन्नः कौमारः पतिः । कुमारीशब्दाद् द्वितीयासमर्थादुपयन्तरि प्रत्ययः । `अपूर्वपतिः कुमारी पतिमुपपन्ना कौमारी भार्या'(म.भा.2.274) । प्रथमान्तादेव स्वार्थे प्रत्ययोऽपूर्वत्वे द्योत्ये ।

`कौमारापूर्ववचने कुमार्या अण्विधीयते ।

अपूर्वत्वं यदा तस्याः कुमार्यां भवतीति वा' ।।(म.भा.2.275)

कुमार्यां भवः कौमारः पतिः, तस्य स्त्री कौमारी भार्येति सिद्धम् ।।

<तत्रोद्धृतममत्रेभ्यः ।। 4-2-14 ।।>

तत्रेति सप्तमीसमर्थादत्रवाचिनः शब्दात् `उद्धृतम्' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । भुक्तोच्छिष्टमुद्धृतमुच्यते, यस्योद्धरणमिति प्रसिद्धिः । अमत्रम् = भाजनं पात्रमुच्यते । शरावेषूद्धृतः शाराव ओदनः । माल्लिकः । कार्परः ।

अमत्रेभ्य इति किम् ? पाणावुद्धृत ओदनः । `तत्र' इति सप्तमी समर्थविभक्तिः "क्षीराड्ढञ्"(4.2.20/1222) इति यावदनुवर्त्तते ।।

<स्थण्डिलाच्छयितरि व्रते ।। 4-2-15 ।।>

स्थण्डिलशब्दात्सप्तमीसमर्थात् शयितर्यभिधेये यथाविहितं प्रत्ययो भवति, समुदायेन चेद् व्रतं गम्यते । व्रतमिति शास्त्रितो नियम उच्यते । स्थण्डिले शयितुं व्रतमस्य स्थाण्डिलो भिक्षुः । स्थाण्डिलो ब्रह्मचारी ।

व्रत इति किम् ? स्थण्डिले शेते ब्रह्मदत्तः ।।

<संस्कृतं भक्षाः ।। 4-2-16 ।।>

तत्रेति सप्तमीसमर्थात् `संस्कृतम्' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति यत्संस्कृतं भक्षाश्चेत्ते भवन्ति । खरविशदमभ्यवहारार्थं `भक्षम्' इत्युच्यते । सत उत्कर्षाधानम् = संस्कारः । भ्राष्टे संस्कृता भक्षा भ्राष्ट्रा अपूपाः । कालशाः । कौम्भाः ।

भक्षा इति किम् ? पुष्पपुटे संस्कृतो मालागुणः ।।

<शूलोखाद्यत् ।। 4-2-17 ।।>

शूलशब्दादुखाशब्दाच्च सप्तमीसमर्थात् `संस्कृतं भक्षाः' इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति । अणोऽपवादः । शूले संस्कृतं शूल्यं मांसम् । उख्यम् ।।

<दध्नष्ठक् ।। 4-2-18 ।।>

दधिशब्दात्सप्तमीसमर्थात् `संस्कृतं भक्षाः' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । दधनि संस्कृतं दाधिकम् ।

ननु च संस्कृतार्थे प्राग्वहतेष्ठकं वक्ष्यति, तेनैव सिद्धम् ? न सिद्ध्यति; दध्ना हि तत्संस्कृतं तस्य दधिकृतमेवोत्कर्षाधानम्, इह तु दधि केवलमाधारभूतं द्रव्यान्तरेण लवणादिना संस्कारः क्रियते ।।

<उदश्वितोऽन्यतरस्याम् ।। 4-2-19 ।।>

उदश्विच्छब्दात्सप्तमीसमर्थात् `संस्कृतं भक्षाः' इत्येतस्मिन्नर्थेऽन्यतरस्यां ठक् प्रत्ययो भवति । पक्षे यथाप्राप्तमण् भवति । औदश्वितम् । औदश्वित्कम् ।

<क्षीराड्ढञ् ।। 4-2-20 ।।>

क्षीरशब्दात्सप्तमीसमर्थात् `संस्कृतं भक्षा' इत्येतस्मिन्नर्थे ढञ् प्रत्ययो भवति । अणोऽपवादः । क्षीरे संस्कृता क्षैरेयी यावागूः ।।

<सास्मिन्पौर्णमासीति सञ्ज्ञायाम् ।। 4-2-21 ।।>

सेति प्रथमासमर्थाद् `अस्मिन्' इति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत्तत्प्रथमासमर्थं पौर्णमासी चेद्भवति । इतिकरणस्ततश्चेद्विवक्षा भवति ।

`संज्ञायाम्' इति समुदायोपाधिः - प्रत्ययान्तेन चेत्संज्ञा गम्यत इति । मासार्धमाससंवत्सराणामेषा संज्ञा । पौषी पौर्णमासी अस्मिन्पौषो मासः । पौषोऽर्धमासः । पौषः संवत्सरः ।

इह न भवति - पौषी पौर्णमासी अस्मिन्दशरात्र इति । भृतकमासे च न भवति (म.भा.2.275)।

इतिकरणस्य संज्ञाशब्दस्य च तुल्यमेव फलं प्रयोगानुसरणं, तत्र किमर्थं द्वयमुपादीयते ? संज्ञाशब्देन तुल्यतामितिकरणस्य ज्ञापयितुम्, न ह्ययं लोके तथा प्रसिद्धः । संज्ञार्थत्वे तु सम्प्रति ज्ञापिते यत्तत्र तत्रोच्यते इतिकरणस्ततश्चेद्विवक्षेति तदुपपन्नं भवति ।

अथ पौर्णमासीति कोऽयं शब्दः ? पूर्णमासादण्, पौर्णमासी । अथ वा - पूर्णो माः पूर्णमाः, पूर्णमास इयं पौर्णमासी । मा इति चन्द्र उच्यते ।।

<आग्रहायण्यश्वथाट्ठक् ।। 4-2-22 ।।>

`सास्मिन्पौर्णमासी' इति सर्वमनुवर्तते । आग्रहायणीशब्दादश्वत्थशब्दाच्च प्रथमासमर्थात्पौर्णमास्युपाधिकाद् अस्मिन्निति सप्तम्यर्थे ठक् प्रत्ययो भवति । अणोऽपवादः । आग्रहायणिको मासः । अर्द्धमासः संवत्सरः । एवम् - आश्वत्थिकः ।।

<विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः ।। 4-2-23 ।।>

फाल्गुन्यादयः पौर्णमासीशब्दास्तेभ्यो विभाषा ठक् प्रत्ययो भवति, "सास्मिन्पौर्णमासीति संज्ञायाम्"(4.2.21/1223) इत्येतस्मिन्विषये । नित्यमणि प्राप्ते पक्षे ठग्विधीयते । फाल्गुनो मासः, फाल्गुनिकः । श्रावणः, श्रावणिकः । कार्त्तिकः, कार्त्तिकिकः । चैत्रः, चैत्रिकः ।।

<सास्य देवता ।। 4-2-24 ।।>

सेति प्रथमासमर्थात् `अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमासमर्थं देवता चेत्सा भवति । यागसम्प्रदानं देवता देयस्य पुरोडाशादेः स्वामिनी, तस्मिन्नभिधेये प्रत्ययः । इन्द्रो देवताऽस्य ऐन्द्रं हविः । आदित्यम् । बार्हस्पत्यम् । प्राजापत्यम् । देवतेति किम् ? कन्या देवताऽस्य । कथमैन्द्रो मन्त्रः ? मन्त्रस्तुत्यमपि देवतेत्युपचरन्ति ।

कथम् - आग्नेयो वै ब्राह्मणो देवतेति ? उपमानाद् भविष्यति । "महाराजप्रोष्ठपदाट्ठञ्"(4.2.35/1238) इति यावत् `सास्य देवता' इत्यधिकारः । सेति प्रकृते पुनः समर्थविभक्तिनिर्देशः संज्ञानिवृत्त्यर्थः ।।

<कस्येत् ।। 4-2-25 ।।>

कशब्दो देवतायां प्रजापतेर्वाचकः, ततः पूर्वेणैवाण्प्रत्ययः सिद्धः, इकारादेशार्थं वचनम् । कस्य इकारादेशो भवति प्रत्ययसन्नियोगेन । कायं हविः । `कायमेककपालं निर्वपेत्'(मै.सं.3.15.10) ।।

<शुक्राद् घन् ।। 4-2-26 ।।>

शुक्रशब्दात् `सास्य देवता' इत्यस्मिन्नर्थे घन् प्रत्ययो भवति । अणोऽपवादः । शुक्रियं हविः । शुक्रियोऽध्यायः ।।

<अपोनत्त्रपान्नप्तृभ्यां घः ।। 4-2-27 ।।>

अपोनप्तृ, अपान्नप्तृ - इत्येताभ्यां घः प्रत्ययो भवति `सास्य देवता' इत्यस्मिन्विषये । अणोऽपवादः । `अपोनप्त्रियं हविः'(श.ब्रा.29.12), अपांनप्त्रियम् । अपोनपाद्, अपांनपादिति देवताया नामधेये एते, तयोस्तु प्रत्ययसन्नियोगेन रूपमिदं निपात्यते ।।

<छ च ।। 4-2-28 ।।>

अपोनप्तृ, अपान्नप्तृ - इत्येताभ्यां छकारः प्रत्ययो भवति `सास्य देवता' इत्यस्मिन्विषये । अणोऽपवादः । `अपोनप्त्रीयं हविः'(आप.श्रौ.22.22.2) । `अपान्नप्त्रीयम्'(काठ.सं.12.6) । योगविभागः सङ्ख्यातानुदेशपरिहारार्थः ।

* छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसङ्ख्यानम् * (म.भा.2.276)।। पैङ्गाक्षीपुत्रीयम् । तार्णबिन्दवीयम् ।।

* शतरुद्राच्छश्च घश्च * (म.भा.2.276)। `शतरुद्रीयम्'(तै.सं.5.4.3.1)।`शतरुद्रियम्'(मै.3.3.4) ।।

<महेन्द्राद् घाणौ च ।। 4-2-29 ।।>

महेन्द्रशब्दाद् घाणौ प्रत्ययौ भवतः, चकाराच्छश्च, `सास्य देवता' इत्यस्मिन्विषये । महेन्द्रो देवतास्य महेन्द्रियं हविः । `माहेन्द्रम्'(तै.सं.6.5.5.3) । `महेन्द्रीयम्'(काठ.सं.15.1) ।।

<सोमात् ट्यण् ।। 4-2-30 ।।>
शोमशब्दात् ट्यणप्रत्ययो भवति `सास्य देवता' इत्यस्मिन्विषये । अणोऽपवादः । णकारो वृद्ध्यर्थः । टकारो ङीबर्थः । सोमो देवतास्य सौम्यं हविः । सौम्यं सूक्तम् । `सौमी ऋक्' (मै.1.7.4)।।
<वाय्वृतुपित्रुषसो यत् ।। 4-2-31 ।।>
वाय्वादिभ्यः शब्देभ्यो यत्प्रत्ययो भवति `सास्य देवता' इत्येतस्मिन्विषये । अणोऽपवादः । वायुर्देवतास्य वायव्यम् । ऋतव्यम् । `पित्र्यम्'(ऋ.8.20.13) । उषस्यम् ।।
<द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च ।। 4-2-32 ।।>
द्यावापृथिव्यादिभ्यश्छः प्रत्ययो भवति चकाराद्यत् `सास्य देवता' इत्यस्मिन्विषये । अणो ण्यस्य चापवादः । द्यौश्च पृथिवी च द्यावापृथिव्यौ देवते अस्य `द्यावापृथिवीयम्'(मै.1.8.10), `द्यावापृथिव्यम्'(तै.सं.1.8.2.1) । शुनश्च सीरश्च तौ देवते अस्येति `शुनासीरीयम्'(काठ.सं.26.4), `शुनासीर्यम्'(मै.4.3.3) । शुनः = वायुः । सीर = आदित्यः । मरुत्वान्देवतास्य `मरुत्वतीयम्'(तै.सं.4.4.2.2), मरुत्वत्यम् । `अग्नीषोमीयम्'(तै.सं.1.8.1.1), अग्नीषोम्यम् । `वास्तोष्पतीयम्'(तै.सं.3.4.10.3), `वास्तोष्पत्यम्'(मै.1.5.13) । `गृहमेधीयम्'(ऋ.7.56.14) । `गृहमेध्यम्'(काठ.सं.36.9) ।।
<अग्नेर्ढक् ।। 4-2-33 ।।>
अग्निशब्दाद् ढक् प्रत्ययो भवति `सास्य देवता' इत्येतस्मिन्विषये । अणोऽपवादः । अग्निर्देवतास्य `आग्नेयोऽष्टाकपालः'(काठ.सं.8.10) ।
* प्राग्दीव्यतीयेषु तद्धितार्थेषु सर्वत्राग्निकलिभ्यां ढग्वक्तव्यः * (म.भा.2.277)।।
<कालेभ्यो भववत् ।। 4-2-34 ।।>
कालविशेषवाचिभ्यः शब्देभ्यो भववत्प्रत्यया भवन्ति `सास्य देवता' इत्यस्मिन्विषये । `कालाट्ठञ्' इति प्रकरणे भवे प्रत्यया विधास्यन्ते, ते `सास्य देवता' इत्यस्मिन्नर्थे तथैवेष्यन्ते, तदर्थमिदमुच्यते ।
वत्करणं सर्वसादृश्यपरिग्रहार्थम् । मासे भवं मासिकम् । आर्द्धमासिकम् । सांवत्सरिकम् । वासन्तम् । प्रावृषेण्यम् । तथा - मासो देवतास्य मासिकम् । आर्धमासिकम् । सांवत्सरिकम् । वासन्तम् । प्रावृषेण्यम् ।
<महाराजप्रोष्ठपदाट्ठञ् ।। 4-2-35 ।।>
महाराजशब्दात्प्रोष्ठपदशब्दाच्च ठञ् प्रत्ययो भवति `सास्य देवता' इत्यस्मिन्विषये । महाराजो देवतास्य माहाराजिकम् । प्रौष्ठपदिकम् ।
* ठञ्प्रकरणे तदस्मिन्वर्तत इति नवयज्ञादिभ्य उपसङ्ख्यानम् *(म.भा.2.277) ।
नवयज्ञोऽस्मिन्वर्तते नावयज्ञिकः कालः । पाकयज्ञिकः ।।
* पूर्णमासादण् * (म.भा.2.277)। पूर्णमासोऽस्यां वर्तते `पौर्णमासी तिथिः'(मै.5.6.9) ।।
<पितृव्यमातुलमातामहपितामहाः ।। 4-2-36 ।।>
पितृव्यादयो निपात्यन्ते । समर्थविभक्तिः, प्रत्ययः, प्रत्ययार्थोऽनुबन्ध इति सर्वं निपातनाद्विज्ञेयम् । * पितृमातृभ्यां भ्रातर्यभिधेये व्यत्, डुलच् - इत्येतौ प्रत्ययौ निपात्येते *(म.भा.2.277) । पितुर्भ्राता पितृव्यः । मातुर्भ्राता मातुलः । * ताभ्यां पितरि डामहच् * (म.भा.2.277)। * मातरि षिच्च * । ताभ्यामेव पितरि डामहच् प्रत्ययो भवति - पितुः पिताः पितामहः, मातुः पिता मातामहः । मातरि षिच्च - पितामही, मातामही ।
* अवेर्दुग्धे सोढदूसमरीसचो वक्तव्याः * (म.भा.2.278)। अवेर्दुग्धम् अविसोढम् अविदूसम् । अविमरीसम् ।।
* तिलान्निष्फलात्पिञ्जपेजौ प्रत्ययौ वक्तव्यौ *(म.भा.2.278) । निष्फलस्तिलः तिलपिञ्जः । तिलपेजः ।
* पिञ्जश्छन्दसि डिच्च * (म.भा.2.278)। तिल्पिञ्जः ।। `तिलपिञ्जं दण्डनं नडम्'(अ.वे.12.2.54)
<तस्य समूहः ।। 4-2-37 ।।>
`तस्य इति षष्ठीसमर्थात् `समूहः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । किमिहोदाहरणम् ? चित्तवदाद्युदात्तमगोत्रं यस्य च नान्यत्प्रतिपदं ग्रहणम् । अचित्ताट्ठकं(4.2.47/1256) वक्ष्यति - "अनुदात्तादेरञ्"(4.2.44/1253), "गोत्राद्वुञ्"(4.2.39/1246), प्रतिपदं च "केदाराद्यञ्च"(4.2.40/1248) इत्येवमादि, तत्परिहारेणात्रोदाहरणं द्रष्टव्यम् । काकानां समूहः काकम् । सौकम् । बाकम् ।
"इनित्रकट्यचश्च"(4.2.51/1260) इति यावत्समूहाधिकारः ।
* गुणादिभ्यो ग्रामज्वक्तव्यः * । गुणग्रामः । करणग्रामः । गुण । करण । तत्त्व । शब्द । इन्द्रिय । आकृतिगणः ।।
<भिक्षादिभ्योऽण् ।। 4-2-38 ।।>
`भिक्षा' इत्येवमादिभ्यः शब्देभ्योऽण् प्रत्ययो भवति `तस्य समूहः' इत्येतस्मिन्विषये । अण्ग्रहणं बाधकबाधनार्थम् । भिक्षाणां समूहो भैक्षम् । गार्भिणम् । युवतिशब्दोऽत्र पठ्यते, तस्य ग्रहणसामर्थ्याद् पुंवद्भावो न भवति - `भस्याऽढे तद्धिते'(6.3.35/836) इति । युवतीनां समूहो यौवतम् ।
भिक्षा । गर्भिणी । क्षेत्र । करीष । अङ्गार । चर्मिन् । धर्मिन् । सहस्र । युवति । पदाति । पद्धति । अथर्वन् । दक्षिणा । भूत ।।

<गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ् ।। 4-2-39 ।।>
गोत्रादिभ्यो वुञ्प्रत्ययो भवति `तस्य समूहः' इत्येतस्मिन्विषये । अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यतेऽपत्यमात्रं न तु पौत्रप्रभृत्येव । औपगवानां समूहः औपगवकम् । कापटवकम् । उक्षन्--औक्षकम् । उष्ट्र--औष्ट्रकम् । उरभ्र--औरभ्रकम् । राजन्--राजकम् । राजन्य--राजन्यकम् । राजपुत्र--राजपुत्रकम् । वत्स--वात्सकम् । मनुष्य--मानुष्यकम् । अज--आजकम् । `प्रकृत्याऽके राजन्यमनुष्ययुवानः'(7.1.1/1247,वा.) इति चलोपो न भवति - "आपत्यस्य च तद्धितेऽनाति"(6.4.151/1082) इति ।
* वृद्धाच्चेति वक्तव्यम् * (म.भा.2.278)। वृद्धानां समूहो वार्द्धकम् ।।
<केदाराद्यञ्च ।। 4-2-40 ।।>
केदारशब्दाद् यञ्प्रत्ययो भवति, चकाराद् वुञ् च, `तस्य समूहः' इत्येतस्मिन्विषये । अचित्तलक्षणस्य ठकोऽपवादः । केदाराणां समूहः कैदार्यम् । कैदारकम् ।
* गणिकायाश्च यञ्वक्तव्यः * (म.भा.2.279)। गणिकानां समूहो गाणिक्यम् ।।
<ठञ् कवचिनश्च ।। 4-2-41 ।।>
कवचिन्शब्दाट्ठञ् प्रत्ययो भवति `तस्य समूहः' इत्येतस्मिन्विषये । कवचिनां समूहः कावचिकम् ।
चकारः केदारादित्यस्यानुकर्षणार्थः - केदाराणां समूहः कैदारिकम् ।।
<ब्राह्मणमाणववाडवाद्यन् ।। 4-2-42 ।।>
ब्राह्मणादिभ्यः शब्देभ्यो यन्प्रत्ययो भवति `तस्य समूहः' इत्येतस्मिन्विषये । नकारः स्वरार्थः । ब्राह्मणानां समूहो ब्राह्मण्यम् । माणव्यम् । वाडव्यम् ।
* यन्प्रकरणे पृष्ठादुपसङ्ख्यानम् * (म.भा.2.279)। पृष्ठानां समूहः पृष्ठ्यः षडहः ।
* अह्नः खः क्रतौ * (म.भा.2.279)। अह्नां समूहः `अहीनः क्रतुः'(काठ.सं.24.10) । क्रताविति किम् ? आह्नः । खण्डिकादिषु दर्शनादञ्भवति ।
* पर्श्वा णस्वक्तव्यः * (म.भा.2.279)। पर्शूनां समूहः पार्श्वम् । पदसंज्ञकत्वाद् गुणो न भवति ।
* वातादूलः * । वातानां समूहो वातूलः ।।
<ग्रामजनबन्धुसहायेभ्यस्तल् ।। 4-2-43 ।।>
ग्रामादिभ्यस्तल्प्रत्ययो भवति `तस्य समूहः' इत्येतस्मिन्विषये । ग्रामाणां समूहः ग्रामता । जनता । बन्धुता । सहायता ।
* गजाच्चेति वक्तव्यम् * (म.बा.2.279)। गजानां समूहो गजता ।।
<अनुदात्तादेरञ् ।। 4-2-44 ।।>
अनुदात्तादेः शब्दादञ्प्रत्ययो भवति `तस्य समूहः' इत्येतस्मिन्विषये । कपोतानां समूहः कापोतम् । मायूरम् । तैत्तिरम् ।।
<खण्डिकादिभ्यश्च ।। 4-2-45 ।।>
`खण्डिका' इत्येवमादिभ्यः शब्देभ्योऽञ् प्रत्ययो भवति `तस्य समूहः' इत्येतस्मिन्विषये । आद्युदात्तार्थमचित्तार्थं च वचनम् । खण्डिकानां समूहः खाण्डिकम् । वाडवम् । क्षुद्रकमालवशब्दोऽत्र पठ्यते । क्षुद्रकाश्च मालवाश्चेति क्षत्त्रियद्वन्द्वः । ततः पूर्वेणैवाञि सिद्धे वचनं गोत्रवुञ्बाधनार्थम् ।
ननु च परत्वादञा वुञ् बाधिष्यते, न च गोत्रसमुदायो गोत्रम्, न च तदन्तविधिरत्रास्ति ? एवं तर्हि एतज् ज्ञापयति - वुञि पूर्वविप्रतिषेधः, सामूहिकेषु च तदन्तविधिरस्तीति । प्रयोजनम् - औपगवकं कापटवमिति वुञ् भवति, वानहस्तिकं गौधेनुकमिति च तदन्तविधिः ।
`क्षुद्रकमालवात्' इत्येतावता योगविभागेन पूर्वविप्रतिषेधस्तदन्तविधिश्च ज्ञापितः, पुनरस्यैव नियमार्थमुच्यते `सेनासंज्ञायाम्' इति।
क्षुद्रकमालवात्सेनासंज्ञायामेवाञ्भवति । क्षौद्रकमालवी सेना । क्षौद्रकमालवकमन्यत् ।(म.भा.2.281)
`अञ्सिद्धिरनुदात्तादेः कोऽर्थः क्षुद्रकमालवात् ।
गोत्राद्वुञ् न च तद्गोत्रं तदन्तान्न च सर्वतः ।।
ज्ञापकं स्यात्तदन्तत्वे तथा चापिशलेर्विधिः ।
सेनायां नियमार्थं च यथा बाध्येत चाञ् वुञा' ।।(म.भा.2.281)
खण्डिका । वडवा । * क्षुद्रकमालवात्सेनासंज्ञायाम् * (ग.सू.82)। भिक्षुक । शुक । उलूक । श्वन्। युग । अहन् । वरत्रा । हलबन्ध ।।
<चरणेभ्यो धर्मवत् ।। 4-2-46 ।।>
चरणशब्दाः कठकलापादयः, तेभ्यः षष्ठीसमर्थेभ्यः समूहे धर्मवत् प्रत्यया भवन्ति । "गोत्रचरणाद् वुञ्"(4.3.126/1506) इत्यारभ्य प्रत्यया वक्ष्यन्ते, तत्रेदमुच्यते - `चरणाद्धर्माम्नाययोः'(4.3.126/1506) इति, तेन धर्मवदित्यतिदेशः क्रियते । वतिः सर्वसादृश्यार्थः । कठानां धर्मः काठकम् । कालापकम् । छान्दोग्यम् । औक्थिक्यम् । आथर्वणम् । तथा समूहेऽपि - काठकम् । कालापकम् । छान्दोग्यम् । औक्थिक्यम् । आथवर्णम् ।।
<अचित्तहस्तिधेनोष्ठक् ।। 4-2-47 ।।>
अचित्तार्थेभ्यो हस्तिधेनुशब्दाभ्यां च ठक् प्रत्ययो भवति `तस्य समूहः' इत्येतस्मिन्विषये । अणञोरपवादः । अपूपानां समूह आपूपिकम् । शाष्कुलिकम् ।

हास्तिकम् । धैनुकम् ।
* धेनोरनञ इति वक्तव्यम् * (म.भा.2.281)। आधेनवम् ।
<केशाश्वाभ्यां यञ्छावन्यतरस्याम् ।। 4-2-48 ।।>
केश, अश्व इत्येताभ्यां यथासङ्ख्यं यञ्, छ इत्येतौ प्रत्ययौ भवतोऽन्यतरस्याम् `तस्य समूहः' इत्येतस्मिन्विषये । केशानां समूहः कैश्यम् । कैशिकम् । अश्वानां समूह आश्वम् । अश्वीयम् ।।
<पाशादिभ्यो यः ।। 4-2-49 ।।>
पाशादिभ्यो यः प्रत्ययो भवति `तस्य समूहः' इत्येतस्मिन्विषये । पाशानां समूहः पाश्या । तृण्या ।
पाश । तृण । धूम । वात । अङ्गार । पोत । बालक । पिटक । पिटाक । शकट । हल । नड । वन ।।
<खलगोरथात् ।। 4-2-50 ।।>
खलगोरथशब्देभ्यो यः प्रत्ययो भवति `तस्य समूहः' इत्येतस्मिन्विषये । खलानां समूहः खल्या । गव्या । रथ्या ।
पाशादिष्वपाठ उत्तरार्थः ।।
<इनित्रकट्यचश्च ।। 4-2-51 ।।>
खलगोरथशब्देभ्यो यथासङ्ख्यम् `इनि' `त्र' `कट्यच्' इत्येते प्रत्यया भवन्ति `तस्य समूहः' इत्येतस्मिन्विषये । खलिनी । गोत्रा । रथकट्या ।।
* खलादिभ्य इनिर्वक्तव्यः * (म.भा.2.282)। डाकिनी । कुण्डलिनी । कुटुम्बिनी ।
* कमलादिभ्यः कण्डच् प्रत्ययो भवति * । कमलखण्डम् । अम्भोजखण्डम् ।
कमल । अम्भोज । पद्मिनी । कुमुद । सरोज । पद्म । नलिनी । कैरविणी । कमलादिराकृतिगणः ।।
* नरकरितुरङ्गाणां स्कन्धच् प्रत्ययः * । नरस्कन्धः । करिस्कन्धः । तुरङ्गस्कन्धः ।।
* पूर्वादिभ्यः काण्डः प्रत्ययो भवति * । पूर्वकाण्डम् । तृणकाण्डम् । कर्मकाडम् ।।<विषयो देशे ।। 4-2-52 ।।>
`समूहः' इति निवृत्तम् । षष्ठी समर्थविभक्तिरनुवर्त्तते । तस्येति षष्ठीसमर्थाद् `विषयः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, योऽसौ विषयो देशश्चेत्स भवति ।
विषयशब्दोऽयं बह्वर्थः । क्वचिद् ग्रामसमुदाये वर्तते - विषयो लब्ध इति । क्वचिदिन्द्रियग्राह्ये - चक्षुर्विषयो रूपमिति । क्वचिदत्यन्तशीलिते ज्ञेये - देवदत्तस्य विषयोऽनुवाक इति । क्वचिदन्यत्राभावे - मत्स्यानां विषयो जलमिति । तत्र देशग्रहणं ग्रामसमुदायप्रतिपत्त्यर्थम् । शिबीनां विषयो देशः शैबः । औष्ट्रः ।
देश इति किम् ? देवदत्तस्य विषयोऽनुवाकः ।।
<राजन्यादिभ्यो वुञ् ।। 4-2-53 ।।>
राजन्यादिभ्यः शब्देभ्यो वुञ्प्रत्ययो भवति `विषयो देशे' इत्येतस्मिन्नर्थे । अणोऽपवादः । राजन्यानां विषयो देशः राजन्यकः । दैवयानकः ।
आकृतिगणश्चायम् । मालवानां विषयो देशः मालवकः । वैराटकः । त्रैगर्तकः ।
राजन्य । देवयान । शालङ्कायन । जालन्धरायण । आत्मकामेय । अम्बरीषपुत्र । वसाति । बैल्ववन । शैलूष । उदुम्बर । बैल्वत । आर्जुनायन । सम्प्रिय । दाक्षि । ऊर्णनाभ ।।
<भौरिक्याद्यैषुकार्यादिभ्यो बिधल्भक्तलौ ।। 4-2-54 ।।>
भौरिक्यादिभ्य ऐषुकार्यादिभ्यश्च यथासङ्ख्यं विधल्, भक्तल् इत्येतौ प्रत्ययौ भवतः `विषयो देशे' इत्येतस्मिन्विषये । अणोऽपवादः । भौरिकिविधः । वैपेयविधः । ऐषुकार्यादिभ्यः - ऐषुकारिभक्तः । सारस्यायनभक्तः ।
भौरिकि । वैपेय । भौलिकि । चैटयत । काणेय । वाणिजक । वालिज । वालिज्यक । शैकयत । वैकयत । इति भौरिख्यादिः ।।
ऐषुकारि । सारस्यायन । चान्द्रायण । द्व्याक्षायण । त्र्यायण । औडायन । जौलायन । खाडायन । सौवीर । दासमित्रि । दासमित्रायण । शौद्रायण । दाक्षायण । शयण्ड । ताक्ष्यार्यण । शौभ्रायण । सायण्डि । शौण्डि । वैश्वमाणव । वैश्वधेनव । नद । तुण्डदेव । विशदेव ।।
<सोऽस्यादिरितिच्छन्दसः प्रगाथेषु ।। 4-2-55 ।।>
`सः' इति समर्थविभक्तिः । `अस्य' इति प्रत्ययार्थः । `आदिः' इति प्रकृतिविशेषणम् । इतिकरणो विवक्षार्थः । `छन्दसः' इति प्रकृतिनिर्देशः । `प्रागाथेषु' इति प्रत्ययार्थविशेषणम् । `सः' इति प्रथमासमर्थात् `अस्य ' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमासमर्थं छन्दश्चेत्तदादिर्भवति, यत्तदस्येति निर्दिष्टं प्रगाथाश्चेत्ते भवन्ति । इतिकरणस्ततश्चेद्विवक्षा । पङ्क्तिरादिरस्य पाङ्क्तः प्रगाथः । आनुष्टुभः । जागतः ।
आदिरिति किम् ? अनुष्टुभ्मध्यमस्य प्रगाथस्य । छन्दस इति किम् ? उदुत्यशब्द आदिरस्य प्रगाथस्य । प्रगाथेष्विति किम् ? पङ्क्तिरादिरस्यानुवाकस्य । प्रगाथशब्दः क्रियानिमित्तकः क्वचिदेव मन्त्रविशेषे वर्तते । यत्र द्वे ऋचौ प्रग्रथनेन तिस्रः क्रियन्ते स प्रग्रथनात्प्रकर्षगानाद्वा `प्रगाथः' इत्युच्यते ।।
* छन्दसः प्रत्ययविधाने नपुंसके स्वार्थ उपसङ्ख्यानम् * (म.भा.2.283)। त्रिष्टुबेव त्रैष्टुभम् । जागतम् ।।
<सङ्ग्रामे प्रयोजनयोद्धृभ्यः ।। 4-2-56 ।।>
`सोऽस्य' इति समर्थविभक्तिः, प्रत्यायार्थश्चानुवर्तते । प्रथमासमर्थविशेषणं प्रयोजनं योद्धारश्च । प्रत्ययार्थविशेषणं सङ्ग्रामः । प्रयोजनवाचिभ्यो

उञ्छादीनां च ।। 6.1.160 ।।

`उच्छ' इत्येवलमादीनामन्त उदात्तो भवति।

उच्छः, म्लेच्छः, जञ्जः, जल्पः--एते घञन्ता इति, ञित्स्वरः प्राप्तः। जपः, व्यधः--इत्यबन्तौ, तयोर्धातुस्वरः प्राप्तः। केचित्तु वध इति पठन्ति। युजेर्घञन्तस्य निपातनादगुणत्वं विशिष्टविषये च निपातनमिदमिष्यते। कालविशेष रथाद्युपकरणे च युगशब्दस्य प्रयोगः, अन्यत्र हि योग एव भवति।

* गरो दूष्येऽबन्तः *। गरशब्दोऽबन्तः, स दूष्य एवान्तोदात्तः। गरः=विषम्. अन्यत्राद्युदात्त एव ।।

* वेदवेगवेष्टबन्धाः करणे *। `हलश्च' इति धञन्ताः, एते करणएऽन्तोदात्ता भवन्ति। भावे आद्युदात्ता एव।

* स्तुयुद्रुवश्छन्दसि *। उपसमस्तार्थमेतत्। परिष्टुत्। संयुत्। परिद्रुत्।

* वर्तनिः स्तोत्रे *। स्तोत्रम्=साम, तत्स्थो वर्त्तनिशब्दोऽन्तोदात्तो भवति, अन्यत्र मध्योदात्तः।

* श्वभ्रे दरः *। श्वभ्रेऽभिधेये दरशब्दोऽन्तोदात्तः। अन्यत्राबन्तत्वादाद्युदात्तः।

* साम्बतापौ भावगर्हायाम् *। अन्तोदात्तौ, अन्यत्राद्युदात्तौ।

* उत्तमशश्वत्तमशब्दौ सर्वत्र *। केचित्तु `भावगर्हायाम्' इति अत्राप्यनुवर्तयन्ति।

* भक्षमन्थभोगदेहाः *। एते घञन्ताः। भक्षिर्ण्यन्तोऽपि घञन्त एव; `एरजण्यन्तानाम्' इति वचनात् ।।

अनुदात्तस्य च यत्रोदात्तलोपः ।। 6.1.161 ।।

`उदात्त' इति वर्तते। यस्मिन्ननुदात्ते परत उदात्तो लुप्यते, तस्यानुदात्तस्यादिरुदात्तो भवति। कुमार ई कुमारी। कुमारशब्दोऽन्तोदात्तः, तस्य ङीप्यनुदात्ते उदात्तो लुप्यते। अनुदात्तो ङीब् उदात्तः, भस्य टेर्लोपः। पथः। पथा। पथे। पथिन्-शब्दोऽन्तोदात्तः। `कुमुदनडवेतसेभ्यो ड्मतुपं'। कुमुद्वान्। नड्वान्। वेतस्वान्। कुमुदातयोऽन्योदात्ताः। ड्मतुबनुदात्तः।

अनुदात्तस्येति किम् ? प्रासङ्गं वहति प्रासङ्ग्यः। प्रासङ्गशब्दः थाथा दिस्वरेणान्तोदात्तः। तस्य यति `तित्स्वरितम्' इति स्वरिते उदात्तो लुप्यते ? नैतदस्ति; स्वरिते हि विधीयमाने परिशिष्टमनुदात्तम्, तत् कुत उदात्तलोपः! तदेतदनुदात्तग्रहणमादेरनुदात्तस्योदात्तार्थम्।

`अन्तः' इति हि प्रकृतत्वादन्तस्य स्यात्-मा हि धुक्षाताम्, मा हि धुक्षाथाम् ।

यत्रेति किम् ? भार्गवः, भार्गवौ, भृगवः। प्राक् सुबुत्पत्तेर्गोत्रप्रत्ययस्य लुक्।

उदात्तग्रहणं किम् ? बैदी। और्वी ।।

धातोः ।। 6.1.162 ।।

`अन्तः' इत्येव। धातोरन्त उदात्तो भवति। पचति। पठति। ऊर्णोति। गोपायति। याति ।।

चितः ।। 6.1.163 ।।

चितोऽन्त उदात्तो भवति। `भञ्जभासमिदो घुरच्' भङ्गुरम्। भासुरम्। मेदुरम्। `आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्', कुण्डिनाः।
चिति प्रत्यये प्रकृतिप्रत्ययसमुदायस्यान्त उदात्त इष्यते। बहुपटवः। उच्चकैः ।।

तद्धितस्य ।। 6.1.164 ।।

`चितः' इत्येव। चितस्तद्धितस्यान्त उदात्तो भवति। `गोत्रेकुञ्जादिभ्यश्च्फञ्', कौञ्जायनाः।

किमर्थमिदम् ? परमपि ञित्स्वरं बाधित्वाऽन्तोदात्तत्वमेव यथा स्यादिति ।।

कितः ।। 6.1.165 ।।

`तद्धितस्य' इत्येव। तद्धितस्य कितोऽन्त उदात्तो भवति। `नडादिभ्यः फक्' नाडायनः। चारायणः। `प्राग्वहतेष्ठक्', आक्षिकः। शालाकिकः ।।

तिसृभ्यो जसः ।। 6.1.166 ।।

तिसृभ्य उत्तरस्य जसोऽन्त उदात्तो भवति। तिस्रस्तिष्ठन्ति।

`उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इत्यस्यापवादः।

शशि `उदात्तयणो हल्पुर्वात्' इति सिद्धे, अन्यत्र बहुवचने `षट्त्रिचतुर्भ्यो हलादिः' इति विदानाज्जसेव लभ्यत इति जस्ग्रहणमुपसमस्तार्थमेक इच्छन्ति, अतितिस्रावित्यत्र स्वरो मा भूदिति ।।

चतुरः शसी ।। 6.1.167 ।।
चतुरः शसि परतोऽन्त उदात्तो भवति। चतुरः पश्य।
चतस्रादेशे आद्युदत्तनिपातनाद्यणादेशस्य च पूर्वविधौ स्थधानिवत्त्वादयं स्वरो न भवति-चतस्रः पश्येति ।।

सावेकाचस्तृतीयादिर्विभक्तिः ।। 6.1.168 ।।
`सौ' इति सप्तमीबहुवचनस्य सुशब्दस्य ग्रहणम्। तत्र सौ य एकाच् तस्मात्परा तृतीयादिर्विभक्तिरुदात्ता भवति। वाचा, वाग्भ्याम्, वाग्भिः। वाग्भ्यः। याता, याद्भ्याम्, याद्भिः।
साविति किम् ? राज्ञा। राज्ञे। एकाच इति किम् ? हरिणा। गिरिणा। राजसु। तृतीयादिरिति किम् ? वाचौ। वाचः। विभक्तिरिति किम् ? वाक्तरा। वाक्तमा। सप्तमीबहुवचनस्य ग्रहणादिह न भवति--त्वया, त्वयीति ।।

अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ।। 6.1.169 ।।
`एकाचः' इति वर्तते, `तृतीयादिर्विभक्तिः' इति च। नित्यशब्दः स्वर्यते, तेन नित्याधिकारविहितः समासः पर्युदस्यते। नित्यसमासादन्यत्रानित्यसमासे यदुत्तरपदमन्तोदात्तमेकाच्च तस्मात्परा तृतीयादिर्विभक्तिरन्यतरस्यामुदात्ता भवति। परमवाचा, परमवाचे। परमवाचे। परमत्वचा, परमत्वचे। यदा विभक्तिरुदात्ता न भवति तदा समासान्तोदात्तत्वमेव।
अन्तोदात्तादिति किम् ? अवाचा। सुवाचा। तत्पुरुषोऽयम्। तत्र `तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्यय' इति पूर्वपदप्रकृतिस्वरः।
उत्तरपदग्रहणमेकाच्त्वेनोत्तरपदं विशेषयितुम्, अन्यथा हि समासविशेषणमेतत्स्यात्। तत्र शुन ऊर्क् स्वोर्ज्जा-इत्यत्रैवायं विधिः स्यात्।
अनित्यसमास इति किम् ? अग्निचिता। सोमसुता। `उपपदमतिङ्' इत्यं नित्याधिकारे समासो विधीयते, तत्र `गतिकारकोपपदात् कृत्' इत्युत्तरपदप्रकृतिस्वरेण चित्-शब्द उदात्तः।
यस्तु विग्रहाभावेन नित्यसमासस्तत्र भवत्येव विकल्पः--अवाचा ब्राह्मणेन, सुवाचा ब्राह्मणेनेति। `बहुव्रीहौ नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वं भवति ।।

आञ्चेश्छन्दस्यसर्वनामस्थानम् ।। 6.1.170 ।।
अञ्चेः पराऽसर्वनामस्थानविभक्तिरुदात्ता भवति छन्दसि विषये। इन्द्रो दधीचो अस्थभिः। `चौ' इतिपूर्वपदान्तोदात्तत्वं प्राप्तम्।
`तृतीयादिः' इति वर्तमाने शशोऽपि परिग्रहार्थमसर्वनामस्थानग्रहणम्। इहापि यथा स्यात्-प्रतीचो बाहून्प्रतिभङ्ग्ध्येषामिति ।।

ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः ।। 6.1.171 ।।
ऊठ्, इदम्, पदादि, अप्, पुम्, रै, दिव्--इत्येतेभ्योऽसर्वनामस्थानविभक्तरुदात्ता भवति। उठ्-प्रष्ठौहः, प्रष्ठौहा।
* ऊठ्युपदाग्रहणं कर्तव्यम् *। इह मा भूत्-अक्षद्युवा। अक्षद्युवे ।
इदम्-आभ्याम्, एभिः। `अन्तोदात्तात्' इत्यधिकारादन्वादेशे न भवति-अथो आभ्यां निपुणमधोतमिति।
पदादयः--`पद्दन्नोमास्' इत्येवमादयो निश्पर्यनता इह गृह्यन्ते। निपदश्चतुरो जहि। या दतो धावति। असन्प्रभृतिभ्यो विभक्तिरनुदात्तैव भवति। ग्रोवायां बद्धो अपि अक आसनि। मत्स्यं नदीन उदनि क्षियन्तम् ।
अप्-अपः पश्य। अद्भिः। अद्भ्यः।
पुम्--पुंसः, पुम्भ्याम्, पुम्भ्यः। पुंसा, पुंसे।
रै--रायः पश्य। राभ्याम्। राभिः।
दिव्--दिवः पश्य। दिवा। दिवे ।।

अष्टनो दीर्घात् ।। 6.1.172 ।।
अष्टनो दीर्घान्तादसर्वनामस्थानविभक्तिरुदात्ता भवति। अष्टाभिः। अष्टाभ्यः। अष्टासु। घृतादिपाठादष्टन्-शब्दोऽन्तोदात्तः, तत्र `झल्युपोत्तमम्' इत्येतस्यापवादो विभक्तेरेवोदात्तत्वं विधीयते।
दीर्घादिति किम् ? अष्टसु प्रक्रमेषु ब्राह्मणोऽग्नीनादधीत।
इदमेव दीर्घग्रहणमष्टन आत्वविकल्पं ज्ञापयति, कृतात्वस्य च षट्संज्ञां ज्ञापयति; अन्यथा ह्यात्वपक्षे सावकाशोऽष्टनः स्वरः परत्वादनात्वपक्षे षट्स्वरेण बाधिष्यत इति किं दीर्घग्रहणेन! ।।

शतुरनुमो नद्यजादी ।। 6.1.173 ।।

`अन्तोदात्तात्' इति वर्तते। अनुम् यः शतृप्रत्ययस्तदन्तादन्तोदात्तात्परा नदी अजादिर्विभक्तिरसर्वनामस्थानमुदात्ता भवति। तुदती, नुदती। लुनती, पुनती। तुदता, नुदता। लुनता, पुनता।
अनुम इति किम् ? तुदन्ती, नुदन्ती। अत्राप्युदुपदेशादिति लसार्वधातुकानुदात्तत्वे एकादेशः, तस्य `एकादेश उदात्तेनोदात्तः' इत्युदात्तत्वम्, तस्य पूर्वत्रासिद्धत्वं नेष्यत इति शत्रन्तमन्तोदात्तं भवति।
नद्यजादी इति किम् ? तुदद्भ्याम्, नुदद्भ्याम्। तुदद्भिः, नुदद्भिः।
अन्तोदात्तादित्येव--ददती। दधतः। `अभ्यस्तानामादिः' इत्याद्युदात्तावेतौ।
* बृहन्महतोरुपसंख्यानम् *। बृहती, महती। बृहता, महता ।।

उदात्तयणो हल्पूर्वात् ।। 6.1.174 ।।
उदात्तस्थाने यो यण् हल्पूर्वस्तस्मात्परा नदी अजादिर्याऽसर्वनामस्थानविभक्तिरुदात्ता भवति। कर्त्री, हर्त्री, प्रलवित्री, प्रसवित्री। कर्त्रा, हर्त्रा, प्रलवित्रा, प्रसवित्रा। तृजन्ता एतेऽन्तोदात्ताः।
उदात्तग्रहणं किम् ? कर्त्री, हर्त्री। कर्त्रा, हर्त्रा, तृन्नन्तोऽयमाद्युदात्तः। हल्पूर्वादिति किम् ? बहुतितवा ब्राह्मण्या।
* नकारग्रहणं कर्तव्यम् *। वाक्पत्नीयं कन्या ।।

नोङ्धात्वोः ।। 6.1.175 ।।
ऊङो धातोश्च य उदात्तयण् हल्पूर्वः, तस्मात्परा तृतीयादिविभक्तिर्नोदात्ता भवति। ब्रह्मबन्ध्वा, ब्रह्मबन्ध्वे। वीरबन्ध्वा, वीरबन्ध्वे। ऊङ् प्रत्ययस्वरेणोदात्तः। तेन सह य एकादेशः सोऽप्युदात्त इति उदात्तयण्वकारः, तस्मादुदात्तत्वे प्रतिषिद्धे `उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इति विभक्तिः स्वर्यते।
धातुयणः खल्वपि---सकृल्ल्वा। सकृल्ल्वे। खलप्वे। क्विवबन्तस्य कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तस्य `ओः सुपि' इति यणादेशः ।।

ह्रस्वनुड्भ्यां मतुप् ।। 6.1.176 ।।
`अन्तोदात्ता' इत्येव। ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुब् उदात्तो भवति। अग्निमान्। वायुमान्। कर्तृमान्। कर्तृमान्। हर्तृमान्। नुटः खल्वपि--अक्षण्वता। शीर्शण्वता।
`अन्तोदात्तात्' इदित्येव--वसुमान्। वसुशब्द आद्युदात्तः, तस्मान्मतुब् अनुदात्त एव भवति।
अत्र च `स्वरविधौ व्यञ्जनमविद्यमानवत्' इत्येषा परिभाषा नाश्रीयते; नुड्ग्रहणात्। तेन मरुत्वानित्यत्र न भवति।
* रेशब्दाच्च मतुप उदात्तत्वं वक्तव्यम् *। आरेवान्।
* त्रेश्च प्रतिषेधो वक्तव्यः *। त्रिवतीर्याज्यानुवाक्या भवन्तीति ।।

नामन्यतरस्याम् ।। 6.1.177 ।।
ह्रस्वग्रहणमनुवर्तते, मतुब्ग्रहणं च, तेन मतुपा ह्रस्वो विशेष्यते। मतुपि यो ह्रस्वस्तदन्तादन्तोदात्तादन्यतरस्यां नाम् उदात्तो भवति। अग्नीनाम्। वायूनाम्। कर्तृणाम्।
मतुपा ह्रस्वविशेषणं किम् ? भूतपूर्वेऽपि ह्रस्वे यथा स्यात्, अन्यथा हि साम्प्रतिक एव स्यात्-तिसृणाम्, चतसृणामिति। सनुट्कस्य ग्रहणं किम् ? धेन्वाम्। शकट्याम्। `उदात्तयणो हल्पूर्वत्' इत्ययमन्तोदात्तः।
ह्रस्वादित्येव--कुमारीणाम्। अन्तोदात्तादित्येव--त्रपूणाम्। वसूनाम् ।।

ङ्याश्छन्दसि बहुलम् ।। 6.1.178 ।।
ङ्यन्ताच्छन्दसि विषये नामुदात्तो भवति बहुलम्। देवसेनानामभिभञ्जतीनाम्। बह्वीनां पिता। न च भवति-नदीनां पारे जयन्तीनां मरुतः ।।

षट्त्रिचतुर्भ्यो हलादिः ।। 6.1.179 ।।
`अन्तोदात्तात्' इत्येतन्निवृत्तम्। षट्संज्ञकेभ्यः, त्रि, चतुर्इत्येताभ्यां च परा हलादिर्विभक्तिरुदात्ता भवति। षड्भिः, षड्भ्यः, षण्णाम्। पञ्चानाम्। सप्तानाम्। त्रि-त्रिभिः, त्रिभ्यः, त्रयाणाम्। चतुर्-चतुर्भ्यः, चतुर्णाम्।
हलादिरिति किम् ? चतस्रः पश्य ।।

झल्युपोत्तमम् ।। 6.1.180 ।।

षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं भवति। त्रिप्रभृतीनामन्त्यमुत्तमम्, तत्समीपे च यत्तदुपोत्तमम्। पञ्चभिस्तपस्तपति। सप्तभिः परान् जयति। तिसृभिश्च वहसे त्रिंशता। ततुर्भिः।
झलीति किम् ? पञ्चानाम्। सप्तानाम्ः अपोत्तममिति किम् ? षड्भिः। षड्भ्यः ।।

विभाषा भाषायाम् ।। 6.1.181 ।।
षट्त्रिचतुर्भ्यो वा झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं भवति विभाषा भाषायं विषये। पञ्चभिः। सप्तभिः। तिसृभिः। वतसृभिः ।।

न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः ।। 6.1.182 ।।
गो, श्वन्, साववर्णम्=सौ प्रथमैकवचने यदवर्णान्तम्, राड्, अङ्, क्रुङ्, कृद्--इत्येतेभ्यो यदुक्तं तन्न भवति। गवा। गवे। गोभ्यामिति।
`सावेकाचस्तृतीयादिर्विभक्तिः' इति प्राप्तिः प्रतिषिध्यते। सुगुना। सुगवे। सुगुभ्याम्। `अन्तोदात्तादुत्तरपदात्' इति प्राप्तिः।
श्वन्-शुना। शुने। स्वभ्याम्। परमशुना। परमशुने। परमश्वभ्याम्। पूर्ववत्प्राप्तिः।
साववर्णः=सौ प्रथमैकवचने यदवर्णानत्तं तस्य ग्रहणम्--येभ्यः। तेभ्यः। केभ्यः।
राट्--राजतिः क्विबन्तः। राजा। परमराजः।
अङ्-अञ्चतिः क्विबन्तः, तस्य सनकारस्य ग्रहणं विषयावधारणार्थम्, यत्रास्य नलोपो नास्ति तत्र प्रतिषेधो यथा स्यात्। `नाञ्चेःपूजायाम्' इति प्रतिषिध्यते नलोपः। प्राञ्चा। प्राङ्भ्याम्। नलोपविषये तु भवत्येव विभक्तेरुदातत्वम्। प्राचा। प्राचो। प्राग्भ्याम्।
क्रुङ् क्विन्नन्त एव--क्रुञ्चा। परमक्रुञ्चा।
कृत्--करोतिः कृतिर्वा क्विबन्तः। कृता। परमकृता ।।

दिवो झल् ।। 6.1.183 ।।
दिवः परा झलादिर्विभक्तिर्नोदात्ता भवति। द्युभ्याम्। द्युभिः। `सावेकाचः' इति `ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः' इति वा प्राप्तिः प्रतिषिध्यते।
झलिति किम् ? दिवा ।।

नृ चान्यतरस्याम् ।। 6.1.184 ।।
`नृ' इत्येतस्मात्परा झलादिर्वभक्तिरन्यतरस्यां नोदात्ता भवति। नृभ्याम्। नृभिः। नृभ्यः। नृषु।
झलित्येव--न्रा। न्रे ।।

तित्स्वरितम् ।। 6.1.185 ।।
तित्स्वरितं भवति। सन्नन्ताद्यत्--चिकीर्ष्यम्, जिहीर्ष्यम्। `ऋहलोर्ण्यत्'--कार्यम्, हार्यम्, प्रत्ययद्युदात्तस्यापवादः ।।

तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः ।। 6.1.186 ।।
तासेरनुदात्तेतो ङितोऽकारान्तोपदेशाच्च शब्दात्परं लसार्वधातुकमनुदात्तं च भवति ह्नुङ्, इङ्-इत्येताभ्यां परं वर्जयित्वा। तासेस्तावत्--कर्ता, कर्तारौ, कर्तारः। प्रत्ययस्वरापवादोऽयम्।
अनुदात्तेतः--आस--आस्ते। वस-वस्ते।
ङित्--षूङ्-सूते। शीङ्-शेते।
अदुपदेशात्--तुदतः। नुदतः। पचतः। पठतः। अनुबन्धस्यानैकान्तिकत्वादकारान्तोपदेश एव शप्। पचमानः। यजमानः। यद्यत्र मुक् अकारमात्रस्य स्यात्, तदा लसार्वधातुकमदुपदेशादनन्तरमिति सिद्धो निघातः। अथाकारान्तस्याङ्गस्य ? तथापि लसार्वधातुकानुदात्तत्वे कर्तव्ये बहिरङ्गत्वादसिद्ध इति सिद्धम्। चित्स्वरोऽप्यनेन लसार्वधातुकानुदात्तत्वेन परत्वाद्बाधते।
तास्यादिभ्य इति किम् ? चिनुतः। चिन्वन्ति। ङिदयं श्नुः पूर्वस्य कार्यं प्रति न तु परस्य। उपदेशग्रहणं किम् ? इह य यथा स्यात्-पचाव, पचाम इति। इह च मा भूत्-हतः, हथ इति। लग्रहमं किम् ? कतीह पचमानाः। सार्वधातुकमिति किम् ? शिश्ये। शिश्याते। शिश्यिरे। अहन्विङोरिति किम् ? ह्नुते। यदधीते ।।

आदिः सिचोऽन्यतरस्याम् ।। 6.1.187 ।।
`उदात्तः' इति वर्तते। सिजन्तस्यान्यतरस्यामादिरुदात्तो भवति। मा हि कार्ष्टाम्। मा हि कार्ष्टाम्। एकोऽत्राद्युदात्तः, अपरोऽन्तोदात्तः। मा हि लाविष्टाम्,

मा हि लाविष्टाम्। एकोऽत्राद्युदात्तः, अपरो मध्योदात्तः। सिचश्चित्करणादागमानुदात्तत्वं हि बाध्यते।
* सिच आद्युदात्तत्वेऽनिटः पितः पक्षे उदात्तत्वं वक्तव्यम् *। मा हि कार्षम्। अनिट इति किम् ? मा हि लाविषम्। मध्योदात्त एवाद्युदात्ताभावपक्षे भवति ।।

स्वपादिर्हिंसामच्यनिटि ।। 6.1.188 ।।
लसार्वधातुकग्रहणं यदनुवर्तते, तद् `अच्यनिटि' इति सम्बन्धादिह सप्तम्यन्तमुपजायते। स्वपादिरा वृत्करणात्। स्वपादीनां हिंसेश्चाजादावनिटि लसार्वधातुके परतोऽन्यतरस्यामादिरुदात्तो भवति। स्वपन्ति। स्वसन्ति। हिंसेः खल्वपि--हिंसन्ति। प्रत्ययस्वरेण पक्षे मध्योदात्तः।
अचीति किम् ? स्वप्यात्। हिंस्यात्। अनिटीति किम् ? स्वपितः। स्वसितः ।।
ङित्यजादावयं विधिरिष्यते। इह न भवति--स्वपानि। हिनसानि ।।

अभ्यस्तानामादिः ।। 6.1.189 ।।
अभ्यस्तानामजादावनिटि लसार्वधातुके परत आदिरुदात्तो भवति। ददति, ददतु। दधति, दधतु। जक्षति, जक्षतु,। जाग्रति, जाग्रतु।
अचीत्येव--दद्यात्। अनिटीत्येव--जक्षितः। `आदिः' इति वर्तमाने पुनरादिग्रहणं नित्यार्थम् ।।

अनुदात्ते च ।। 6.1.190 ।।
अविद्यमानोदात्ते च लसार्वधातुके परतोऽभ्यस्तानामादिरुदात्तो भवति। अनजाद्यर्थ आरम्भः। ददाति। जहाति। दधाति। जिहीते। मिमिते।
अनुदात्त इति बहुव्रीहिनिर्देशो लोपयणादेशार्थः। मा हि स्मदधात्। ददात्यत्र ।।

सर्वस्य सुपि ।। 6.1.191 ।।
सर्वशब्दस्य सुपि परत आदिरुदात्तो भवति। सर्वः, सर्वौ, सर्वे। सुपीति किम् ? सर्वतरः। सर्वतमः।
* प्रत्ययलक्षणेनाप्ययं स्वर इष्यते सर्वस्तोम इति *। * सर्वस्वरोऽनच्कस्येति वक्तव्यम् *। सर्वकः। चित्स्वरेणान्तोदात्तो भवति ।।

भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति ।। 6.1.192 ।।
भी, ह्री, भृ, हु, मद, जन, धन, दरिद्रा, जागृ-इत्येतेषामभ्यस्तानां लसार्वधातुके पिति प्रत्ययात्पूर्वमुदात्तं भवति। बिभेति। जिह्रेति। बिभर्ति। जुहोति। ममतु नः परिज्मा। मदेः `बहुलं छन्दसि' इति विकरणस्य श्लुः। जजनमिन्द्रम्। `जन जनने' इत्यस्य पञ्चमे लकारे रूपम्। `धन धान्ये' इत्यस्य पञ्चमे लकारे-दधनत्। दरिद्रति। जागर्ति।
भ्यादीनामिति किम् ? ददाति। पितीति किम् ? दरिद्रति ।।

लिति ।। 6.1.193 ।।
लिति=लकारेत्संज्ञके प्रत्ययात्पूर्वमुदात्तं भवति। चिकीर्षकः। जिहीर्षकः। भौरिकिविधम्। भौलिकिविधम्। ऐषुकारिभक्तम् ।।

आदिर्णमुल्यन्यतरस्याम् ।। 6.1.194 ।।
णमुलि परतोऽन्यतरस्यामादिरुदातो भवति। लोलूयंलोलूयम्। पोपूयंपोपूयम्। आम्रोडितानुदात्तत्वे कृते पूर्वो लोलूयंशब्द एकत्राद्युदात्तः, अपरत्र लित्स्वरेण मध्योदात्तः ।।

अचः कर्तृयकि ।। 6.1.195 ।।
`उपदेशे' इति वर्तते। अजन्ता ये उपदेशे धातवस्तेषां कर्तृयकि अन्यतरस्यामादिरुदात्तो भवति। लूयते केदारः स्वयमेव। स्तीर्यते केदारः स्वयमेव।
यदाऽऽद्युदात्तत्वं न भवति, तदा लसार्वधातुकनिघाते कृते अदुपदेशभक्तयक एव स्वरो भवति।
जनादीनामुपदेश एवात्वं द्रष्टव्यम्, तत्राप्ययं स्वर इष्यते। जायते स्वयमेव। सायते स्वयमेव। खायते स्वयमेव।
अच इति किम् ? भिद्यते स्वयमेव। कर्तृग्रहणं किम् ? लूयते केदारो देवदत्तेन ।।

थलि च सेटीडन्तो वा ।। 6.1.196 ।।
सेटि थलि इट् वा उदात्तो भवति अन्तो वा आदिर्वाऽन्यतरस्याम्। लुलविथ। यदा नैते त्रयः स्वराः, तदा `लिति' प्रत्ययात्पूर्वमुदात्तं भवति। तेनैते चत्वारः स्वराः पर्यायेण भवन्ति।
सेटीति किम् ? ययाथ। `लिति' प्रत्ययात्पूर्वमूदात्तम्-इत्ययमेवात्र स्वरो भवति।।

ञ्नित्यादिर्नित्यम् ।। 6.1.197 ।।

ञिति निति च नित्यमादिरुदात्तो भवति। `गर्गादिभ्यो यञ्' गार्ग्यः। वात्स्यः। `वासुदेवार्जुनाभ्यां वुन्'--वासुदेवकः, अर्जुनकः। प्रत्ययस्वरापवादोऽयं योगः। प्रत्ययलक्षणमत्र नेष्यते, तेन गर्गाः, बिदाः, चञ्चाः-इत्यत्र यञि कनि च लुप्ते भवति ।।

आपन्त्रितस्य च ।। 6.1.198 ।।

आमन्त्रितस्यादिरुदात्तो भवति। देवदत्त ! देवतत्तौ, देवदत्ताः। अत्र `कारकाद्दत्तश्रुतयोरेवाशिषि' इति प्राप्तिर्बाध्यते।
लुमतापि लुप्ते प्रत्ययलक्षणमत्रेष्यते। सर्पिरागच्छ, सप्तागच्छतेति ।।

पथिमथोः सर्वनामस्थाने ।। 6.1.199 ।।

पथिमथिशब्दावौणादिकाविनिप्रत्ययान्तौ प्रत्ययस्वरेणान्तोदात्तौ, तयोः सर्वनामस्थाने परत आदिरुदात्तो भवति। पन्थाः, पन्थानौ, पन्थानः। मन्थाः, मन्थानौ, मन्थानः।
सर्वनामस्थान इति किम् ? पथः पश्य। मथः पश्य। उदात्तनिवृत्तिस्वरेणान्तोदात्तो भवति। प्रत्ययलक्षणमत्रापि नेष्यते।
पथिप्रियः--इत्यत्र पूर्वपदप्रकृतिस्वरेणान्तोदात्तः पथिशब्दः ।।

अन्तश्च तवै युगवत् ।। 6.1.200 ।।

तवैप्रत्ययान्तस्यान्तः, चशब्दादादिश्च युगपदुदात्तौ भवतः। कर्त्तवै। हर्तवै। प्रत्ययाद्युदात्तत्वापवादः।
युगपद्ग्रहणं पर्यायनिवृत्यर्थम् । `एकवर्जम्' इति वचनाद्यौगपद्यं न स्यात् ।।

क्षयो निवासे ।। 6.1.201 ।।

क्षयशब्दो निवासेऽभिधेये आद्युदात्तो भवति। क्षियन्ति निवसन्त्यस्मिन्निति क्षयः, `पुंसि संज्ञायां घः प्रायेण' इति घप्रत्ययान्तस्य प्रत्ययस्वरः प्राप्तः। क्षये जागृहि प्रपश्यन्।
निवास इति किम् ? क्षयो वर्तते दस्यूनाम्। `एरच्' इत्ययमजन्तः ।।

जयः करणम् ।। 6.1.202 ।।।

जयशब्दः करणवाची आद्युदात्तो भवति। ज्यन्ति तेनेति जयः। `पुंसि संज्ञायां घः प्रायेण' इति घः, तस्य प्रत्ययस्वरः प्राप्तः। जयोऽश्वः।
करणमिति किम् ? जयो वर्तते ब्राह्मणानाम्। अत्रापि `एरच्' इत्ययमजन्तः ।।

वृषादीनां च ।। 6.1.203 ।।

`वृष' इत्येवमादीनामादिरुदात्तो भवति। वृषः। जनः। ज्वरः। ग्रहः। हयः गयः। सर्वे एते पचाद्यच्प्रत्ययान्ताः। गय इत्यत्र गायतेर्निपातनादेत्वम्।
नयः। तयः। अयः। अंशः। वेदः। अशः। दवः। एतेऽपि तथैवाच्प्रत्ययान्ताः। सूदः-इगुपधादिति कप्रत्ययान्तः। गुहभिदादिः, अङ्प्रत्ययान्तः ।।
* शमरणौ संज्ञायां सम्मतौ बावकर्मणोः *। शमो भावे रणः कर्मणि अजन्तावेतौ निपातनाद् भावकर्मणोर्भवतः---मन्त्रः पचाद्यजन्तः। शान्तिः--इति क्तिजन्तः। कामः, यामः---घञन्तावेतौ।
आरा,धारा, कारा-भिदादयः। वहः---गोचरादिषु घप्रत्ययान्तः। कल्पः--अजन्तः। पादः--घञन्तः। तत्र क्वचित्प्रत्ययस्वरः प्राप्तः, क्वचित् `कर्षात्वतो घञोऽन्त उदात्तः' इति। वृषादिराकृतिगणः। अविहितमाद्युदात्तत्वं वृषादिषु द्रष्टव्यम् ।।

संज्ञायामुपमानम् ।। 6.1.204 ।।

उपमानशब्दः संज्ञायामाद्यदात्तो भवति। चञ्चा। वर्ध्रिका। खरकुटी। दासी। उपमानशब्दा एते उपमेयस्य संज्ञाः। तत्र `इवे प्रतिकृतौ' इति यः कन् तस्य `लुम्मनुष्ये' इति लुप्।
यद्येवम्, किमर्थमिदमुच्यते, प्रत्ययलक्षणेन सिद्धमाद्युदात्तत्वम् ? एतदेव ज्ञापयति--क्वचिदिह स्वरविधौ प्रत्ययलक्षणं न भवतीति। तथा च पूर्वत्रोदाहृतम्।
संज्ञायामिति किम् ? अग्निर्माणवकः। उपमानमिति किम् ? देवदत्तः ।।

निष्ठा च द्व्यजनात् ।। 6.1.205 ।।

निष्ठान्तं च द्वयच् संज्ञायां विषये आद्युदात्तं भवति स चेदादिराकारो न भवति। दत्तः। गुप्तः। बुद्धः। प्रत्ययस्वरापवादः।
निष्ठेति किम् ? देवः। भीमः। द्व्यजिति किम् ? चिन्तितः। रक्षितः। अनादिति किम् ? त्रातः। आप्तः। संज्ञायामिति किम् ? कृतम्। हृतम् ।।

शुष्कधृष्टौ ।। 6.1.206 ।।
`आदिरुदात्तः' इति वर्तते। शुष्क, धृष्ट-इत्येतावाद्युदात्तौ भवतः। शुष्कः। धृष्टः।
असंज्ञार्थ आरम्भः ।।

आशितः कर्ता ।। 6.1.207 ।।
आशितशब्दः कर्तृवाची आद्युदात्तो भवति। आशितो देवदत्तः। अशेरयमाङ्पूर्वादविवक्षिते कर्मणि कर्तरि क्तः। तत्र `थाथघञ्' इति प्राप्तः स्वरो बाध्यते।
कर्तरीति किम् ? आशितमन्नम्। आशितं देवदत्तेन। पूर्वत्र कर्मणि क्तः, उत्तरत्र भावे।।

रिक्ते विभाषा ।। 6.1.208 ।।
रिक्तशब्दे विभाषा आदिरुदात्तो भवति। रिक्तः। रिक्तः। संज्ञायाम् `निष्ठा च द्व्यजनात्' इत्यनेन पूर्वविप्रतिषेधेन नित्यमाद्युदात्तः ।।

जुष्टार्पिते चच्छन्दसि ।। 6.1.209 ।।
जुष्ट, अर्पित--इत्येते शब्दरूपे छन्दसि विषये विभाषा आद्युदात्ते भवतः। जुष्टः। अर्पितः।
छन्दसीति किम् ? भाषायां प्रत्ययस्वरेणान्तोदात्तावोतौ ।।

नित्यं मन्त्रे ।। 6.1.210 ।।
जुष्ट, अर्पित--इत्येते शब्दरूपे मन्त्रविषये नित्यमाद्युदात्ते भवतः। जुष्टं देवानाम्। अर्पितं पितृणाम्। पूर्वेणात्र विकल्पः प्राप्तः।
केचिदत्र `जुष्ट'-इत्येतदेवानुवर्तयन्ति। अर्पितशब्दस्य विभाषा मन्त्रेऽपीच्छन्ति। अन्तोदात्तोऽपि ह्ययं मन्त्रे पठ्यते--तस्मिन्साकं त्रिशता न शङ्कवोऽर्पिता इति ।।

युष्मदस्मदोर्ङसि ।। 6.1.211 ।।
युष्मदस्मदी मदिक्प्रत्ययान्तेऽन्तोदात्ते, तयोर्ङसि परत आदि रुदात्तो भवति। तव स्वम्। मम स्वम् ।।

ङयि च ।। 6.1.212 ।।
`युष्मदस्मदोः' इति वर्तते, `आदिरुदत्तः' इति च। `ङे' इत्येत्स्मिश्च परतो युष्मदस्मदोरादिरुदात्तो भवति। तुभ्यम्। मह्यम्।
पृथग्योगरणं यथासंख्यशङ्कानिवृत्त्यर्थम् ।।

यतोऽनावः ।। 6.1.213 ।।
`निष्ठा च द्व्यजनात्' इत्यतो द्व्यज्ग्रहणमनुवर्त्तते। यत्प्रत्ययान्तस्य द्व्यच आदिरुदात्तो भवति, न चेन्नौशब्दात्परो भवति। `अचो यत्'--चेयम्, जेयम्।
`शरीरावयवाद्यत्'--कण्ठ्यम्, ओष्ठ्यम्। `तित्स्वरितम्' इत्यस्यापवादः।
अनाव इति किम् ? नाव्यम्।
द्व्यच इत्येव--चिकीर्ष्यम्। ललाट्यम् ।।

ईडवन्दवृशंसदुहां एयतः ।। 6.1.214 ।।
ईड, वन्द, वृ, शंस, दुह्--इत्येतेषां यो ण्यत् तदन्तस्यादिरुदात्तो भवति। ईड्यम्। वन्द्यम्। वार्यम्। शंस्यम्। दोह्या धेनुः। द्व्यनुबन्धकत्वाद् ण्यतो यद्ग्रहणेन ग्रहणं नास्तीति `तित्स्वरितम्' इत्येतत् प्राप्तम्। वार्यमिति--`वृङ् सम्भक्तौ' इत्यस्यायं ण्यत्। क्यब्विधौ हि वृञ एव ग्रहणमिष्यते ।।

विभाषा वेण्विन्धानयोः ।। 6.1.215 ।।
वेणु, इन्धान--इत्येतयोर्विभाषा आदिरुदात्तो भवति। वेणुः, वेणुः। इन्धानः, इन्धानः।

वेणुशब्दोऽयम् `आजिवृरीभ्यो नित्' इति णुप्रत्ययान्तो नित्त्वान्नित्यमाद्युदात्तः प्राप्तः।

इन्धानशब्दोऽपि यदा चानशन्तस्तदा चित्त्वादन्तोदात्तः। अथ शानजन्तस्तदा लसार्वधातुकानुदात्तत्वे कृते उदात्तनिवृत्तिस्वरेण मध्योदात्तः। तदेवमिन्धाने सर्वथाऽप्राप्तमाद्युदात्तत्वं पक्षे विधीयते।
वेणुरिव वेणुरित्युपमानं यदा संज्ञा भवति, तदा `संज्ञायामुपमानम्' इति नित्यमाद्युदात्तत्वमिष्यते ।।

त्यागरागहासकुहश्वठक्रथानाम् ।। 6.1.216 ।।
त्याग, राग, हास, कुह, श्वठ, क्रथ--इत्येतेषां विभाषा आदिरुदात्तो भवति। त्यागः, रागः, हासः--एते घञन्ताः, तेषां पक्षे `कर्षात्वतो घञोऽन्त उदात्तः' इत्युदात्तत्वमेव भवति। कुहः, श्वठः, क्रथः--एते पचाद्यजन्ताः ।।

उपोत्तमं रिति ।। 6.1.217 ।।
रिदन्तस्योपोत्तममुदात्तं भवति। त्रिप्रभृतीनामन्त्यमुत्तमं तस्य समीपे यत्तदुपोत्तमम्। करणीयम्। हरणीयम्। पटुजतीयः। मृदुजातीयः. प्रत्ययस्वरापवादोऽयम् ।।

चङ्यन्यतरस्याम् ।। 6.1.218 ।।
चङन्तेऽन्यतरस्यामुपोत्तममुदात्तं भवति। मा हि चीकरताम्। `न माङ्योगे' इत्यटि प्रतिषिद्धे `हि च' इति निघातेऽदुपदेशादिति लसार्वधातुकानुदात्तत्वे कृते चङ एव स्वरे प्राप्ते पक्षे धात्वकार उदात्तो भवति।
उपोत्तमग्रहणाद् द्वयोर्न भवति--मा हि दधत् ।।

मतोः पूर्वमात्संज्ञायां स्त्रियाम् ।। 6.1.219 ।।
मतोः पूर्व अकार उदात्तो भवति तच्चेन्मत्वन्तं स्त्रीलिङ्गे संज्ञा भवति। उदुम्बरावती। पुष्करावती। वीरणावती। शरावती। `शरादीनां च' इति दीर्घः। आदिति किम् ? इक्षुमती। द्रुमवती। संज्ञायामिति किम् ? खट्वावती। स्त्रियामिति किम् ? शरावान्। मतोरिति किम् ? गवादिनी ।।

अन्तोऽवत्याः ।। 6.1.220 ।।
`संज्ञायाम्' इत्येव। अवतीशब्दान्तस्यसंज्ञायामन्त उदात्तो भवति। अजिरवती। शदिरवती। हंसवती। कारण्कडवती। ङोप पित्तवादनुदात्तत्वं प्राप्तम्।
`अवत्या' इति किमुच्यते, न वत्या इत्येवमुच्येत ? नैवं शक्यम्; इहापि स्यात्--राजवती। स्वरविधौ नलोपस्यासिद्धत्वान्नायमवतीशब्दः। वत्वं पुनराश्रयात्सिद्धम् ।।

ईवत्याः ।। 6.1 221 ।।
ईवतीशब्दान्तस्यान्त उदात्तो भवति स्त्रियां संज्ञायां विषये। अहीवती। कृषीवती। मुनोवतो।

चौ ।। 6.1.222 ।।
`चौ' इत्यञ्चतिर्लुप्तनकारो गृह्यते। तस्मिन्परतः पूर्वस्यान्त उदातो भवति। दधीचः पश्य। दधीचा। दधीचे। मधूचः पश्य। मधूचा। मधूचे। उदात्तनिवृत्तिस्वरापवादोऽयम् ।
* चावतद्धित इति वक्तव्यम् *। दाधोचः। माधूचः। प्रत्ययस्वरएवात्र भवति।

समासस्य ।। 6.1.223 ।।
समासस्यान्त उदात्तो भवति। राजपुरुषः। ब्राह्मणकम्बलः। कन्यास्वनः। पटहशब्दः। नदीघोषः। राजपृषत्। ब्राह्मणसमित्।
`स्वरविधौ व्यञ्जनमविध्यमानत्' इति हलन्तेऽप्यन्तोदात्तत्वं भवति। नानापदस्वरस्यापवादः ।।

इति श्रीवामनविरचितायां काशिकावृत्तौ
षष्ठस्याध्यायस्य प्रथमः पादः
------------

## 6.2

अथ षष्ठाध्याये द्वितीयः पादः

बहुव्रीहौ प्रकृत्या पूर्वपदम्।। 6 - 2 - 1।।

पूर्वपदग्रहणमत्र पूर्वपदस्थे स्वरे उदात्ते स्वरिते वा वर्त्तते। बहुव्रीहौ समासे पूर्वपदस्य यः स्वरः स प्रकृत्या भवति स्वभावेनावतिष्ठते, न विकारमनुदात्तत्वमापद्यते। समासान्तोदात्तत्वे हि सति अनुदात्तं पदमेकवर्जम् इति सोऽनुदात्तः स्यादिति समासान्तोदात्तत्वापवादोऽयमारभ्यते । कार्ष्णोत्तरासङ्गाः । कृष्णो मृगः तस्य विकारः कार्ष्णः प्राणिरजतादिभ्योऽञ् इत्यञ्प्रत्ययान्तो ञित्स्वरेणाद्युदात्तः। यूपवलजः । यूपशब्द उणादिषु कुसुयुभ्यश्च इति पप्रत्ययान्तः तत्र च दीर्घः इति, नित् इति च वर्त्तते,तेनाद्युदात्तः। ब्रह्मचारिपरिस्कन्दः। ब्रह्मचारिन्शब्दः कृदुत्तरपदप्रकृतिस्वरेः णान्तोदात्तः। स्नातकपुत्रः । स्नातशब्दः कन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः। अध्यापकपुत्रः। लित्स्वरेणाध्यापकशब्दो मध्योदात्तः। श्रोत्रियपुत्रः ।श्रोत्रियशब्दो नित्त्वादाद्युदात्तः।मनुष्यनाथः। गनुष्यशब्दः तित्स्वरितम् इति स्वरितान्तः। उदात्तग्रहणं स्वरितग्रहणं चात्रानुवर्तते, तेन सर्वानुदात्ते पूर्वपदे वेधिरेव नास्तीति समासान्तेदात्तत्वं भवति। समभाग इति समशब्दो हि सर्वानुदात्तः।।

तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः।।6 - 2 - 2।।

तत्पुरुषे समासे तुल्यार्थं तृतीयान्तं सप्तम्यन्तमुपमानवाचि अव्ययं द्वितीयान्तं कृत्यान्तं च यत्पूर्वपदं तत्प्रकृतिस्वरं भवति। तुल्यार्थ-तुल्यश्वेतः। तुल्यलोहितः। तुल्यमहान्।सदृक्च्छ्वेतः । सदृग्लोहितः । सदृग्महान् । सदृशश्वेतः । सदृशलोहितः सदृशमहान्। एते कृत्यतुल्याख्या अजात्या इति कर्मधारयाः। तत्र तुल्यशब्दः यतोऽनावः इत्याद्यदात्तः । सदृवशब्दः समानान्ययोश्च इति क्विन्प्रत्ययान्तः , कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः सदृशशब्दोऽपि कञन्तो मध्योदात्तः । तुल्यार्थं । तुतीया-शङ्कुलया खण्डः शङ्कुलाखण्डः। किरिणा काणः किरिकाणः। शङ्कुपूर्वाल्लातेः घञर्थे कविधानम् इति वा कप्रत्ययान्तः शङ्कुलाशब्दोऽन्तोदात्तः। किरिशब्दोऽपि किरतेः कॄगॄशॄपॄकुटिभिदिच्छिदिभ्यश्च इतीकारप्रत्ययः, किदौणादिकः तेनासावन्तोदात्तः। तृतीया। सप्तमी-अक्षेषु शौण्डोऽक्षशौण्डः। पनशौण्डः अशेर्देवने इति सप्रत्ययान्तोन्तोऽक्षशब्दोऽन्तोदात्तः। पानशब्दो ल्युडन्तो लित्स्वरेणाद्यदात्तः। सप्तमी । उपमान-शास्त्रीश्यामा। कुमुदश्येनी। हंसगद्गदा । न्यग्रोधपरिमण्डला। दूर्वाकाण्डश्यामा। शारकाण्डगौरी। उपमानानि सामान्यवचनैः इति समासः। शस्त्रीशब्दो ङीष्प्रत्ययान्तोऽन्तोदात्तः। कुमुशब्दोऽपि कौ मोदते इति मूलविभुजादित्वात्कप्रत्ययान्तः,नब्विषयस्यानिसन्तस्य इति वाऽऽद्युदात्तः। हंसशब्दः वृतृवदिहनिकमिकषिभ्यः सः इति सप्रत्ययान्तः। न्यग्रोहतोति न्यग्रोधः पचादित्वाद् अच्प्रत्ययान्तः, तस्य न्यग्रोधस्य च केवलस्य इति निपातनाद् हकारस्य धकारः मध्योदात्तत्वं च। दूर्वाकाण्डशरकाण्डशब्दौ षष्ठीतत्पुरुषा वुत्ततरपादद्युदात्ती।उपमान।अव्ययुअब्राह्मणः। अवृषलः।कुब्राह्मणः। कुवृषलः।निष्कौशम्बिः। विर्वाराणसिः। अतिमालः। एतान्यवययान्याद्युदात्तानि। अव्यये नञ्कुनपितानामिति वक्तव्यम् इह मा भूत् स्नात्वाकालक इति। अव्यय। द्वितीया-मुहूर्त्तसुखम्। मुहूर्त्तरमणीयम्।सर्वरात्रकल्याणी। सर्वरात्रशोभना। अत्यन्तसंयोगे च इति द्वितीयासमासः । मुहूर्त्तशब्दः पूषोदरादिरन्तोदात्तः । सर्वरात्रशब्दोऽप्यच्प्रत्ययान्तः । द्वितीया । कृत्य - भोज्योष्णम् । भोज्यलवणम् । पानीयशीतम् । हरणीयचूर्णम् । भोज्यशब्दौ ण्यदान्तोऽन्तस्वरितः। पानीयहरणीयशब्दयोः उपोत्तमं रिति इति ईकार उदात्तः।।

वर्णो वर्णेष्वनेते ।। 6 - 2 - 3।।

प्रकृत्या पूर्वपदम्, तत्पुरुषे इति च वर्त्तते। वर्णं वर्णवाचि पूर्वपदं वर्ववाचिष्वेवोत्तरपदेषु एतशब्दवर्जितेषु परतस्तत्पुरुषे समासे प्रकृतिस्वरं भवति। कृष्णसारङ्गः, लोहितसारङ्गः। कृष्णकल्माषः, लोहितकल्माषः । कृषेर्वर्णे इति कृष्णशब्दो नक्प्रत्ययान्तोऽन्तोदात्तः। लोहितशब्दोऽपि रुहे रश्च लो वा इतीतन्प्रत्ययान्त आद्युदात्तः। वर्णं इति किम् परमकृष्णः । वर्णेष्वति किम् कृष्णतिलाः अनेत इति किम् कृष्णैतः। लोहितैतः।।

गाधलवणयोः प्रमाणे।। 6 - 2 - 4।।

प्रमाणवाचिनि तत्पुरुषे समासे गाध, लवण- इत्येतयोरुत्तरपदयोः पूर्वपदं प्रकृतिस्वरं भवति। शम्बगाधमुदकम्। अरित्रगाधमुदकम् । तत्प्रमाणमित्यर्थः। गोलवणम् । अश्वलवणम्। यावद् गवे दीयते तावदित्यर्थः। षष्ठीसमासा एते। तत्र शमेर्बन् इति बन्प्रत्ययान्तत्वाच्छम्बशब्द आद्युदात्तः अरित्रशब्दः अर्त्तिलूधूसू इतीत्रप्रत्ययान्तो मध्योदात्तः। गोशब्दो डोप्रत्ययान्तोऽन्तोदात्तः। अश्वशब्दः अशूप्रुषि इति क्वन्प्रत्ययान्त आद्युदात्तः। प्रमाणम् - इयत्तापरिच्छेदमात्रमिह द्रष्टव्यम्, न पुनरायाम एव । स्वरव्यङ्ग्यं च प्रमाणविशेषविषयत्वमेतेषाम्। प्रमाण इति किम् परमगधम् परमलवणम्।।

दायाद्यं दायादे ।। 6 - 2 - 5।।

तत्पुरुषे समासे दायादशब्द उत्तरपदे दायाद्यवाचि पूर्वपदं प्रकृतिस्वरं भवति। विद्यादायादः। धनदायादः। संज्ञायां समजनिषद इति विद्याशब्दः क्यप्प्रत्ययान्तः। उदात्तः इति च तत्र वर्त्तते,तेनायमन्तोदात्तः। कृपृवृजिमन्दिनिधाञ्भ्यः क्युः इति बहुलवचनात् केवलादपि धाञः क्युप्रत्ययः तेन धनशब्दः प्रत्ययस्वरेणाद्युदात्तः । अथ विद्यादायाद तइति केन षष्ठी स्वामीश्वराधिरपतिदायाद इति । यद्येवम्, प्रतिपदविधाना च षष्ठी न समस्यते इति समासप्रतिषेधः प्राप्नोति एवं तर्हि शेषलक्षणैवात्र षष्ठी, तस्यास्तु सप्तमी विधीयमाना बाधिका मा विज्ञायीति पूनरभ्यनुज्ञायते । दायद्यमिति किम् परमदायादः। अत्र समासान्तोदात्तत्वमेव भवति ।।

प्रतिबन्धि चिरकृच्छ्रयोः।। 6 - 2 - 6।।

तत्पुरुषे समासे चिरकृच्छ्रयोरुत्तरपदयोः प्रतिबन्धिवाचि पूर्वपदं प्रकृतिस्वरं भवति। गमानचिरम्। गमनकृच्छ्रम्। व्याहरणचिरम्। व्याहरणकृच्छ्रम्। गमनव्याहरणशब्दौ ल्युडन्तौ,तयोर्लित्स्वरः। गमनं च चञ्चिरम चेति विशेषणसमासोऽयम् पयूरव्यंसकादिर्वैष द्रष्टव्यः। गमनं हि कारणविकलतया

चिम्कालभावि कृच्छ्रयोगि वा प्रतिबन्धि जायते। प्रतिबन्धीति किम् मूत्रकृच्छ्रम्।।

पदेऽपदेशे।।6 - 2 - 7।।

अपदेशः - व्याजः, तद्वाचिनि तत्पुरुषे समासे पदशब्द उत्तरपदे पूर्वपदं प्रकृतिस्वरं भवति। मूत्रपदेन प्रस्थितः उञ्चरपदेन प्रस्थितः। मूत्रशब्दः सिचिमुच्योष्टेरुञ्च इति ष्ट्रन्प्रत्ययान्तः, मूत्रयतेर्वा घञन्त आद्युदात्तः। उञ्चारशब्दोऽपि घञन्तः थाथघञ्क्ताचबित्रकाणाम् इत्यन्तोदात्तः । विशेषणसमासोऽयम्, मयूरव्यंसकादिर्वा । अपदेश इति किम् विष्णोः पदं विष्णुपदम् ।।

निवाते वातत्राणे।। 6 - 2 - 8।।

निवातशब्दो उत्तरपदे वातत्राणाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। कुट्येव निवातम्, अर्थाभाव इत्यव्ययीभावः । निरुद्धो वातोऽस्मिन्निति वा निवातमिति बहुव्रीहिः। तत्र कुड्यादिहेतुके निवाते कुड्यादयो वर्तमानाः समानाधिकरणेन निवातशब्देन सह समास्यन्ते। कुटी-शमीशब्दौ गौरादिङीषन्तावन्तोदात्तौ। कुड्यशब्दोऽपि कवतेर्यत् डिकिञ्च इति यत्प्रत्ययान्त आद्युदात्त इत्येके। ड्यक्प्रत्ययान्तोऽन्तोदात्त इत्यपरे। वातत्राण इति किम् राजनिवाते वसति। सुखं मातृनिवातम्। निवातशब्दोऽयं पार्श्ववाची रुढिशब्दः,तत्रोभयत्र षष्ठीसमासः।

शारदेऽनार्तवे।।6 - 2 - 9।।

ॠतौ भवमार्तवम्। अनार्तववाचिनि शारदशब्दे उत्तरपदे तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। रज्जुशारदमुदकम्। दृषत्शारदाः सक्तवः। शारदशब्दोऽयं प्रत्यग्रवाची, तस्य नित्यसमासः, अस्वपदविग्रह इष्यते। सद्यो रज्जूद्धृतमुदकं प्रत्यग्रमनुपहतं रज्जुशारदमुच्यते। रज्जुशब्दः सृजेरसुम् च इति उप्रत्ययान्त आदिलोपश्च। धान्ये नित् इति च तत्र वर्त्तते,तेनाद्युदात्तः। दृषत्-शब्दः दृणातेः षुग् ह्रस्वश्च इति इदिक्प्रत्यान्तोऽन्तोदात्तः ।अनार्त्तव इति किम् परमशारदम्। उत्तमशारदम्। शरदि ॠतुविशेषे भवं यत्तदिह शारदम्।।

अर्ध्वयुकषाययोर्जातौ।। 6 - 2 - 10।।

अध्वर्यु, कषाय-इत्येतयोर्जातिवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। प्राच्याध्वर्युः। कठाध्वर्युः। कलापाध्वर्युः। एते समानाधिकरणसमासा जातिवचिनो नियतविषयाः। तत्र प्राच्यशब्दो यत्प्रत्ययान्त आद्युदात्तः। कठशब्दः पचाद्यचि व्युत्पादितः, ततः कठेन प्रोक्तमिति वैशम्पायनान्तेवासिभ्यश्च इति णिनिः,तस्य
कठचरकाल्लुक् इति लुक्। कलापिना प्रोक्तमिति कलापिनोऽण् तस्मिन् इनण्यनपत्ये इति प्रकृतिभावे प्राप्ते नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकौथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम् इति टिलोपः। तदेवं कलापशब्दोऽन्तोदात्तः । सर्पिर्मण्डकषायम् । उमापुष्पकषायम् । दौवारिककषायम् । षष्ठीसमासव्युत्पादिता रुढिशब्दा एते। तत्र सर्पिर्मण्डशब्दः, उमापुष्पशब्दश्च षष्ठीसमासावन्तोदात्तौ । दौवारिकशब्दोऽपि द्वारे नियुक्तः इति ठकि सत्यन्तोदात्त एव । जाताविति किम् परमाध्वर्युः।परमकषायः।।

सदृशप्रतिरुपयोः सादृश्ये।। 6 - 2 - 11।।

सदृशा, प्रतिरुप - इत्येतयोरुत्तरपदयोः सादृश्यवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। पितृसदृशः। मातृसदृशः । पितृमातृशब्दावुणदिष्वन्तोदात्तौ निपातितौ । षष्ठीसमासार्थं च सदृशग्रहणमिह तदलुकि षष्ठ्याः। प्रयोजयतिदास्याः सदृशाः वृषल्याः सदृश इति। अत्र दासी - वृषलीशब्दयोरन्तोदात्तत्वाद् उदात्तयणो हल्पूर्वात् इति विभक्तिरन्तोदात्ता । पितृप्रतिरुपः । मातृप्रतिरुपः । सादृश्य इति किम् परमसदृशः उत्तमसदृशः। समासार्थोऽत्र पूज्यमानता, न सादृश्यम् ।।

द्विगौ प्रमाणे।। 6 - 2 - 12।।

द्विगावुत्तरपदे प्रमाणवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। प्राच्यसप्तशमः । गान्धारिसप्तशमः । सप्तशमाः प्रमाणमस्येति मात्रच उत्पन्नस्य प्रमाणे लो द्विगोर्नित्यम् इति लुक्। प्राच्यश्चासौ सप्तशमश्चेति प्राच्यसप्तशमः। प्राच्यशब्द आद्युदात्तः। गान्धारिशब्दः कर्दमादित्वादाद्युदात्तः मध्योदात्तो वा। द्विगाविति किम् व्रीहिप्रस्थः। प्रमाण इति किम् परमसप्तशमः ।।

गन्तव्यपण्यं वाणिजे।। 6 - 2 - 13।।

वाणिजशब्द उत्तरपदे तत्पुरुषे समासे गन्तव्यवाचि पण्यवाचि च पूर्वपदं प्रकृतिस्वरं भवति। मद्रवाणिजः। काश्मीरवाणिजः। गान्धारिवाणिजः। मद्रादिषु गत्वा व्यवहरन्तीत्यर्थः। सप्तमीसमासा एते। तत्र मद्रशब्दो रक्प्रत्ययान्तत्वादातोदात्तः। काश्मीरशब्दोऽपि पृषोदरदिषु मध्योदात्तः। गान्धारिशब्दः कर्दमादिषु पठ्यते,तत्र कर्दमादीनां वा इति पक्षे आद्युदात्तो भवति,द्वितीयो वा। पण्य-गोवाणिजः। अश्ववाणिजः । गोशब्दोऽन्तोदात्तः। अश्वशब्द आद्युदात्तः। गन्तव्यपण्यमिति किम् परमवाणिजः उत्तमपाणिजः।।

मात्रोपज्ञोपक्रमच्छायो नपुंसके।। 6 - 2 - 14।।

मात्रा, उपज्ञा, उपक्रम, छाया -एतेषूत्तरदेषु नपुंसकवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। भिक्षामात्रं न ददाति याचितः। समुद्रमात्रं न सरोऽस्ति किञ्चन । मात्रशब्दोऽयं वृत्तिविषय एव तुल्यप्रमाणे वर्त्तते । तत्र भिक्षायास्तुल्यप्रमाणमित्यस्वपदविग्रहः षष्ठीसमासः । तत्र भिक्षाशब्दः गुरोश्च हलः इत्यप्रत्ययान्तोदात्तः। सहुद्रशब्दोऽपि फिषि पाटलापालङ्काम्बासागरार्थानाम् इत्यन्तोदात्त एव। उपज्ञा - पाणिनोपज्ञम् अकालकं व्याकरणम् । व्याड्युपज्ञं दुष्करणम् । अपिशल्युपज्ञं गुरुलाघवम् । षष्ठीसमासा एते। तत्र पाणिनोऽपत्यमित्यणन्तः पाणिनशब्दः प्रत्ययस्वरेणान्तोदात्तः। व्याडिरिञन्तत्वादाद्युदात्तः। तद्वदापिशलिः।

उपक्रम - आढ्योपक्रमं प्रासादः। दर्शनीयोपक्रगम्। सुकुमारोपक्रमम् । नन्दोपक्रमाणि मानानि। एतेऽपि षष्ठीसमासा एव। तत्रैत्यैनं ध्यायन्तीत्याढ्यः। घञर्थे

कविधानम् इति कप्रत्यय आङ्पूर्वाद् ध्यायतेः पूषोदरादित्वाद् हस्य ढत्वम्। तदयमाढ्यशब्दस्थाथादिस्वरेणान्तोदात्तः । दर्शनीयशब्दो रित्त्वादुपोत्तमोदात्तः । सुकमारशब्दो नञ्सुभ्याम् इत्यन्तोदात्तः। नन्दशब्दः पचाद्यचि व्युत्पादितः। उपज्ञोपक्रमान्तस्य तत्पुरुषस्य नपुंसकलिङ्गता उपज्ञोपक्रमं तदाद्याचिख्यासायाम् इति । छाया - इषुच्छायम् । धनुश्छायम् । इषुशब्दः इषेः किञ्च इत्युप्रत्ययान्तः तत्र च धान्ये नित् इति वर्त्तते,तेनाद्युदात्तः। धनुःशब्दोऽपि नब्विषयस्यानिसन्तस्य इत्याद्युदात्त एव । इषूणां छायेति षष्ठीसमासः।छाया बाहुल्ये इति नपुंसकलिङ्गता। नपुंसक इति किम् कुड्यच्छाया।।

सुखप्रययोर्हिते।। 6 - 2 - 15।।

सुख, प्रिय - इत्येतयोरुत्तरपदयोर्हितवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति । गमनसुखम् । वचनसुखम् । व्याहरणसुखम् । सुख । प्रिय - गमनप्रियम् । वचनप्रियम् । व्याहरणप्रियम् । समानाधिकरणसामसा एते । तत्र सुखप्रियशब्दौ तद्धेतावायत्यां प्रीतिकरे वर्तेते। तद्धि हितं यदायत्यां प्रीतिं करोति । गमनादिषु ल्युडन्तेषु लित्स्वरः । हित इति किम् परमसुखम् । परमप्रियम् ।।

प्रीतौ च।। 6 - 2 - 16।।

प्रीतौ गम्यमानायां सुख, प्रय - इत्येतयोरुत्तरपदयोस्तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति । ब्राह्मणसुखं पायसम् । छात्त्रप्रियोऽनध्यायः कन्याप्रियो मृदङ्गः। सुख प्रिययोः प्रीत्यव्यभिचारादिह प्रीतिग्रहणं तदतिशयप्रतिपत्त्यर्थम् । ब्राह्मणच्छात्त्रशब्दौ प्रत्ययस्वरेणान्तोदात्तौ । कन्याशब्दः स्वरितान्तः । प्रीतविति किम् राजसुखम् । राजप्रियम् ।।

स्वंस्वामिनि।। 6 - 2 - 17।।

स्वामिन्शब्द उत्तरपदे तत्पुरुषे समासे स्ववाचि पूर्वपदं प्रकृतिस्वरं भवति । गोस्वामी । अश्वस्वामी । धनस्वामी । अश्वधनगवां कथित एव स्वर । स्वमिति किम् परमस्वामी ।।

पत्यावैश्वर्ये।। 6 - 2 - 18।।

पतिशब्द उत्तरपदे एश्वर्यवाचिनि तत्पुरुषे पूर्वपदं प्रकुतिस्वरं भवति । गृहपतिः । सेनापतिः । नरपतिः। धान्यपतिः। गेहे कः इति प्रकृतिस्वरेणान्तोदात्तो गृहशब्दः । सह इनेन वर्त्तते इति बहुव्रीहौ प्रकुत्या पूर्वपदम् इति सेनाशब्द आद्युदात्तः । न नये एतसामाद् ऋदोरप् इति अप्प्रत्ययान्त आद्युदात्तो नरशब्दः। धान्यमन्तःस्वरितम् । ऐश्वर्यमिति किम् ब्राह्मणो वृषलीपतिः। वृषल्या भर्तेत्यर्थः।।

नभूवाक्चिद्दिधिषु ।। 6 - 2 - 19।।

पतिशब्द उत्तरपदे ऐश्वर्यंवाचिनि तत्पुरुषे समासे भु, वाक्, चित्, दिधिषु - इत्येतानि पूर्वपदानि प्रकृतिस्वराणि न भवन्ति । पूर्वेण प्राप्तः स्वरः प्रितषिध्यते । भूपपिः । वाक्पतिः । चित्पतिः । दिधिषूपतिः । षष्ठीसमासा एते समासस्वरेणान्तोदात्ता भवन्ति।।

वा भुवनम्।। 6 - 2 - 20।।

पतिशब्द उत्तरपदे ऐश्वर्यवाचिनि तत्पुरुषे समासे भुक्नशब्दः पूर्वपदं वा प्रकृतिस्वरं भवति । भुवनपतिः । पूर्वपदप्रकृतिस्वरपक्षे आदिरुदात्तः। रञ्जेः क्युन् इति वर्त्तमाने भूसूधुभ्रस्जिभ्यश्छन्दसि इति क्युन्प्रत्ययान्तो भुवनशब्द आद्युदात्तो व्युत्पादितः । कथं भुवनपतिरादित्य इति उणादयो बहुलम् इति बहुलवचनाद्भाषायामपि प्रयुज्यते ।।

आशङ्काबाधनेदीयस्सु संभावने ।। 6 - 2 - 21।।

प्रकृत्या पूर्वपदम् तत्पुरुषे इति वर्त्तते। आशङ्क, आबाध, नेदीयस् - इत्येतेषूत्तरपदेषु सम्भावनवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति । अस्तित्वाध्यवसायः-सम्भावनम् । गमनाशङ्कं वर्त्तते । गमनमाशङ्क्यते इति सम्भाव्यते । वचनाशङ्कम् । व्याहरणाशङ्कम् । आबाध-गमनाबाधम् । वचनाबाधम् । व्याहरणाबाधम् । गमनं बाध्यत इति सम्भाव्यते । नेदीयस्-गमननेदीयः । व्याहरणनेदीयः । गमनमतिनिकटतरमिति सम्भाव्यते । सम्भावन इति किम् परमनेदीयः । पूर्वपदानि ल्युडन्तोन्युक्तस्वरणि ।।

पूर्वे भूतपूर्वे।। 6 - 2 - 22।।

पूर्वशब्दे उत्तरपदे भूतपूर्ववाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति । आढ्यो भूतपूर्व आढ्यपूर्वः। पूर्वशब्दो वृत्तिविषये भूतपूर्वे वर्त्तते तत्र, विशेषणं विशेष्यण इति समासः। मयुरव्यंसकादिर्वा द्रष्टव्यः। दर्शनीयपूर्वः । सुकुमारपूर्वः । भूतपूर्वं इति किम् परमपूर्वः । उत्तमपुर्वः । अत्र परमश्चासौ पूर्वश्चेति समासः, न तु परमो भूतपूर्वं इति। तथा च सत्युदाहरणमेव भवति।।

सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये।। 6 - 2 - 23।।

सविध, सनीड, समर्याद, सवेश, सदेश - इत्येतेषूत्तरपदेषु सामीप्यवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। मद्रसविधम्। गान्धारिसविधम्। काश्मीरसविधम्। मद्रसनीडम्। गान्धारिसनीडम्। काश्मीरसनीडम् । मद्रसमर्यादम् । गान्धारिसमार्यादम्। काश्मीरसमर्यादम्। मद्रसवेशम्। गान्धारिसवेशम्। काश्मीरसवेशम्।

मद्रसदेशम् । गन्धारिसदेशम् । काश्मीरसदेशम् । पूर्वपदान्युक्तस्वराणि । सविधादीनां सह विधयेत्येवमादिका व्युत्पत्तिरेव केवलम् । समीपवाचिनस्त्वेते समुदायाः। मद्राणां सविधम् -समीपमित्यर्थः। सामीप्य इति किम् सह मर्यादया वर्त्तते समर्यादं क्षेत्रम्। देवदत्तस्य समर्यादं देवदत्तसमर्यादम् । सविधादिष्विति किम् देवदत्तसमया ।।

विस्पष्टादीनि गुणवचनेषु ।। 6 - 2 - 24।।

विस्पष्टादीनि पूर्वपदानि गुणवचनेषुत्तरपदेषु प्रकुतिस्वराणि भवन्ति । विस्पष्टकटुकम् । विचित्रकटुकम् । व्यक्तकटुकम् । विस्पषटलवणम् । विचित्रलवणम् । व्यक्तलवणम् । विस्पष्टं कटुकमिति विगृह्य सुप्सुपा इति समासः। विस्पष्टादियो ह्यत्र प्रवुत्तिनिमित्तस्य विशेषणम् । कटुकादिभिश्च शब्दैर्गुणवद् द्रव्यमभिधीयते इत्यसामानाधिकरण्यम्, अतो नास्ति कर्मधारयः । विस्पष्टशब्द । गतिरनन्तरः इत्याद्युदात्तः, विचित्रशब्दोऽप्यव्ययस्वरेण । विचित्तशब्दमन्ये पठन्ति, सोऽपि बहुव्रीहिस्वरेणाद्युदात्त एव । व्यक्तशब्द । उदात्तसावरितयोर्यणः स्वरितोऽनुदात्तस्य इत्यादिस्वरितः । ये चात्रापरे पठ्यन्ते, तत्र सम्पन्नशब्दस्थाथादिस्वरेणान्तेदात्तः । पटु-पण्डितशब्दौ प्रत्ययस्वरेणान्तोदात्तौ । कुशलशब्दः कृत्स्वरेणान्तोदात्तः । चपलशब्दश्चित्स्वरेणान्तोदात्तः, चुपेरञ्चोपधायाः इत्यत्र हि चिदिति वर्तते । निपुणशब्दस्थाथादिस्वरेणान्तोदात्तः, कुणेरिगुपधलक्षणः कप्रत्ययोऽयम् । विस्पष्टादीनोति किम् परमलवणम् । उत्तमलवणम् । गुणवचनेष्विति किम् विस्पष्टब्राह्मणः । विस्पष्ट । विचित्र । व्यक्त । सम्पन्न । कटु । पण्डित। कुशल। चपल। निपुण। विस्पष्टादिः।।

श्रन्यावमकन्पापवत्सु भावे कर्मधारये।। 6 - 2 - 25।।

श्र, ज्य, अवम्, कन्- इत्येतेषु पापशब्दवति चोत्तरपदे कर्मधारये समासे भाववाचि पूर्वपदं प्रकृतिस्वरं भवति । गमनश्रेष्ठम् । गमनश्रेयः । ज्य - वचनज्यष्ठम्, वचनज्यायः । अवम् - गमनावमम्, वचनावमम् । कन् - गमनकनिष्ठम् गमनकनीयः । पापवत् - गमनपापिष्ठम्, गमनपापीयः । ल्युडन्तान्येतानि पूर्वपदानि लित्स्वरेणाद्युदात्तानि । श्रज्यकनामादेशानां ग्रहणमिति सामर्थ्यातद्वदुत्तरपदं गृह्यते। श्रादिष्विति किम् गमनशोभनम्। भाव इति किम् गम्यतेऽनेनेति गमनम्,तत् श्रेयो गमनश्रेयः। कर्मधारयो इति किम् गमनं श्रेयो गमनश्रेयः।।

कुमारश्च ।। 6 - 2 - 26।।

कुमारशब्द। पूर्वपदं कर्मधारये समासे प्रकृतिस्वरं भवति । कुमारश्रमणा । कुमारकुलटा । कुमारतापसी । कुमारशब्दोऽन्तोदात्तः । अत्र केचिल्लक्षणप्रतिपदोक्तपरिभाषया कुमारः श्रमाणादिभिः इत्यत्रैव समासे स्वरमेतमिच्छन्ति। केचित्पुनरविशेषेण स्त्रिवत्रैव कर्मधारये।।

आदिः प्रत्यनसि।। 6 - 2 - 27।।

कर्मधारये इति वर्त्तते। प्रतिगत एनसा, प्रतिगतमेनो वा यस्य स प्रत्येनाः । तस्मिन्नुत्तरपदे कर्मधारये कुमारस्यादिरुदात्तो भवति। कुमारप्रत्येना । उदात्तः इत्येतदत्र सामर्थ्याद्वेदितव्यम् । पूर्वपदप्रकुतिस्वर एव ह्ययमादेरुपदिश्यते ।।

पूगेष्वन्यतरस्याम्।। 6 - 2 - 28।।

पूगाः-गणाः, तद्वाचिन्युत्तरपदे कर्मधारये समासे कुमारस्यान्यतरस्यामादिरुदात्तो भवति। कुमारचातकाः। कुमारलोहध्वजाः। कुमारबलाहकाः। कुमारजीमूताः। चातकादयः पूगशब्दाः, तेभ्यः पूगाञ्ञ्यो ग्रमणीपूर्वात् इति ञ्यः प्रत्ययः, तस्य तद्राजस्य बहुषु इति लुक्। अत्र यदाऽऽद्युदात्तत्वं न भवति, तदा कुमारश्च इति पूर्वपदप्रकृतिस्वरत्वमेके कुर्वन्ति। ये तु तत्र प्रतिपदोक्तस्य ग्रहणमिच्छन्ति तेषां समासान्तोदात्तत्वमेव भवति।।

इगन्तकारकपालभगालशालावेषु द्विगौ ।। 6 - 2 - 29।।

इगन्त उत्तरपदे कालवाचिनि कपाल, भगाल, शराव - इत्येतेषु च द्विगौ समासे पूर्वपदं प्रकृतिस्वरं भवति। इगन्त-पञ्चारत्निः ।दशारत्निः। पञ्चारत्नयः प्रमाणमस्य दशारत्नयः प्रमाणमस्यतेति तद्धितार्थे द्विगुः प्रमाणे लो द्विगोर्वित्यम् इति मात्रचो लोपः। इगन्त । काल - पञ्चमास्यः । दशमास्यः। पञ्च मासान्भृतो भूतो भावी

वेति तद्धितार्थे द्विगोर्यप् । पञ्चवर्षः । दशवर्षः । वर्षाल्लुक् च इति ठञो लुक् । काल । कपाल - पञ्चकपालः । दशकपालः । कपाल । भगाल - पञ्चभगालः । दशभगालः । भगाल । शराव - पञ्चशरावः । दशशरावः । संस्कृतं भक्षाः इति तद्धितार्थ एते समासाः द्विगोर्लुगनपत्ये इति कृताण्प्रत्ययलोपा द्रष्टव्याः। इगन्तादिष्विति किम् पञ्चभिरश्वैः क्रितः पञ्चाश्वः दशाश्वः। द्विगाविति किम् परमारत्निः परमशारावः । पञ्चारत्नयो दशारत्न्य इति च यण्गुणयोर्बहिरङ्गलक्षणयोरसिद्धत्वात् स्थानिवद्भावाद्वा द्विगुस्वर इगान्तलक्षणः प्रवर्त्तते ।।

बह्वन्यतरस्याम्।। 6 - 2 - 30।।

बहुशब्दः पूर्वपदमिगन्तादिषूत्तरपदेषुत द्विगौ समासेऽन्यतरस्यां प्रकृतिस्वरं भवति । पूर्वेण नित्ये प्राप्ते विकल्पः । बहुरत्निः । बहुमास्यः । बहकपालः । बहुभगालः । बहुशरावः । बहुशबदोऽन्तोदात्तः, तस्य प्रकृतिस्वरे कृते यत्र यणादेशास्तत्र उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य इत्येष स्वरो भवति ।।

दिष्टिवितस्त्योश्च ।। 6 - 2 - 31।।

दिष्ट - वितस्ति, इत्येतयोरुत्तरपदयोर्द्विगौ समासे पूर्वपदमन्यतरस्यां प्रकृतिस्वरं भवति । पञ्चदिष्टिः । पञ्चवितस्तिः । दिष्टवितस्त्योः प्रमाणे, तेनात्र मात्राचो लुक् ।।

सप्तमी सिद्धशुष्कपक्कवन्धेष्वकालात् ।। 6 - 2 - 32।।

सप्तम्यन्तं पूर्वपदं सिद्ध, शुष्क, पक्व, बन्ध - इत्येतेषूत्तरपदेषु प्रकुतिस्वरं भवति, सा चेत्सप्तमी कालात्र भवति । सांकाश्यसिद्धः । काम्पिल्यसिद्धः। सांकाश्य-काम्पिल्यशब्दौ ण्यप्रत्ययान्तावन्तोदात्तौ। फिषि तु सांकाश्यकामिपल्यनासिक्यदार्वाघाटानामन्तः पूर्व वा इति पठ्यते, तत्र मध्योदात्तावपि भवतः। शुष्क - ऊकशुष्कः। निघनशुष्कः। ऊकशब्दो बहुलवचनादवतेः कक्प्रत्ययान्तोदात्तः निधनशब्दो निधाञः क्युप्रत्यये मध्योदात्तः । पक्व - कुम्भीपक्वः। कलशीपक्वः। भ्राष्ट्रपक्वः। कुम्भीकलशीशब्दौ ङीषन्तावान्तोदात्तौ। भ्राष्ट्रशब्दः ष्ट्रन्प्रत्ययान्त आद्युदात्तः। बन्ध - चक्रबन्ध । चारकबन्धः ।

चक्रशब्दोऽन्तोदात्तः ।चारकशब्दो ण्वुलन्त आद्युदात्तः । अकालादिति किम् पुर्वाह्णसिद्धः। अपराह्णसिद्धः । सप्तमीश्वरः कृत्स्वरेण बाधितः पुनरयं विधीयते ।।

परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु।। 6 - 2 - 33।।

परि, प्रति, उप, अप - इत्येते पूर्वपदभूता वर्ज्यमावाचिनि अहरवयववाचिनि रात्र्यवयववाचिनि चोत्तरपदे प्रकृतिस्वरा भवन्ति । परित्रिगर्त्तं वृष्टो देवः । परिसौवोरम् । चपरिसार्वसेनि । प्रति- प्रतिपूर्वह्णम् । प्रत्यपरह्णम् । प्रतिपूर्वरात्रम । प्रत्यपररात्रम् । उप - उपपूर्वाह्णम् । उपापराह्णम् । उपपूर्वरात्रम् । उपापररात्रम् । अप - अपत्रिगर्त्तं वृष्टो देवः। अपसौवीरम् । अपसार्वसेनि । निपाता आद्युदात्ताः उपसगश्चिभिवर्जम् इति आद्युदात्तानि पूर्वपदानि । तत्पुरुषे बहुव्रीहौ च सिद्धत्वादव्ययीभावार्थोऽयमारम्भः। तत्रापपरी वर्जने वर्त्तते इति तयोरेव वर्ज्यमानमुत्तरपदम्, नेतरयोः । अहोरात्रावयवा अपि वर्ज्यमाना एव तयोर्भवन्तीति न पृथगुदाह्रियते । वर्ज्यमानाहोरात्रावयवेष्वति किम् प्रत्यग्नि शलभाः पतन्ति। परिवनमित्यत्र वनं समासे इत्येतद्भवति ।।

राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु।। 6 - 2 - 34।।

रातजन्यवाचिनां बहुवचनान्तानां यो द्वन्द्वोऽन्धकवृष्णिषु वर्त्तते तत्र पूर्वपदं प्रकृतिस्वरं भवति । श्वाफल्कचैत्रकरोधकाः । शिनिवासुदेवाः । श्वफल्कशब्दः, चैत्रकशब्दश्च ऋष्यन्धकवृष्णिकुरुभ्यश्च इति अणन्तावन्तोदात्तौ । शिनिशब्द आद्युदात्तः, स तदवत्येष्वभेदेन वर्त्तते । राजन्य इति किम् द्वैप्यहैमायनाः । द्वीपे भवा इति द्वीपदादनुसमुद्रं यञ् । हैमेरपत्यं युवा हैमायनाः । अन्धकवृष्णय एते, न तु राजन्याः । राजन्यग्रहणमिहाभिषिक्तवंशयानां क्षत्त्रियाणां ग्रहणार्थ । एते च नाभिषिक्तवंशयाः । बहुवचनग्रहणं किम् सङ्कर्षणवासुदेवौ। द्वन्द्व इति किम् वृष्णीनां कुमारा वृष्णिकुमाराः। अन्धकवृषणिष्विति किम् कुरुपञ्चालाः ।।

संख्या ।। 6 - 2 - 35।।

द्वन्द्व समासे संख्यावाचि पूर्वपदं प्रकृतिस्वरं भवति । एकादश । द्वादश । त्रयोदश ।
इण्भीकापाशल्यतिमर्चिभ्यः कन् इति नित्त्वादाद्युदात्त एकशब्दः । त्रेस्त्रयस् आदेशोऽन्तोदात्तो निपात्यते।।

आचार्योपसर्जनश्चान्तेवासी ।। 6 - 2 - 36।।

आचार्योपसर्जनान्तेवासिनां यो द्वन्द्वस्तत्र पूर्वपदं प्रकृतिस्वरं भवति । आपिशलपाणिनीयाः । पाणिनीयरौढीयोः । रौढीयकाशकुत्स्नाः। कुत्स्नाः । अपिशलस्यापत्यमापिशलिराचार्यः, अत इञ् तेन प्रोक्तमापिशलम्, इञश्च इत्यण्, तदधीयते येऽन्तेवसिनस्तेऽप्यापिशलाः, प्रोक्ताल्लुक् इति तस्य तद्धितस्याध्येतरि विहितस्य लुक्। क्रियते। आपिशलेर्वा छात्त्रा आपिशाला इत्युभयथाप्याचार्योपसर्जनश्चन्तेवासी भवति । आचार्योपसर्जनग्रहणं द्वन्द्वविशेषणार्थम् - सकलो द्वन्द्व आचार्योपसर्जनो यथा विज्ञायते, इह मा भूत् - पाणिनीयदेवदत्तौ। आचार्योपसर्जन इति किम् छान्दसवौयाकरणाः । अन्तेवासीति किम् आपिशलपाणिनीये शास्त्रे ।।

कार्तकौजपादयश्व।। 6 - 2 - 37।।

कार्तकौजपादयो ये द्वन्द्वास्तेषु पूर्वपदं प्रकृतिस्वरं भवति । प्रकृतिस्वरपूर्वपदाः कार्तकौजपादयो भवन्ति । विभक्त्यन्तानां पाठो वचनविवक्षार्थः। चकारो द्वन्द्वाधिकारानुवृत्त्यर्थः कार्तकौजपौ । कृतस्यापत्यम्, कुजपस्यपत्यम् - इत्यणन्तावेतौ । सार्वाणमाण्डूकेयौ । सावर्णिरिञन्तः । अवन्ततयश्मकाः । अवन्तरपत्यानि बहूनि तन्निवासो जनपदोऽवन्तयः । तथा अश्मकाः । पैलश्यापर्णेयाः। युवद्वन्द्वोऽयम् । पीलाया अपत्यं पैलः, तस्यापत्यं युवेति अणो द्व्यचः इति विहितस्य फिञः पैलदिभ्यश्च इति लुक्। श्यापर्णशब्दो बिदादि, तस्यापत्यं स्त्री श्यापर्णी,तदपत्यं युवा श्यापर्णेयः। बहुवचनमतन्त्रम्, तेन पैलश्यापर्णेयावित्यत्रापि भवति। कपिश्यापर्णेयाः। कपिरन्तोदात्तः,तस्यापत्यम्,बहुत्वे कपिबोधादाङ्गिरसे इत्युत्पन्नस्य यञः यञञोश्च इति लुक्,तेनात्र बहुत्वमाश्रीयत एव। शैतिकाक्षपाञ्चालेयाः।शितिकाक्षे नाम ऋषिः,तस्यापत्यमिति ऋष्यण्,तदपत्ये यूनि य इञ् तस्य ण्यक्षत्त्रियार्षञितो यूनि इति लुक्। पाञ्चालस्यापत्यं स्त्री पाञ्चाली,तदपत्यं युवा पाञ्चालेयः। अत्रापि बहुवचनमविवक्षितमिति शैतिकाक्षपाञ्चालेयावित्यक्षापि भवति।
कटुकवार्चलेयाः।कटुकस्यापत्यमिति अत इञ्, तस्य बह्वच इञः प्रच्यभरतेषु इति बहुषु लुक्। वर्चलाया अपत्यं वार्चलेयः। शाकलशुनकाः। शकलस्यापत्यं शाकल्यः,तस्य छात्त्राः शाकलाः। कण्वादिभ्यो गोत्रे इत्यण्। शुनकस्यापत्यमिति बिदादिभ्योऽञ् तस्य बहुषु लुक्। शाकलशणका इति केचित्पठन्ति। तेषा शणकशब्दादुत्पन्नस्येञः बह्वच इञः प्राच्यभरतेषु इति बहुषु लुक्। शुनकधात्रेयाः। धात्र्या अपत्यं धात्रेयाः। शणकबाभ्रवाः। बभ्रोरपत्यं बाभ्रवः। आर्चाभिमौद्गलाः। ऋचाभेन प्रोक्तमधीयते आर्चाविनः। वैशम्पायनान्तेवासित्वाद् णिनिः। मुद्गलः कण्वादिः,तदपत्यस्य छात्त्रा मौद्गलाः। कुन्तिसुराष्ट्राः। कुन्तेः सुरष्ट्रस्य चापत्यषु बहुषु तन्निवासे वा जनपदे द्वन्द्वोऽयम्। कुन्तिचिन्तिशब्दावन्तोदात्तौ। चिन्तिसुराष्ट्राः। कुन्तिसुराष्ट्रवत्। तण्डवतण्डाः। पचाद्यच्प्रत्ययान्तावन्तोदात्तावेतौ गर्गादिषु पठ्येते। तत्रापत्यपहुत्वे यञो लुक् क्रियते। गर्गवत्साः। अत्रापि अपत्यबहुत्वे यञो लुक्। अविमत्तकामविद्धाः। अविमत्तशब्दौ नञ्स्वरेणाद्युदात्तः। द्वयोरप्येतयोरपत्येषु बहुषु इञः बह्वच इञःप्रच्यभरतेषु इति लुक् क्रियते। बाभ्रवशालङ्कायनाः। बभ्रोरत्यं बाभ्रवः । शलङ्कुशलङ्कं च इति शालङ्कायनः। बाभ्रवदानच्युताः। दानच्युतशब्दादिञः बह्वचः इति लुक्।
कठकालापाः। कठेन प्रोक्तमधीयते कठा। वैशम्यायनान्तेवासित्वाद् णिनिः,तस्य कठचरकाल्लुक्। कलापिना प्रोक्तमधीयते कालापाः, कलापिनोऽण् इत्यण्प्रत्ययः, तस्मन् इनण्यनपत्ये इति प्रकृतिभावे प्राप्ते नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पि इत्यादिनोपसंख्यानेन टिलोपः। कौथुमलऔकाक्षाः। लौकाक्षेण प्रोक्तमधीयते लौकाक्षाः,लौकाक्षस्य चवाऽपत्यं लौक्क्षिः,तस्य छात्त्रा लौकाक्षाः। स्त्रीकुमारम्। स्त्रीशब्दोऽन्तोदात्तः। मौदपैप्पलादाः । मुदस्यापत्यं मौदिः,तस्य छात्त्रा मैदाः। तथा पैप्पलादाः। मौदपैप्पलादा इति द्विः पठ्यते,तस्य प्रयोजनम् - पक्षे समासान्तोदात्तत्वमेव यथा स्यादिति। वत्सजरत्।वत्सश्च जरञ्च,वत्सशब्दोऽन्तोदात्तः।

सौश्रुतपार्थवाः । सुश्रुतस्य पृथोश्च छात्त्राः। प्राग्दीव्यतोऽण् ।जरामृत्यु ।याज्यानुवाक्ये ।यजेर्ण्यत् ।यजयाच इति कुत्वाभावः। तित्स्वरितम् इत्यन्तस्वरितः । अनुवाक्येति वचेरनुपूर्वाद् ण्यत्। आचार्येपसर्जनान्तेवासिनामिह पाठः प्रपञ्चार्थः।। महान ब्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु।।6 - 2 - 38।।

प्रकृत्या पूर्वपदम् इति वर्त्तते, द्वन्द्वे इति निवृत्तम्। महानित्यतत्पूर्वपदं व्रीहि, आपराह्ण, गृष्टि, इष्वास, जाबाल, भार, भारत, हैरिहिल, रौरव, प्रवृद्ध इत्येतेषूत्तरपदेषु प्रकुतिस्वरं भवति। महाव्रीहिः। महापराह्णः।

महावृष्टिः। मरहेष्वासः।महाजाबालः।महाभारः।महाहैलिहिलः।महारौरवः।महाप्रवृद्धः।महच्छब्दोऽन्तोदात्तः, तस्य प्रतिपदोक्तो यः समासः

सन्महत्परमोत्तमोत्कृष्टाः इति,तत्रेव स्वरः। तेनैषां षष्ठीसमासेऽन्तोदात्त एव भवति - तमहतो व्रीहिः महद्व्रीहिरिति। कर्मधारयेऽनिष्ठा इत्ययमपि श्रण्यादिसमासे विधिरिति प्रवृद्धशब्द इह पठ्यते।।

क्षुल्लकश्च वैश्वदेवे ।। 6 - 2 - 39।।

क्षुल्लक इत्येतत्पूर्वपदम्, महांश्च, वैश्वदेव उत्तरपदे प्रकृतिस्वर भवति। क्षुल्ल्वैश्वदेवम्। महावैश्वदेवम्।क्षुधं लातीति क्षुल्लः। तस्मादज्ञातादिषु प्रागिवात्के ऽन्तोदात्तः क्षुल्लकशब्दः।।

उष्ट्रः सादिवाभ्योः ।। 6 - 2 - 40।।

उष्ट्रशब्दः पूर्वपदं सादिवाम्योरुत्तरपदयोः प्रकुतिस्वरं भवति। उष्ट्रसादि । उष्ट्रवामि । उष्ट्रशब्द उषेः ष्ट्रन्प्रत्ययान्त आद्युदात्तः । कर्मधारयोऽयम्,षष्ठीसमासो वा।।

गौः सादसादिसारथिषु ।। 6 - 2 - 41।।

गोशब्दः पूर्वपदं साद,सादि,सारथि - इत्यतेषूत्तरपदेषु प्रकुतिस्वरं भवति। गोः सादः गोसादः। गां सादयतीति वा गोसादः। गोः सादिः गोसादिः। गोसारथिः।।

कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरुपा पारेवडवा तैतिलकद्रूः पण्यकम्वलो दासीभारणां च ।। 6 - 2 - 42।।

कुरुगार्हपत, रिक्तगुरु, असूतजरती, अश्लीलदृढरुपा, पारेवडवा, तैतिलकद्रू, पण्यकम्बलस - इत्येने समासास्तेषां दासीभारादीनां च पूर्वपदं प्रकृतिस्वरं भवति। कुरुणां गार्हपतं कुरुगार्हपतम्। कृग्रोरुञ्च इति कुरुशब्दः कुप्रत्ययान्तोनऽन्तोऽदात्तः। कुरुवृज्योर्गार्हपत इति वक्तव्यम् । वजीनां गार्हंपतं वृजिगार्हपतम्। वृजिशब्द आद्युदात्तः। रिक्तो गुरुः रिक्तगुरुः। रिक्ते विभाषा इति पूर्वपदमाद्युदात्तम्,अन्तोदात्तं वा । असूता जरती असूतजरती। अश्लीला दृढरुपा अश्लीलदृढरुपा। अश्लीलशब्दो नञ्समासत्वादाद्युदात्तः। श्रीर्यस्यास्ति तत् श्लीलम्,सिध्मादेराकृतिगण्त्वाल्लच् । कपिलकादित्वाञ्चलत्वम्। अश्लीलदृढरुपेति हि संस्खानमात्रेण शोभना निःश्रीका लावण्यविरहिलोच्यते। पारेवडवेव पारेवडवाः निपातनादिवार्थे समासो विभक्तयलोपश्च। पारशब्दो धृतादित्वादन्तोदात्तः। तैतिलानां कद्रूः तैतिलकद्रू.। तितिलिनोऽपत्यं छात्त्रो वा तैतिल इत्यणन्तः।पण्यकम्बलः। पण्यशब्दो यदान्तत्वादाद्युदात्तः। पण्यकम्बलः संज्ञायामिति वक्तव्यम् । अन्यत्र पणितव्ये कम्बले समासान्तोदात्तत्वमेव । कम्बले समासान्तोदात्तत्वमेव। प्रतिपदोक्ते हि कृत्यानां समासे द्वितीया कृत्या इत्येष विहितः स्वरितः। दास्या भारो दासीभारः। देवहूतिः। देवजूतिः। देवसूतिः। देवनीतिः। अन्तोदात्तं पूर्वपदम्। वसुनीतिः। वसुशब्द आद्युदात्तः। श्रृस्वृस्निहित्रप्यसिवसि इत्यत्र हि धान्ये नित् तइति वर्त्तते। ओषधिः। ओषो धीयतेऽस्यामिति कर्मण्यधिकरणे च इति किप्रत्ययः। ओषशब्दो घञन्तत्वादद्युदात्तः। चन्द्रमाः - चन्द्रे मोऽसिः इत्यसिप्रत्ययान्तोऽयम्।चन्द्रशबद्स्तु रक्प्रत्ययान्तत्वादन्तोदात्तः। यस्य तत्पुरुषस्य पूर्वपदप्रकृतिस्परत्वमिष्यते, न च विहितम्, स सर्वो दासीभारादीषु द्रष्टव्यः।।

चतुर्थ्री तदर्थे।। 6 - 2 - 43।।

चतुर्थ्यन्तं पूर्वपदं तदर्थं उत्तरपदे तदभिधेयार्थं यत्तद्वाचिन्युत्तरपदे प्रकृतिस्वरं भवित।तदिति चतुर्थ्यन्तस्यार्थः परामृश्यते। यूपदारु। कुण्डलहिरण्यम् । यूपशब्द आद्युदात्तः। कुसुयुभ्यश्तच इत्यत्र निदिति वर्त्तते। कुण्डलशब्दोऽपि वृषादिभ्यश्चित् इति कलप्रत्ययान्तोऽन्तोदात्तः। रथदारु। वल्लीशब्दो ङीषः स्वरेणान्तोदात्तः । तदर्थ इति किम् कुबेरबलिः। प्रकृतिविकारभावे स्वरोऽयमिष्यते।।

अर्थे।। 6 - 2 - 44।।

चतुर्थी इति वर्तते। अर्थशब्द उत्तरपदे चतुर्थ्यन्तं पूर्वपदं प्रकृतिस्वरं भवति। मात्रे इदं मात्रर्थम्। पित्रर्थम्।देवतार्थम्। अतिरथ्यर्थम्। मातृपितृशब्दवन्तोदात्तावुणादिषु निपातितौ। देवताशब्दो लित्स्वरेण

मध्योदात्तः। अतिथिरिति अतेरिथिन् इतीथिन्प्रत्ययान्तः। तदर्थविशेषा एव दारुहिरण्यादयो भवन्ति,न त्वर्थशब्दवाच्यं सामान्यमित्यतदर्थार्थोऽयमारम्भः। केचितपुनराहुः-ज्ञापकार्थमिदम्, एतदनेन ज्ञाप्यते - पूर्वो विधिः प्रकृतिविकृत्योः समासे भवति। अश्वघासः, श्वश्रूश्वसुरमित्यत्र सत्यपि तादर्थ्ये न भवति।।

क्ते च।। 6 - 2 - 45।।

क्तान्ते चोत्तरपदे चतुर्थ्यन्तं पूर्वपदं प्रकृतिस्वरं भवति। गोहितम्। अश्वहितम्। मनुष्यहितम्। गोरक्षितम्। अश्वरक्षितम्। वनं तापसरक्षितम्। अश्वशब्द आद्युदात्तः, मनुष्यशब्दोऽन्तस्वरितः,परिशिष्टपूर्वपदमन्तोदात्तम्। गोभ्यो रक्षितमिति सम्प्रदाने चतुर्थी।।

कर्मधारयेऽनिष्ठा ।। 6 - 2 - 46।।

कर्मधारये समासे क्तान्त उत्तरपदेऽनिष्ठान्तं पूर्वपदं प्रकृतिस्वरं भवति। श्रेणिकृताः।ऊककृताः। पूगकृताः। निधनकृताः। श्रोणिशब्द आद्युदात्तः। ऊकपूशब्दावन्तोदात्तो। निधनशब्दोऽयं मध्योदात्तः।

हिनु, मीना---इत्येतयोरुपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति । प्रहिणोति, प्रहिणुतः । प्रमीणाति, प्रमीणीतः ।
हिनुमीनाग्रहणे विकृतस्यापि भवति; अजादेशस्य स्थानिवत्त्वात् ।।

आनि लोट् ।। 8.4.16 ।।

`आनि' इत्येतस्य लोडादेशस्योपसर्गस्थान्निमित्तादुत्तरस्यनकारस्य णकारादेशो भवति । प्रवपाणि । प्रयाणि । परियाणि ।

लोडिति किम् ? प्रवपानि मांसानि ।।

नेर्गदनदपतपदघुमास्यतिहन्तियातिवादिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ।। 8.4.17 ।।

`नि' इत्येतस्योपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति गद, नद, पत, पद, घु, मा, स्यति, हन्ति, याति, वाति, द्राति, प्साति, वपति, वहति, शम्यति, चिनोति, देग्धि---इत्येतेषु परतः । गद---प्रणिगदति, परिणिगदति । नद---प्रणिनदति, परिणिनदति । पत---प्रणिपतति, परिणिपतति । पद---प्रणिपद्यते, परिणिपद्यते । घु---प्रणिददाति, परिणिददाति । प्रणिदधाति, परिणिदधाति ।

माङ्---प्रणिमिमीते, परिणिमितीते । मेङ्---प्रणिमयते, परिणिमयते । `मा' इति माङ्मेङोर्ग्रहणमिष्यते ।

स्यति---प्रणिष्यति, परिणिष्यति । हन्ति---प्रणिहन्ति, परिणिहन्ति । याति---प्रणियाति, परिणियाति । वाति---प्रणिवाति, परिणिवाति । द्राति---प्रणिद्राति, परिणिद्राति । प्साति---प्रणिप्साति, परिणिप्साति । वपति---प्रणिवपति, परिणिवपति । वहति---प्रणिवहति, परिणिवहति । शाम्यति---प्रणिशाम्यति, परिणिशाम्यति । चिनोति---प्रणिचिनोति, परिणिचिनोति । देग्धि---प्रणदेग्धि, परिणिदेग्धि ।

अड्व्यवायेऽपि नेर्गदादिषु णत्वमिष्यते । प्रण्यगदत्, परिण्यगदत् ।।

शेषे विभाषाऽकखादावषान्त उपदेशे ।। 8.4.18 ।।

`नः' इति वर्त्तते, `उपसर्गात्' इति च । अककारादिः, अखकारादिः, अषकारान्तश्च उपदेशे यो धातुः स शेषः; तस्मिन्परत उपसर्गस्थान्निमित्तादुत्तरस्य नेर्नकारस्य विभाषा णकार आदेशो भवति । प्रणिपचति, प्रनिपचति । प्रणिभिनत्ति, प्रनिभिनत्ति ।

अकखादाविति किम् ? प्रनिकरोति । प्रनिखादति । अषान्त इति किम् ? प्रनिपिनष्टि । उपदेशग्रहणं किम् ? इह च प्रतिषेधो यथा स्यात्---प्रनिचकार, प्रनिचखाद, प्रनिपेक्ष्यतीति । इह च मा भूत्---विशेः प्रणिवेष्टा, प्रणिवेक्ष्यति ।।

अनितेः ।। 8.4.19 ।।

अनितेर्नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति । प्राणिति । पराणिति ।।

अन्तः ।। 8.4.20 ।।

`अनितेः' इति वर्तते, उपसर्गस्थान्निमित्तादुत्तरस्यानितिनकारस्य पदान्ते वर्तमानस्य णकारादेशो भवति । हे प्राण् । हे पराण् । `पदान्तस्य' इति प्रतिषेधस्यापवादोऽयम् । अन्तश्च पदापेक्षो गृह्यते ।

केचित्तु पूर्वसूत्र एवैतदन्तग्रहणँ सामीप्यार्थमभिसम्बध्नन्ति । निमित्तसमीपस्थस्यैकवर्णव्यवहितस्यानितिनकारस्य पदान्ते वर्तमानस्य णकारादेशो यथा स्यात् । इह मा भूत्---पर्यनितीति । तैर्द्वितीयमपि पदान्तस्य णत्वार्थमन्तग्रहणमाश्रयितव्यमेव ।

येषां तु `प्रर्यणितीति भवितव्यम्' इति दर्शनम्, तेषां पूर्वसूत्रे नार्थोऽन्तग्रहणे न ।।

उभो साभ्यासस्य ।। 8.4.21 ।।

साभ्यासस्यानितेरुपसर्गस्थान्निमित्तादुत्तरस्योभयोर्नकारयोर्णकार आदेशो भवति । प्राणिणिषति, प्राणिणत् । पराणिणिषति, पराणिणत् ।

`पूर्वत्रासिद्धीयमद्विर्वचने' इत्येतस्मिन् सति पूर्वेणैव कृतणत्वस्य द्विर्वचने कृते सिद्धमेतदन्तरेणापि वचनम् ? एतत्तु नाश्रयितव्यमिति सूत्रमिदमारभ्यते । तेन औजढदिति सिद्धं भवति ।।

हन्तेरत्पूर्वस्य ।। 8.4.22 ।।

अकारपूर्वस्य हन्तिनकारस्य उपसर्गस्थान्निमित्तादुत्तरस्य णकार आदेशो भवति । प्रहण्यते, परिहण्यते । प्रहणनम्, परिहणनम् ।

अत्पूर्वस्येति किम् ? प्रघ्नन्ति । परिघ्नन्ति । तपरकरणं किम् ? चिणि---प्राघानि । पर्यघानि ।।

वमोर्वा ।। 8.4.23 ।।

`हन्तेः इति वर्तते । वकारमकारयोः परतो हन्तिनकारस्योपसर्गस्थान्निमित्तादुत्तरस्य वा णकारादेशो भवति । प्रहण्वः, परिहण्वः; प्रहन्वः, परिहन्वः । प्रहण्मः, परिहण्मः;प्रहन्मः, परिहन्मः' ।।

अन्तरदेशे ।। 8.4.24 ।।

अन्तः शब्दादुत्तरस्य हन्तिनकारस्यात्पूर्वस्य णकारादेशो भवति अदेशाभिधाने । अन्तर्हण्यते । अतर्हणनं वर्तते ।

अदेशे इति किम् ? अन्तर्हननो देशः ।

`अत्पूर्वस्य' इत्येव---अन्तर्घ्नन्ति ।

तपरकरणं किम् ? अन्तरघानि ।।

अयनं च ।। 8.4.25 ।।

`अन्तरदेशे' इति वर्तते । अयननकारस्य चान्तः शब्दादुत्तरस्य णकारादेशो भवति अदेशाभिधाने । अन्तरयणं वर्तते । अन्तरयणं शोभनम् ।

`अदेशे' इत्येव---अन्तरयनो देशः ।।

छन्दस्यृदवग्रहात् ।। 8.4.26 ।।

`पूर्वपदात्' इति वर्तते । ऋकारान्तादवग्रहात् पूर्वपदादुत्तरस्य णकारादेशो भवति छन्दसि विषये । नृमणाः । पितृयाणम् ।

अत्र हि नृमणाः, पितृयाणमिति ऋकारोऽवगृह्यते ।

अवग्रहग्रहणं किमर्थमुच्यते, यावता `संहिताधिकार आ अध्यायपरिसमाप्तेः' इत्युक्तम् ? विषयोपलक्षणार्थमवग्रहग्रहणम् । अवगृह्यमाणाद्यथा स्याद्, अनवगृहमाणान्मा भूत् । अपदान्ते चावग्रहो नास्ति ।।

नश्च धातुस्थोरुषुभ्यः ।। 8.4.27 ।।

`नस्' इत्येतस्य नकारस्य णकारादेशो भवति धातुस्थान्निमित्तादुत्तरस्योरुशब्दात्सुशब्दाच्च छन्दसि विषये । धातुस्थात्तावत्---अग्नेरक्षा णः । शिक्षा णो अस्मिन् । ऊरुशब्दात्--ऊरुणस्कृधि । षुशब्दात्---अभीषु णः सखीनाम् । ऊर्ध्व ऊषु ण ऊतये । अस्मदादेशोऽयं नस्शब्दः, `बहुवचनस्य वस्नसौ' इति ।।

उपसर्गाद् बहुलम् ।। 8.4.28 ।।

उपसर्गस्थान्निमित्तादुत्तरस्य नसो नकारस्य णकारादेशो भवति बहुलम् । प्रणः शूद्रः । प्रणसः, प्रणो राजा । न च भवति---प्रनोमुञ्चतम् ।

बहुलग्रहणाद्भाषायामपि भवति । प्रणसं मुखम् । `उपसर्गाच्च' इति नासिकाया नसादेशः ।।

कृत्यचः ।। 8.4.29 ।।

कृत्स्थो यो नकारोऽच उत्तरस्तस्योपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति । अन, मान, अनीय, अनि, इनि, निष्ठादेश---एते णत्वं प्रयोजयन्ति । अन---प्रयाणम्, परियाणम् । प्रमाणम्, परिमाणम् । मान---प्रयायमाणम्, परियायमाणम् । अनीय---प्रयाणीयम्, परियाणीयम्, अनिः---अप्रयाणिः, अपरियाणिः । इनि---प्रयायिणौ, परियायिणौ । निष्ठादेशः---प्रहीणः, परिहीणः; प्रहीणवान्, परिहीणवान् ।

अच इति किम् ? प्रमग्नः, परिभुग्नः । `भुजो कौटिल्ये', अस्य निष्ठाप्रत्ययः `ओदितश्च' इति निष्ठानत्वम्, `चोः कुः' इति कुत्वे सिद्धम्---परिभुग्न इति ।

* कृत्स्थस्य णत्वे निर्विणअणस्योपसंख्यानं कर्त्तव्यम् * । निर्विण्णोऽस्मि खलसङ्गेन । निर्विण्णोऽहमत्र वासेन ।।

णेर्विभाषा ।। 8.4.30 ।।

ण्यन्ताद्यो विहितः कृत्प्रत्ययः तत्स्थस्य नकारस्योपसर्गस्थान्निमित्तादुतरस्य विभाषा णकारादेशो भवति । प्रियापणम्, प्रयापनम् । परियापणम्, परियापनम् । प्रियाप्यमाणम्, प्रयाप्यमानम् । प्रयापणीयम् । प्रयापनीयम् । अप्रयापणिः, अप्रयापनिः । प्रयापिणौ, प्रयापिनौ ।

विहितविशेषणं किम् ? प्रयाप्यमाणमित्यत्र यका व्यवधानेऽपि यथा स्यादिति ।।

हलश्चेजुपधात् ।। 8.4.31 ।।

`कृत्यचः' इति वर्त्तते । हलादिर्यो धातुरिजुपधस्तस्मात्परो यः कृत्यप्रत्ययः तत्स्थस्य नकारस्याच उत्तरस्योपसर्गस्थान्निमित्तादुत्तरस्य विभाषा णकारादेशो भवति । प्रकोपणम्, प्रकोपनम् । परिकोपणम्, परिकोपनम् ।

हल इति किम् ? प्रेहणम्, प्रोहणम् । इजुपधादिति किम् ? प्रवपणम्, परिवपणम् । `कृत्यचः' इति नित्ये प्राप्ते विकल्पः ।

अच इत्येव---परिभुग्नः ।

इजुपधस्य सर्वस्य हलन्तत्वादिह हल्ग्रहणमादिविशेषणम् ।।

इजादेः सनुमः ।। 8.4.32 ।।

`हलिः' इति वर्तते, तेनेह सामर्थ्यात्तदन्तविधिः । इजादेः सनुमो हलन्ताद्धातोर्विहितो यः कृत्, तत्स्थस्य नकारस्योपर्गस्थान्निमित्तादुत्तरस्य णकारो भवति । प्रेङ्खणम् । परेङ्खणम् । प्रेङ्गणम्, परेङ्गणम् । प्रोम्भणम्, परोम्भणम् ।

सिद्धे सत्यारम्भो नियमार्थः---इजादेरेव सनुमः, नान्यस्मादिति । प्रमङ्गनम्, परिमङ्गनम् ।

`हल' इत्यधिकाराद् ण्यन्ते नित्यं विद्ध्यर्थमेतन्न भवति ।।

वा निंसनिक्षनिन्दाम् ।। 8.4.33 ।।

`उपसर्गात्' इति वर्त्तते । निंस, निक्ष, निन्द---इत्येतेषां नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य वा णकारादेशो भवति । प्रणिंसनम्, प्रनिंसनम् । प्रणिक्षणम्, प्रनिक्षणम् । प्रणिन्दनम्, प्रनिन्दनम् । णोपदेशत्वादेतेषां नित्ये प्राप्ते विकल्पः ।।

न भाभूपूकमिगमिप्यायीवेपाम् ।। 8.4.34 ।।

भा, भू, पू, कमि, गमि, प्यायी, वेप---इत्येतेषामुपसर्गस्थात् निमित्तादुत्तरस्य कृत्स्थस्य नकारस्य णकारादेशो न भवति । भा---प्रभानम्, परिभानम् । भू---प्रभवनम्, परिभवनम् ।

पू---प्रपवनम्, परिपवनम् । पूग्रहणेन पूञ्ग्रहणं द्रष्टव्यम् । पूङो हि भवत्येव णत्वम्---प्रपवणं सोमस्येति ।

कमि---प्रकमनम्, परिकमनम् । गमि---प्रगमनम्, परिगमनम् । प्यायी---प्रप्यायनम्, परिप्यायनम् ।
वेप---प्रवेपनम्, परिवेपनम् ।
* ण्यन्तानां भादीनामुपसंख्यानं कर्तव्यम् * । प्रभापनम्, परिभापनम् ।।
षात् पदान्तात् ।। 8.4.35 ।।
षकारात्पदान्तादुत्तरस्य नकारस्य णकारादेशो न भवति । निष्पानम् । दुष्पानम् । सर्पिष्पानम् । यजुष्पानम् ।
षादिति किम् ? निर्णयः । पदान्तादिति किम् ? कुष्णाति । पुष्णाति ।
पदे अन्तः पदान्तः---इति सप्तमीसमासोऽयम्, तेनेह न भवति---सुसर्पिष्केण, सुयजुष्केण । `शेषाद्विभाषा' इति कप् ।।
नशेः षान्तस्य ।। 8.4.36 ।।
`न' इति वर्तते । नशेः षकारान्तस्य णकारादेशो न भवति । प्रनष्टः, परिनष्टः । षान्तस्येति किम् ? प्रणश्यति, परिणश्यति ।
अन्दग्रहणं षान्तबूतपूर्वमात्रस्यापि यथा स्यात्---प्रनङ्क्ष्यति, परिनङ्क्ष्यति ।।
पदान्तस्य ।। 8.4.37 ।।
पदान्तो यो नकारस्तस्य णकारादेशो न भवति । वृक्षान्, प्लक्षान्, अरीन्, गिरीन् ।।
पदव्यवायेऽपि ।। 8.4.38 ।।
पदेन व्यवायः पदव्यवायः=पदव्यवधानम् । पदेन व्यवायेऽपि सति निमित्तनिमित्तिनोर्नकारस्य णकारादेशो न भवति । माषकुम्भवापेन । चतुरङ्गयोगेन । प्रावनद्धम् । पर्यवनद्धम् । प्रगान्नयामः । परिगान्नयामः ।
* पदव्यवायेऽतद्धित इति वक्तव्यम् * । इह मा भूत्---आर्द्रगोमयेण । शुष्कगोमयेण । `गोश्च पुरीषे' इति मयट् । स्वादौ पूर्व पदमिति गोशब्दः पूर्वपदम्, तेन व्यवायः ।।
क्षुभ्नादिषु च ।। 8.4.39 ।।
`न' इति वर्तते । `क्षुभ्ना' इत्येवमादिषु शब्देषु नकारस्य णकारादेशो न भवति । क्षुभ्नाति । अजादेशस्य स्थानिवद्भावादिहापि प्रतिषेधा भवति । क्षुभ्नीतः । क्षुभ्नन्ति ।
नृनमनः । `पूर्वपदात्संज्ञायाम्' इति प्राप्तिः । `छन्दस्यृदवग्रहात्' इति च प्राप्नोति ।
नन्दिन्, नन्दन, नगर---एतान्युत्तरपदानि संज्ञायां प्रयोजयन्ति ।
हरिनन्दी । हरिनन्दनः । गिरिनगरम् ।
नृतिर्यङि प्रयोजयति---नरीनृत्यते ।
तृप्नु---तृप्नोति ।
नर्तन, गहन, नन्दन, निवेश, निवास, अग्नि, अनूप---एतान्युत्तरपदानि प्रयोजयन्ति । परिनर्तनम्, परिगहनमिति, संज्ञायाम्---`पूर्वपदात्संज्ञायाम्' इति प्राप्नोति । परिनन्दनमित्यत्र `उपसर्गादसमासेऽपि' इति प्राप्नोति ।
शरनिनेशः । शरनिवासः । शराग्निः । दर्भानूपः । इत्येताः संज्ञाः ।
* आचार्यादणत्वं च * । आभार्यभोगीनः । आचार्यानी ।
* इरिकादिभ्यो वनोत्तरपदेभ्यः संज्ञायाम् * । इरिका, तिमिर, कुबेर, हरि । कर्मार---इत्युत्तरपदवनशब्दस्थस्य संज्ञायाम् । क्षुभ्नादिराकृतिगणः । अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्यः ।।
स्तोः श्चुना श्चुः ।। 8.4.40 ।।
सकारतवर्गयोः शकारचवर्गाभ्यां सन्निपाते शकारचवर्गावादेशो भवतः । स्तोः श्चुनेति यथासंख्यमत्र नेष्यते । सकारस्य शकारेण, चवर्गेण, द्वाभ्यामपि सन्निपाते शकारो भवति । तवर्गस्यापि च शकारेण, चवर्गेण च सन्निपाते चवर्गो भवति । आदेशे तु यथासंख्यमिष्यते---सकारस्य शकारः , तवर्गस्य च चवर्ग इति ।
सकारस्य शकारेण सन्निपाते---वृक्षश्शेते । प्लक्षश्शेते । तस्यैव चवर्गेण---वृक्षश्चिनोति, प्लक्षश्चिनोति । वृक्षश्छादयति, प्लक्षश्छादयति ।
तवर्गस्य शकारेण---अग्निचिच्छेते, सोमसुच्छेते । तस्यैव चवर्गेण---अग्निचिच्चिनोति, सोमसुच्चिनोति । अग्निचिच्छादयति, सोमसुच्छादयति ।
अग्निचिज्जयति, सोमसुज्जयति । अग्निचिज्झकारम्, सोमसुज्झकारम् । अग्निचिञ्ञकारः, सोमसुञ्ञकारः । मस्जेः---मज्जति । भ्रस्जेः---भृज्जति व्रश्चेः---वृश्चति । यजः---यज्ञः । याचेः---याच्ञा ।
`शात्' इति प्रतिषेधो ज्ञापकः---संख्यातानुदेशाभावस्य ।
`स्तोः श्चो' इति सप्तमीनिर्देशो न कृतः; पूर्वेण परेण च श्चुना सन्निपाते श्चुत्वं यथा स्यादिति ।।
ष्टुना ष्टुः ।। 8.4.41 ।।
`स्तोः' इति वर्त्तते । सकारतवर्गयोः षकारटवर्गाभ्यां सन्निपाते षकारटवर्गावादेशौ भवतः । तत्रापि तथैव संख्यातानुदेशाभावः । षकारेण सकारस्य---

वृक्षषण्डे । प्लक्षषण्डे । तस्यैव टवर्गेण---वृक्षष्टीकते, प्लक्षष्टीकते । वृक्षष्ठकारः, प्लक्षष्ठकारः ।
तवर्गस्य षकारेण---पेष्टा । पेष्टुम् । पेष्टव्यम् । कृषीष्ट । कृषीष्ठाः । तस्यैव टवर्गेण---अग्निचिट्टीकते, सोमसुट्टीकते । अग्निचिट्ठकारः, सोमसुट्ठकारः । अग्निचिड्डीनः, सोमसुड्डीनः । अग्निचिढ् ढौकते, सोमसुढ् ढौकेते । अग्निचिण्णकारः, सोमसुण्णकारः । अत्ट्--अट्टति । अद्ड्---अड्डति ।।
न पदान्ताट्टोरनाम् ।। 8.4.42 ।।
पदान्ताट्टवर्गादुत्तरस्य स्तोः ष्टुत्वं न भवति `नाम्' इत्येतद्वर्जयित्वा । श्वलिट्साये । मधुलिट् तरति ।
पदान्तादिति किम् ? `ईड स्तुतौ'---ईट्टे । टोरिति किम् ? सर्पिष्टमम् । अनामिति किम् ? षण्णाम् ।
अत्यल्पमिदमुच्यते । * अनाम्नवतिनगरीणामिति वक्तव्यम् * । षण्णाम् । षण्णवतिः । षण्णवतिः । षण्णगरी ।।
तोः षि ।। 8.4.43 ।।
`न' इति वर्तते । तवर्गस्य षकारे यदुक्तं तन्न भवति । अग्निचित्षण्डे । भवान्षण्डे । महान्षण्डे ।।
शात् ।। 8.4.44 ।।
`तोः' इति वर्तते । शकारादुत्तरस्य तवर्गस्य यदुक्तं तन्न भवति । प्रश्नः । विश्नः ।।
यरोऽनुनासिकेऽनुनासिको वा ।। 8.4.45 ।।
पदान्तग्रहणमनुवर्तते । यरः पदान्तस्यानुनासिके परतो वाऽनुनासिकादेशो भवति । वाग्नयति, वाङ्नयति । श्वलिण्नयति, श्वलिड् नयति । अग्निचिन्नयति, अग्निचिद् नयति । त्रिष्टुम्नयति, त्रिष्टुब्नयति ।
`पदान्तस्य' इत्येव---वेद्मि । क्षुभ्नाति ।
* यरोऽनुनासिके प्रत्यये भाषायां नित्यवचनं कर्तव्यम् * । वाङ्मयम् । त्वङ्मयम् । व्यवस्थितविभाषाविज्ञानात् सिद्धम् ।।
अचो रहाभ्यां द्वे ।। 8.4.46 ।।
`यरः' इति वर्तते । अच उत्तरौ यौ रेफहकारौ ताभ्यामुत्तरस्य यरो द्वे भवतः । अर्क्कः । मर्क्कः । ब्रह्म्मा । अपह्न्नुते ।
अच इति किम् ? ह्नुते । किम् ह्मलयति ।।
अनचि च ।। 8.4.47 ।।
`अचः' इति वर्तते, `यरः' इति च । अनच्परस्य=अच उत्तरस्य यरो द्वे वा भवतोऽनचि परतः । दद्ध्यत्र । मद्ध्वत्र ।
अच इत्येव--स्मितम् । ध्मातम् ।
* यणो मयो द्वे भवत इति वक्तव्यम् * । केचिदत्र `यणः' इति पञ्चमी, `मयः' इति षष्ठीति व्याचक्षते । तेषामुल्क्का, वाल्म्मीक इत्युदाहरणम् । अपरे तु `यणः' इति षष्ठी, `मयः' इति पञ्चमीति, तेषां दध्य्यत्र, मध्व्वत्रेत्युदाहरणम् ।
* शरः खयो द्वे भवत इति वक्तव्यम् * । अत्रापि यदि `शरः' इति पञ्चमी, `खयः' इति षष्ठी; तदा स्त्थाली, स्त्थातेत्युदाहरणम् । अथ वा---खय उत्तरस्य शरो द्वे भवतः । वत्स्सः, इक्ष्षुः, कष्षीरम्, अप्स्सराः ।
* अवसाने च यरो द्वे भवत इति वक्तव्यम् * । वाक्क्, वाक् । त्वक्क, त्वक् । षट्ट्, षट् । तत्त्, तत् ।।
नादिन्याक्रोशे पुत्त्रस्य ।। 8.4.48 ।।
आदिनिपरत आक्रोशे गम्यमाने पुत्त्रशब्दस्य न द्वे भवतः । `अनचि च' इति प्राप्तिः प्रतिषिध्यते । पुत्रादिनी त्वमसि पापे ।
आक्रोश इति किम् ? तत्त्वकथने द्विर्वचनं भवत्येव---पुत्त्रानत्तीति पुत्त्रादिनी । शिशुमारी व्याघ्री ।
* तत्परे चेति वक्तव्यम् * । पुत्रपुत्रादिनी त्वमसि पापे ।
* वा हतजग्धपर इति वक्तव्यम् * । पुत्त्रहती, पुत्रहती । पुत्त्रजग्धी । पुत्रजग्धी ।
* चयो द्वितीयाः शरि पौष्करसादेः * । चयो द्वितीया भवन्ति शरि परतः पौष्करसादेराचार्यस्य मतेन । तकारस्य थकारः--वथ्सः । ककारस्य खकारः---ख्षीरम् । पकारस्य फकारः---अपसराः ।
शलोऽचि ।। 8.4.49 ।।
`न' इति वर्तते । शरोऽचि परतो न द्वे भवतः । `अचो रहाभ्याम्' इति प्राप्तिः प्रतिषिध्यते । कर्षति । वर्षति । आकर्षः । अक्षदर्शः ।
अचीति किम् ? दर्श्श्यते ।
त्रिप्रभृतिषु शाकटायनस्य ।। 8.4.50 ।।
त्रिप्रभृतिषु वर्णेषु संयुक्तेषु शाकटायनस्याचार्यस्य मतेन द्वित्वं न भवति । इन्द्रः । चन्द्रः । उष्ट्रः । राष्ट्रम् । भ्राष्ट्रम् ।।
सर्वत्र शाकल्यस्य ।। 8.4.51 ।।
शाकल्याचार्यस्य मतेन सर्वत्र द्विर्वचनं न भवति । अर्कः । मर्कः । ब्रह्मा । अपह्नते ।।

दीर्घादाचार्याणाम् ।। 8.4.52 ।।
दीर्घादुत्तरस्याचार्याणां मतेन न द्वित्वं भवति । दात्रम् । पात्रम् । मूत्रम् । सूत्रम् ।
झलां जश्झशि ।। 8.4.53 ।।
झलां स्थाने जशादेशो भवति झशि परतः । लब्धा, लब्धुम्, लब्धव्यम् । दोग्धा, दोग्धुम्, दोग्धव्यम् । बोद्धा, बोद्धुम्, बोद्धव्यम् ।
झशीति किम् ? दत्तः । दत्थः । दध्मः ।।
अभ्यासे चर्च ।। 8.4.54 ।।
अभ्यासे वर्त्तमानानां झलां चरादेशो भवति, चकाराज्जश्च । चिखनिषति । चित्छित्सति । टिठकारयिषति । तिष्ठासति । पिफकारयिषति । बुभूषति । जिघत्सति । डुढौकिषते ।
प्रकृतिचरां प्रकृतिचरो भवन्ति---चिचीषति । टिटीकिषते । तितनिषति ।
प्रकृतिजशां प्रकृतिजशो भवन्ति---जिजनिषते । बुबुधे । ददौ । डिड्ये ।।
खरि च ।। 8.4.55 ।।
खरि च परतो झलां चरादेशो भवति । झल्ग्रहणं नानुवर्तते; पूर्वसूत्रे चानुकृष्टत्वात् । भेत्ता, भेत्तुम्, भेत्तव्यम् । युयुत्सते । आरिप्सते । आलिप्सते ।।
वावसाने ।। 8.4.56 ।।
`झलाम्', `चर्' इति वर्तते । अवसाने वर्तमानानां झलां वा चरादेशो भवति । वाक्, वाग् । त्वक्, त्वग् । श्वलिट्, श्वलिड् । त्रिष्टुप्, त्रिष्टुब् ।।
अणोऽप्रगृह्यस्यानुनासिकः ।। 8.4.57 ।।
अणोऽप्रगृह्यसंज्ञस्यावसाने वर्तमानस्य वाऽनुनासिकादेशो भवति । दधिँ, दधि । मधुँ, मधु । कुमारीँ, कुमारी ।
अण इति किम् ? कर्तृ । हर्तृ । अप्रगृह्यस्येति किम् ? अग्नी । वायू ।।
अनुस्वारस्य ययि परसवर्णः ।। 8.4.58 ।।
अनुस्वारस्य ययि परतः परसवर्ण आदेशो भवति । शङ्किता, शङ्कितुम्, शङ्कितव्यम् । उञ्छिता, उञ्छितुम्, उञ्छितव्यम् । कुण्डिता, कुण्डितुम्, कुण्डितव्यम् । नन्दिता, नन्दितुम्, नन्दितव्यम् । कम्पिता, कम्पितुम्, कम्पितव्यम् ।
इह कुर्वन्ति, वृषन्ति---इत्यत्र णत्वस्यासिद्धत्वात्पूर्वं नकारस्यानुस्वारः क्रियते, तस्यापि परसवर्णेन पुनर्नकार एव भवति, तस्याप्य सिद्धत्वात् पुनर्णत्वं न भवति । एवमनुस्वारीभूतो णत्वमतिक्रामतीति ।
ययीति किम् ? आक्रंस्यते । आचिक्रंस्यते ।।
वा पदान्तस्य ।। 8.4.59 ।।
पदान्तस्यानुस्वारस्य ययि परतो वा परसवर्णादेशो भवति । तङ्कथञ्चित्रपक्षण्डयमानन्नभः स्थ्म्पुरुषोऽवधीत्, तं कथं चित्रपक्षं डयमानं नभः स्थं पुरुषोऽवधीत् ।।
तोर्लि ।। 8.4.60 ।।
तवर्गस्य लकारे परतः परसवर्णादेशो भवति । अग्निचिल्लुनाति । सोमसुल्लुनाति । भवाँल्लुनाति । महाँल्लुनाति ।।
उदः स्थास्तम्भोः पूर्वस्य ।। 8.4.61 ।।
`सवर्णः' इति वर्तते । उद उत्तरयोः स्था, स्तम्भ---इत्येतयोः पूर्वसवर्णादेशो भवति । उत्थाता, उत्थातुम्, उत्थातव्यम् । स्तम्भेः खल्वपि---उत्तम्भिता, उत्तम्भितुम्, उत्तम्भितव्यम् ।
स्थास्तम्भोरिति किम् ? उत्स्नाता ।
* उत्पूर्वस्य स्कन्देश्छन्दस्युपसंख्यानम् * । अग्ने दूरमुत्कन्दः ।
* रोगे चेति वक्तव्यम् * । उत्कन्दको नाम रोगः । कन्दतेर्वा धात्वन्तरस्यैतद्रूपम् ।।
झयो होऽन्यतरस्याम् ।। 8.4.62 ।।
झय उत्तरस्य हकारस्य पूर्वसवर्णादेशो भवति अन्यतरस्याम् । वाग्घसति, वाग् हसति । श्वलिड् ढसति, श्वलिड् हसति । अग्निचिद्धसति, अग्निचिद् हसति । सोमसुद्धसति, सोमसुद् हसति । त्रिष्टुब्भसति । त्रिष्टुब् हसति ।
झय इति किम् ? प्राङ् हसति । भवान्हसति ।।
शश्छोऽटि ।। 8.4.63 ।।
`झयः' इति वर्त्तते, `अन्यतरस्याम्' इति च । झय उत्तरस्य शकारस्याटि परतश्छकारादेशो भवति अन्यतरस्याम् । वाक्छेते, वाक् शेते । अग्निचिच्छेते, अग्निचित् शेते । सोमसुच्छेते, सोमसुत् शेते । श्वलिट् छेते, श्वलिट् शेते । त्रिष्टुप्छेते, त्रिष्टुप् शेते ।
* छत्वममीति वक्तव्यम् * ।

किं प्रयोजनम् ? तच्छ्लोकेन, तच्छ्मश्रुणा---इत्येवमर्थम् ।।
हलो यमां यमि लोपः ।। 8.4.64 ।।
`अन्यतरस्याम्' इति वर्तते । हल उत्तरेषां यमां यमि परतो लोपो भवति अन्यतरस्याम् । शय्य्या इत्यत्र द्वौ यकारौ, क्रमजस्तृतीयः; तत्र मध्यमस्य वा लोपो भवति---शय्या, शय्य्या ।
अदितेरपत्यमादित्य इत्यत्र तकारात्पर एको यकारः, यणो मय इति क्मजो द्वितीयः, तत्र मध्यमस्य वा लोपो भवति । आदित्यः, आदित्य्यः । आदित्यो देवता अस्य स्थालीपाकस्येति आदित्य्यः, आदित्य इति । अत्रापि द्वौ यकारौ; क्रमजस्तृतीयः; तत्र मध्यमस्य मध्य मयोर्वा लोपो भवति ।
हल इति किम् ? आन्नम् । यमामिति किम् ? अग्निः । अर्ध्यम् । यमीति किम् ? शाङ्र्गम् ।।
झरो झरि सवर्णे ।। 8.4.65 ।।
`हलः' इति वर्तते, `अन्यतरस्याम्' इति च । हल उत्तरस्य झरो झरि सवर्णे परतो लोपो भवति अन्यतरस्याम् । प्रप्तम्, अवत्त्तमित्यत्र त्रयस्तकाराः, क्रमजश्चतुर्थः; तत्र मध्यमस्य मध्यमयोर्वा लोपो भवति ।
मरुत्त्त इत्यत्र चत्वारस्तकाराः, क्रमजः पञ्चमः; तत्र मध्यमस्य मध्यमयोर्मध्यमानां वा लोपो भवति । मरुच्छब्दस्य हि उपसंख्यानसामर्थ्याद् `अच उपसर्गात्तः' इति तत्वं भवति ।
झर इति किम् ? शाङ्र्गम् । झरीति किम् ? प्रयपञ्च्भा । अल्लोपस्य च `पूर्वत्रासिद्धे न स्थानिवत्' इति स्थानिवद्भावप्रतिषेधादत्र चकारस्य ञकारे लोपः स्यात् ।
सवर्ण इति किम् ? तर्प्ता, तर्प्तुम्, तर्प्तव्यम् । सवर्णग्रहणसामर्थ्यादिह सङ्ख्यातानुदेशो न भवति, सवर्णमात्रे लोपो विज्ञायते । तेन शिण्ढि, पिण्ढि इति ढकारे डकारस्य लोपो भवति ।।
उदात्तादनुदात्तस्य स्वरितः ।। 8.4.66 ।।
उदात्तादुत्तरस्यानुदात्तस्य स्वरितादेशो भवति । गार्ग्यः । वात्स्यः । पचति । पठति ।
अस्य स्वरितस्यासिद्धत्वाद् `अनुदात्तं पदमेकवर्जम्' इत्येतन्न प्रवर्त्तते । तेनोदात्तस्वरितावुभावपि श्रूयेते ।।
नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् ।। 8.4.67 ।।
उदात्तोदयस्य स्वरितोदयस्य चानुदात्तस्य स्वरितो न भवति । पूर्वेण प्राप्तः प्रतिषिध्यते, अगार्ग्य---काश्यप---गालवानां मतेन । उदात्त उदयो यस्मात्स उदात्तोदयः । उदात्तपर इत्यर्थः । एवं स्वरितोदयः ।
उदात्तोदयस्तावत्---गार्ग्यस्तत्र । वात्स्यस्तत्र । तत्रशब्द आद्युदात्तः, तस्मिन्नुदात्ते परतो गार्ग्यशब्दः स्वरितो न भवति ।
स्वरितोदयः---गार्ग्यः क्व । वात्स्यः क्व । क्वशब्दः स्वरितः, तस्मिन्परतोऽनुदात्तः स्वरितो न भवति ।
अगार्ग्यकाश्यपगालवानामिति किम् ? गार्ग्यस्तत्र । गार्ग्यः क्व । तेषां हि मतेन स्वरितो भवत्येव ।
`उदात्तस्वरितपरस्य' इति वक्तव्य उदयग्रहणं मङ्गलार्थम् । अनेकाचार्यसङ्गीर्तनं पूजार्थम् ।।
अ अ इति ।। 8.4.68 ।।
एकोऽत्र विवृतः, अपरः संवृतः, तत्र विवृतस्य सवृतः क्रियते । अकारो विवृतः संवृतो भवति । वृक्षः । प्लक्षः ।
इह शास्त्रे कार्यार्थ मकारो विवृतः प्रतिज्ञातः, तस्य तथाभूतस्यैव प्रयोगो मा भूदिति संवृतप्रत्यापत्तिरियं क्रियते ।
दीर्घप्लुतयोश्चानेन विवृतेनाकारेण ग्रहणं नेष्यते । तेन तयोः संवृतो न भवति ।
संवृतेन च सर्वगुणस्य मात्रिकस्य ग्रहणमिष्यते । तेन सर्वगुणः प्रत्यापद्यते ।।
इष्ट्युपसंख्यानवती शुद्धगणा विवृतकूढसूत्रार्था ।
व्युत्पन्नरूपसिद्धिर्वृत्तिरियं काशिका नाम ।।
इति श्रीवामनाचार्यकृतायां काशिकावृत्तौ अष्टमाध्यायस्य तुरीयः पादः
-----------------************************-----------------

# Nyasa

## 1.1

श्रीबोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिपादविरचिता
न्यासापरपर्याया
काशिकाविवरणपञ्जिकाख्या
काशिकाव्याख्या
अनुबन्धचतुष्टयनिरूपणम्

जयन्ति ते सदा सन्तः सर्वथा यैरूपार्जितम्।
गुणानां सुमहद्वन्दं दोषाणां च विमार्जनम्।।1।।
अन्यतः सारमादाय कृतैषा काशिका यथा।
वृत्तिस्तस्या यथाशक्ति क्रियते पञ्जिका तथा।।2।।
`वृत्तौ'इत्यादि। अथ किमर्थः काशिकारम्भेऽस्य श्लोककस्योपन्यासः ? तस्यामग
ौरवपरिहारार्थः, गौरवप्रतिपादनार्थश्च। अत्र ह्यसति प्रागन्यासु वृत्तिषु रचितासु पश्चादियं रचितेति पुनरुक्ततादोषं सम्भावयतां तस्यामगौरवं स्यात्, न तु गौरवम्। अस्मिंस्तु सति न भवत्येष दोषः, यस्मादनेन स विशेषस्तस्या आख्यायते सम्यगशेषशब्दव्युत्पत्तिहेतुः, यस्मिन् सति
पुनरुक्ततादोषसम्भावनाऽगौरवहेतुर्न भवति, गौरवं चोत्पद्यते। स पुनरुक्ततादोषसभ्भावना! तस्यां चासत्यां नागौरवं भवति, किं तर्हि ?
पूर्वोक्ताद्विशेषाद्गौरवमेव। तत्र च वृत्तिः-पाणिनिप्रणीतानां सूत्राणां विवरणं चूल्लिभट्टिनल्लूरादिविरचितम्। भाष्यं कात्यायनप्रणीतानां वाक्यानां विवरणं पतञ्जलिप्रणीतम्। `तथा' इति समुच्चये। धातुनामपारायमादिषु चेत्यर्थः। अथ वा सादृश्ये। यथा वृत्त्यादौ
विप्रकीर्णस्य तन्त्रस्य सारसंग्रहः क्रियतेतथा धातुनामपारायणादिष्विति यावत्।
धातवो भूवादयः नामानि प्रातिपदिकानि, तेषां परां पर्यन्तं निष्ठामयन्ते गच्छन्ति
याभ्यां शास्त्राभ्यां ते धातुनामपारायणे पारायणशब्दः प्रत्येकमभिसम्बध्यते- धातुपारायणं नामपारायणञ्चेति। ते आदी येषामिति बहुब्रीहिः। आदिशब्देन शिक्षादीनांग्रहणम्। `विप्रकीर्णस्य' इति। विक्षिप्तस्य, विस्तारितस्येत्यर्थः। तन्त्रस्य व्याकरण-
शास्त्रस्येत्यर्थः। तद्धि तन्त्रमिव तन्त्रम्। दैर्ध्येण प्रसारहितास्तन्त-
वस्तन्त्रमित्युच्यन्ते। तथा तदनेकस्य तिरश्चीनस्य तन्तोरनुग्राहकम्, तथेदमप्यनेकस्य लक्ष्यस्येति, एतदस्य तन्त्रेण साधर्म्यम्। अथ वा -तन्त्र्यन्ते व्युत्पाद्यन्ते शब्दा अनेनेति तन्त्रं व्याकरणम्। अनेकार्थत्वादद्धातुनाम् `तत्रि कुटुम्बधारणे(धा.पा.1978) इत्येष धातुरत्र व्युत्पादने वर्तते। अथ वा , तन्त्रं
सिद्धान्तः,`तन्त्रंप्रधाने सिद्धान्ते'(3.3.185) इत्यमरः) `सारसंग्रहः' इति। सारशब्दोऽयं नपुंसक-
लिङ्गो न्यायादनपेते वर्तते। तथा च अर्द्धर्चादिषु वक्ष्यति- `सारशब्द उत्कर्षे पूंलिङ्गो न्यायादनपेते नपुंसकम्'(2.4.31) इति। सम्यक् समस्ताद्वा गृह्यते लक्ष्यं लक्षणञ्चानेनेति संग्रहः। `ग्रहवृदृनिश्चिगमश्च'(3.3.58)ठइति करणेऽप्। सारञ्चासौ -
संग्रहश्चेति सारसंग्रहः। स पुनरयमेव काशिकाख्यो वृत्तिविशेषः। अत्र सारशब्देन -
निर्दोषतोद्भाविता। न हि सदोषस्य शास्त्रस्य न्यायावनपेतत्वमुपपद्यते;न्यायेन तस्य बोध्यमानत्वात्। संग्रहः शब्देनापि गुणवत्ता ख्याप्यते। न ह्यन्यथा सम्यक् सर्वं
लक्षणं लक्ष्यञ्चानेन शक्यते संग्रहीतुम्।
के पुनरत्र गुणाः ? इष्टयुपसंख्यानवत्त्वम्, शुद्धगणत्वम्, विवृतगूढसूत्रा-
र्थत्वम्; व्युत्पन्नरूपसिद्धित्वञ्च। तथा च वक्ष्यति शास्त्रान्ते--
इष्टयुपसंख्यानवती सुद्धगणा विवृत्तगूढसूत्रार्था।
व्युत्पन्नरूपसिद्धर्वृत्तिरियं काशिका नाम।।इति।
अथ वा संग्रहशब्दोऽयं भावसाधनः- संग्रहणं संग्रह=संक्षेप, शास्त्रभेदेन विप्रकीर्णस्य तन्त्रस्य पिण्डीकृत्यैकत्रावस्थापनमिति यावत्। सारशब्दस्तु
प्रधानवचनः। यावता ग्रन्थसन्दरर्भेण परिपूर्णता शब्दव्युत्पत्तेर्भवति स सारः। सारस्य संग्रहः सार-
संग्रहः, तस्य करणं सुखोदग्रहणार्थम्। एकत्र हि व्यवस्थितस्य सुकरमुदग्रहणं भवति,
दुष्करन्तु विप्रकीर्णस्य। सारग्रहणं परिकरबन्धनिरासार्थम्। स हि तस्योपकारकत्वाव-
ङ्गम्, अप्रधानम्। इतरस्तु तेनैवोपकार्यत्वादङ्गि,प्रधनाम्।
`अथ' इत्यादि। अथशब्दोऽधिकारार्थः, अधिकारः = प्रस्तावः, शब्दानुशासन
शास्त्रं प्रस्तूयत इत्यमुमर्थमथशब्दो द्योतयति। `शब्दानुशासनम्' इत्येतावति

ह्यभिहिते सन्देहः स्यात्- किं शब्दानुशासनमारभ्यते ? पठ्यते? श्रूयते वा ? इति, अथशब्दप्रयोगे त्वर्थान्तरव्यवच्छेदेन प्रस्तूयत इत्येषोऽर्थो निश्चीयते। अनुशिष्यन्ते संस्क्रियन्ते व्युत्पाद्यन्तेऽनेन शब्दा इत्यनुशासनम्। शब्दानामनुशासनं
शब्दानुशासनम्।

अत्र केचिच्चोदयन्ति-- ```उभयप्राप्तौ कर्मणि' (2.3.66)इत्यनेनात्र षष्ठी, ततश्च `कर्मणि च ' (2.2.14) समासप्रतिषेधेन भवितव्यम्''' इति,

एतच्चायुक्तम्; यत्र ह्युभयोः प्राप्तिस्तत्रानेन कर्मणि दोहोऽशिक्षितेनागोपालकेनेति, एवं नाम दुर्दोहानां गवामशिक्षितेनागोपालकेन दोहइत्याश्चर्यभूतोऽत्र गवां दोहः प्रतिपादयितुमा-

श्चर्यशब्दः, नान्यथेति सामर्थ्यप्राप्तमुभयोरुपादानम्। शब्दानुशासनमित्यत्र तु

शब्दानामिदमनुशासनम्, नार्थानाम्- इत्येतावतोऽर्थस्य विवक्षितत्वात्,

तस्याचार्यस्य कर्तृरूपादानमन्तरेणापि प्रतिपादयितुं शक्यत्वादाचार्योपदानमकिञ्चित्करम्।तस्मान्नात्रास्ति द्वयोरति=कर्तृकर्मणोओओओओओओओः

सामर्थ्यप्राप्तमुपादानम्। ततश्चोभयप्राप्तिरपि नास्त्येव। असत्याञ्च तस्यां न `उभयप्राप्तौ कर्मणि' (3.2.66)

इत्यनेन षष्ठी, केन तर्हि? `कर्तृकर्मणोओः कृति' (2.3.65)इत्यनेन। ततश्चेष्मप्र-

व्रश्चनवत् समासो भविष्यति। अथ वा, शेषलक्षमैवेयं षष्ठीत्यचोद्यमेतत्।

व्याकरणस्यचेदमन्वयर्थं नाम शब्दानुशासनमिति। अतस्तेनैव सूचित्तवात् प्रयोजनस्यानभिधानम्। ये हि शब्दा अनुशिष्यन्ते, तस्य तदुद्देशे प्रवृत्तिः। यस्य च यदुद्दिश्य प्रवृत्तिः , तत्तस्य प्रयोजनं भवति। तदेतदुक्तं भवति- शब्दानुशिष्टि-

रस्य प्रयोजनमिति। एतच्च साक्षात् प्रयोजनम्, पारम्पर्येण तु वेदरक्षणादीनि

प्रयोजनानि भाष्यादवधार्याणि। सम्बन्धस्तु साध्यसाधनभावलक्षमः। शब्दानुशिष्टेः

साध्यायाः; व्याकरणस्य साधनस्य च यः सम्बन्धः, स प्रयोजन एवान्तभूतः।

`केषां शब्दानाम्' इति। कथं पुनरनुशासने गुणीभूतानां शब्दानां किंशब्देन

प्रत्यवमर्शो भवति ? नैषः दोषः; प्रधाने ह्यन्तर्भूतस्याप्युपसर्जनस्य बुद्ध्या

प्रविभज्य किंशब्देन प्रत्यवमर्शो दृष्टः, यथा- राजपुरुषोऽयम्, कस्य राज्ञ इति। कः पुनरत्र प्रष्टुरभिप्रायः ? एवं मन्यते- शब्दानुशासनमित्यत्र शब्दशब्दः सामान्य

वचनः। न च सामान्यशब्द प्रकरणादिरहितो विशेषे वर्त्तितुमुत्सहते, सन्ति च समुद्र-घोषादयोऽपि बहवः शब्दाः, अतस्तेषामपि व्युत्पादनं प्राप्नोतीति ? इह तु व्याकरणं

प्रस्तुतम्, तच्च बेदाङ्गम्, अङ्गञ्चोपकारकं भवति। एवञ्च तद्वेदस्योपकारकं भवति यदि तेनैव वैदिकाः शब्दाः संस्क्रियन्ते, लौकिकाश्च तदुपकारिणः।

वैदिकोपकारित्वं तु लौकिकानाम; तैस्तदर्थस्याख्यानात्। तस्माच्छब्दानुशासनाधिकाराद्विशिष्टा एवात्र शब्दा व्युत्पादयितुमभीष्टाः,न तु समुद्रघोषादयोऽपि।

तथाविधशब्दरव्युत्पादने हि व्याकरणस्यावेदाङ्गतापि स्यादिति मन्यमान आह`लोकिकानाम्' इत्यादि। लोके विदिता लौकिकाः,

तत्र विदित इत्यनुवर्तमाने `लोकसर्वलोकाट्ठञ्' (5.1.44) इति ठञ्। अथ वा , लोके भवा लौकिकाः- अध्यात्मादित्वाट्ठञ् (वा.456)। एवं वैदिकाः। वैदिकानां लौकिकेभ्यः

पृथगुपादानं प्राधान्यख्यापनार्थम्। यथा- `ब्राह्मणा आयाताः, वसिष्ठोऽप्यायातः' इ‍ैइति। अत्र ब्राह्मणत्वादेव वसिष्ठस्याप्यागमने सिद्धे प्राधान्यख्यापनार्थं तस्य पृथगुपादानम्। प्राधान्यख्यापनं तु वैदिकानां यत्नेनापभ्रंश निरासार्थम्। तेषां

ह्यपभ्रंशे याज्ञे कर्मणि महान् प्रत्यवायो दृष्टः- `हेलयो हेलयः' इति। अथ वा, ये

लोकायात्रा हेतवो भाषाशब्दास्तैरेव लौकिकत्वं प्रसिद्धमिति वैदिकानां पृथगुपादानम्। तत्र लौकिका अनियतवर्णानुपूर्वीकाः- गौः,अश्वः,पुरुषः, हस्तीत्येवमादयः।

वैदिकास्तु नियतानुपूर्वीकाः- `शन्नो देवीरभिष्टये' (ऋ.10.9.4)इत्येवमादयः।

इह ह्यन्वाख्याने प्रतिपदपाठोऽभ्युपेयः। तस्यापि त्रयः प्रकाराः- शब्दाप-

शब्दोभयोपदेशभेदेन। आनन्त्याच्च शब्दानां स सर्वथाप्यसम्भवः। एवं हि श्रूयते- `बृह-

स्पति किलेन्द्राय दिव्यं वर्षसहस्त्रं प्रतिपदविहितानां पारायणं प्रोवाच, न चान्तं

जगाम' इति। तदीदृशे वक्तर्यध्येतर्यध्ययकाले च नान्तगमनमभूद्यस्य, तस्य कुतोऽ-

द्यत्वे भविष्यति स्वल्पायुषि प्रजयाम्। न चान्योऽभ्युपायोऽस्तीति मन्यमान् आह- `कथम्' इत्यादि। कथमनुशासनम् ? न केनचित् प्रकारेण शब्दानां

व्याकरणमनुशासनमित्यर्थः। अथ वा भावसाधनोऽत्रानुशासनशब्दः। अनुशिष्टिरनुशासनम्- संस्कारः, न कथञ्चिच्छब्दानां संस्कारः सम्भवतीति यावत्।

येनाल्पेनैव प्रयत्नेन महतः शब्दौघान् प्रतिपद्येत, तदुपायन्तरं दर्शयितुमाह- `प्रकृत्यादिविभाग' परिकल्पनया' इत्यादि। प्रत्ययात् प्रथमं क्रियत इति प्रकृतिः,

प्रकृतिरादियषां ते प्रकृत्यादयः, आदिशब्दः प्रत्ययादीनां परिग्रहाय, तेषां विभगोऽसंकीर्णरूपता,तस्य कल्पना परिकल्पिकया बुद्ध्या परिकल्पनम्; तया परिकल्पनया शब्दानामनुशासनं व्याकररणनुशिष्टिर्वा। हेताविदयं तृतीया। न हि तया विना व्याकरणमनुशासनं भवति; नापि तेन विनानुशिष्टिः शब्दानां

शक्यते कर्तुम्। परिकल्पनयेत्यनेनैतत्
प्रतिपादयति। कल्पनामात्रं प्रकृत्यादिविभागः, परमार्थवस्तु; प्रत्यस्तमितप्रकृत्यादिविभागः समुदाय एव कस्यचिदर्थस्य वाचक इति।
`सामान्यविशेषवता लक्षणेन' इति। करण एषा तृतीया। सामान्यञ्च
विशेषश्च सामान्यविशेषौ तौ यस्मिन् लक्षणे स्तस्तत् सामान्यविशेषवल्लक्षमम्।
तत्रोत्सर्गलक्षणं सामान्यवत्,यथा `कर्मण्यण्' (3.2.1)इति। तत्र हि `धातोः' इत्येततअनुपसर्ग इति च विशेषः। तत्र सामान्यवता लक्षणेन प्रकृत्यादिविभागः परिकल्पनया कुम्भकारः, काण्डलावः, शरलावः- इत्यवमादिकं महान्तं शब्दौघं प्रतिपद्यते। विसेषवता तु
पार्ष्णित्रः, गोदः, कम्बलद इत्यवमादिकम्। एवमन्यत्रापि वेदितव्यम्।

प्रत्याहारप्रकरणम्।
`अथ' इत्यादि। एवं मन्यते- शब्दानुशासनमधिकृतम्, तत्र यन शब्दा अनुशिष्यन्ते
तस्यैवोपदेशो युक्तः न चैषामुपदेशेन कस्यचिच्छब्दस्य संस्कारः क्रियते;
ततश्चाप्रस्तुतभिधानमिति प्रश्नस्याभिप्रायः। `वर्णानाम्' इत। वर्णा अकारादयः, तेषामाद्युच्चारणमुपदेशः। `प्रत्याहार्थः' इति। प्रत्याहारः `अइउण्' (मा.सू.1) इत्येवमादिको विशिष्टानुपूर्वीको विशिष्टानुबन्धकश्चाक्षरसमाम्नायः, प्रत्याह्रियन्ते
संक्षिप्यन्ते वर्णा अस्मिन्निति कृत्वा। स यता स्यादित्येवमर्थो वर्णानामुपदेशः। कस्यादेतत्। तस्यापि प्रकृतानुपयोगित्वात् तदवस्थ एवैष दोष इत्यत आह- `प्रत्याहारो
लाघवेन' इत्यादि। लघोर्भावो लाघवम्, तत् पुनरल्पप्रयासः। अल्पप्रयाससाध्यं हि
वस्त्वल्पप्रयत्नयोगाल्लगूच्यते।तेन लाघवेन शास्त्रस्य ढ्रलोपे पूर्वस्य दीर्घोऽणः(6.3.111) इत्येवमादेः प्रवृत्त्यर्थोऽभिनिर्वृत्यर्थ इत्यर्थः। सति हि प्रत्यहारे `आदिरन्त्येन सहेता'(1.1.71) इत्येतत् प्रवर्त्तते। तत्प्रवृत्तौ चाकारादीनामणित्येवमादिकाः संज्ञाः सिध्यन्ति। ततश्च यत्राकारादीनां ग्रहणमिष्टं तत्राणित्येवमादिकयैव संज्ञया बहवोऽपि ते निर्दिश्यन्त इति लाघवेन शास्त्रस्याभिनिर्वृत्तिर्भवति। तस्मिंश्चासति `आदिरन्त्येन सहेता' इत्येवमादेः शास्त्रस्य प्रवृत्तिर्न स्यात्; आद्यन्तयोरभावात्। न ह्यसति सन्निवेशविशेषे तावुपपद्येते,
असत्याञ्च तत्प्रवृत्तरौ पूर्वोक्ताः संज्ञा न स्युतः। ततश्च यत्र यत्र सूत्रेऽका-
कारादीनां यावतां ग्रहणमिष्टं तत्र ते तावन्तः स्वरूपेणैव निर्दिश्येरन्निति लाघवेन शास्त्रस्य प्रवृत्तिर्न स्यात्। तदेवं प्रकृतस्यैवाल्पप्रयासेन निष्पादनार्थ-त्वान्न भवति पूर्वदोषावसरः।
1.अइउण्।
अथ कस्मादिहाद् गुणादिकमच्कार्य न भवति? 'प्लुतप्रगृह्याअचि'(6.1.125) इति प्रकृतिभावात्। प्रगृह्यत्वं तु तेषां 'निपात एकाजनाङ्' (1.1.14)इति प्रगृह्यसंज्ञाविधानात्। निपातत्वं तु चाजिषु पाठात्। अत एव निपातत्वादर्थवत्वे चोत्पन्नाया
विभक्तेः श्रवणं न भवति।इहानार्थवत्वे विभक्त्युत्पत्तिरनर्थकस्ययापि निपातस्य प्रातिपदिकसंज्ञोपसंख्यानाद्वेदितव्या। 'अनेन क्रमेण'इति। अनयाऽऽनुपूर्व्या। किं पुनःकारणमयमेव क्रम आश्रीयतेः न क्रमान्तरम्? तदुच्यतेः इहाण्ग्रहणेन त्रयाणामध्येषामकारादीनां ग्रहणमिष्यते, इण्ग्रहणे त्वकारस्य ग्रहणं नेष्यते, उण्ग्रहणे पुनरकारयोर्दयोरपि । एतच्च क्रमान्तराश्रयणे न सम्पद्यत इत्येष्वेवं क्रम आश्रीयते।
'वर्णात कारः'(वा.320) इति कारप्रत्यस्योपसंख्यानादिह च तदकरणन्नैते वर्णाः,अपि तु तच्छायानुकारिणोऽन्य एव सन्ध्यक्षरराविवर्णैकदेशा इति कस्यचिदाशङ्काक्डा
स्यात्; अतस्तन्निराकरणायाह-'वर्णान्'इति। कारप्रत्ययस्तु 'रोगाख्यायां ण्व्वल बहुलम्'(3.3.108)इत्यत्रोपसंख्यायते। तेन षबहुल्वनचाैतल्सत्यपि वर्णत्वे न भवतीति
भावः। णकारस्य पूर्वोत्तरवर्णान्तरःपातित्वात् मध्यभावः, नान्त्यत्वम्; अत
इत्संज्ञया न भवितव्यम् ? अथापि कथञ्चिदन्त्यत्वं स्यात्? एवमपि वक्ष्यमाणेन न्यायेनाप्रधानत्वाद् यथा तत्राच्कार्यमस्य न भवति तथेत्संज्ञापि न भवेदिति यस्य
भ्रान्तिः स्यात्, तं प्रत्यन्त इत्युक्तम्, इतमिति च । यद्यपि पूर्वोत्तरवर्णा-
पेक्षयाऽस्य मध्यमभावः, तथापि पूर्ववर्णापेक्षयान्त्यत्वमस्त्येव। सति च
तस्मिन्नप्रधानस्यपीत्संज्ञया भवितव्यम्; उपदेशसामर्थ्यात्। अन्यथा हि तदुपदेश-
वैयर्थ्यं स्यात्। `आदिरन्त्येन सहेता' (1.1.71) इत्यनेनाणित्येवमादिकाः संज्ञा यथा स्युरित्येवमर्थो णकारादीनामनुबन्धानामुपदेशः। स च तदर्थोऽसत्यामित्संज्ञायां न
स्यादित्यभिप्रायः। `तस्य' इत्यादि। `एकेन' इति सहारथयोगे तृतीया, `तस्य' इति
इति कर्मणि षष्ठी। तस्य णकारस्य प्रदेशवाक्येषु संज्ञिप्रत्यायनार्थमेकेनैवाकारेण सहोपदानां भवति।स ह्यकारादीनां वर्णानामकारसहित एव संज्ञा, न

केवलः, नापि
वर्णान्तरसहितः। तस्मात् प्रत्यायनार्थं तेनैव सहोपादीयते, न केवलः, नापि वर्णान्तरसहितः।
अन्ये त्वाहुः - तस्येति कर्त्तरि षष्ठी; एकेनेति च सहयोगे तृतीया।
तेनायमर्थः-आदिवर्णसहितो णकारोऽन्येषां मध्यपातिनां वर्णानां ग्राहको भवत्यादिवर्णस्य चेति।
अपरे आहुः- अनेकार्थ्वाद्धातूनां गृह्णातिरत्रोच्चारणे वर्त्तते `ग्रहणवता प्रातिपदिकेन' (व्या.प.89) इति यथा। तेनायमर्थ-- तस्यैकेन सहोच्चारणं भवतीति। अथ
`इणः षीध्वम्' (8.3.78) इत्यत्रेकारेणास्य ग्रहणं न भवतीति कुतोऽवसितम् ? `अति
श्नुधातुभ्रुवां य्वोः' (6.4.77) इतीकारोकारयोः संसृज्य निर्देशात्। यदीकारेणास्य
ग्रहणं स्यात् ततो लाघवार्थं `इण्' इत्येव निर्दिशेत्। `य्वोः' इति संसृज्य
निर्देशेऽर्धचतस्त्रो मात्रा भवन्ति, इणिति निर्देशे तिस्त्रः, तत्र लघीयसा न्यासेन सिद्धे यद्गरीयासं प्रयत्नमारभते ततो ज्ञायते नास्य णकारस्येकारेण ग्रहणं भवतीति। इह तर्हि `कृवापाजिमिस्वदिसाध्यशूभ्य उण्' (द.उ. 1.86) इत्युकारेण ग्रहणं
कस्मान्न भवति ? उकारादन्यस्य ग्राह्यस्याभावात्, तस्य च स्वरूपेणैव
निर्देशात्।
`ह्रस्वमवर्णम्'इत्यादि। प्रयुज्यत इति प्रयोगो धात्वादिः। ह्रस्वमवर्ण
प्रयोगगे संवृतम्। संवृतगुणयोगात् संवृतम्। यथा शुक्लगुणयोगात् शुकक्लः पट इति।
`दीर्घप्लुतयोस्तु विवृतत्वम्' इति। विवृतगुणयोगित्वनमित्यर्थः। तथा चाहुः शिक्षा
काराः- `विवृतकरणाः स्वराः, तेभ्य ए ओ विवृततरौ, ताभ्यामपि ऐ औ, एताभ्यामप्याकारः, संवृतोऽकारः'इति। `तेषाम्' इत्यादि। तेषां ह्रस्वादीनां
`तुल्यास्यप्रयत्नं
संवर्णम्' (1.1.9) इति सवर्णसंज्ञा यथास्यादित्येवमर्थमिह शास्त्रे ह्रस्वोऽकारो
विवृतगुणोऽभ्युपगम्यते। अन्यथा हि भिन्नत्वात् प्रयत्नस्यासति सावर्ण्ये दण्डाढकमित्यादौ `अकः सवर्णे दीर्घः' (6.1.101) इति दीर्घत्वं न स्यातत्। ननु च सत्यपि विवृतत्वप्रतिज्ञानैव ह्रस्वप्लुतयोरकः सवर्णे दीर्घत्वं प्राप्नोति, तस्मिन् कर्त्तव्ये प्लुतस्यासिद्धत्वात्, नैष दोषः; `सिद्धः प्लुतः स्वरसन्धिषु' इत स्वरसन्धिषु
प्लुतस्य सिद्धत्वात्त; इतरथा हि `प्लुतप्रगृह्या अचि' (6.1.125) इत प्रकृतिभाव-
विधानमनर्थकं स्यात्। अत्र च यद्यपि `विवृतः प्रतिज्ञायते' इत्युक्तम्, तथापि तेषां सावर्ण्यप्रसिद्ध्यर्थमिति वचनाद्ववृततर इति गम्यते। न हि विवृतस्य विवृततरेण
सावर्ण्यमुपपद्यते; प्रयत्नभेदात्; विवृतत्वप्रतिज्ञानसामर्थ्याद्वा।
अविवृततरस्यापि विवृततरेण सावर्ण्यं भविष्यति। यदि`इह' इत्येतावदेवोच्येत, तदा
प्रत्यासत्तेः प्रकृतत्वाच्चक्षरसमाम्नायिक एव विवृतः प्रतिज्ञायत इति विज्ञायेत्, न धातुप्रातिपदिकप्रत्ययनिपातस्थः; ततः प्रयत्नभेदादसति सावर्ण्ये
आक्षरसमाम्नायिकेन तस्याग्रहणादच्त्वं न स्यात्। तस्मिश्चासति शाम्यतीत्यत्राच्परि-
भाषानुपस्थानात् स्थानिनोऽकारस्याच्त्वाभावात् `शमामष्टानां दीर्घः श्यनि' (7.3.74) इति दीर्घत्वं न स्यात्। दृषद् इत्यत्र प्रातिपदिकस्यान्त उदात्तो भवतीति अन्तोदात्तत्वं नस्यात्; तस्याज्धर्मत्वात्। नायक इत्यत्र प्रत्ययस्याकारस्यानच्त्वात्
तत्रायादेशो न स्यात्। अवनमतीत्यत्र `निपाता आद्युदात्ताः' (फि.सू.4.80) `उपसर्गाश्चाभिवर्जम्' (फि.सू.4.81) इत्याद्युदात्तत्वं न स्यात्। किञ्च
अनुवृत्तिनिर्देशस्थे-नाकारे णासति सावर्ण्ये दीर्घस्य ग्रहणं न स्यात्। तत्र को दोषः? `अस्य च्वौ' (6.4.32) इतीहैव स्यादीत्त्वम् शुक्लीभवतीति;
मालीभवतीत्यत्र तु न स्यात्। `यस्येति च' (6.4.148) इतीहैव स्यादकारलोपः वाक्षिः, प्लाक्षिरितित, वालाकिरित्यत्र तु न स्यात्। तस्माद्यावत् किञ्चिदवर्णमात्रमिह शास्त्रे तस्य सर्वस्य विवृतत्वं प्रतिज्ञायत
इति प्रदर्शनार्थं शास्त्रग्रहणं कृतम्। ननु च सत्यपि सावर्ण्ये नैवानुवृत्तिनिर्देशस्थेनाकारेण सवर्णानां ग्रहणं सिध्यति; अनण्त्वात्। न ह्यनुवृत्तिनिर्देशे येऽकारादयस्तेऽणः, किं तर्हि ? ये अक्षरसमाम्नाये। जातिपक्षाश्रयाददोष इति चेत् ? न; जातिपक्षे ग्रहणकशास्त्रस्य प्रत्याख्यानान्नैष दोषः। इह हि व्यक्तिषु द्वयमस्ति--
सादृश्यम्,भेदश्च। तत्र कदाचित् किञ्चित्प्राधान्येन विवक्ष्यते, यदा सादृश्यं
विविक्ष्यतेतदा तस्य भागस्य सदृशस्य सर्वासु व्यक्तिषु समानत्वादशेषव्यक्त्या-
क्षेपो भवति; भेदस्यापरामृष्टत्वात्। सोऽयं प्रत्याहारे सदृशभागः प्रधान उपदेश इति सर्वासामवर्णव्यक्तीनामनुवृत्तिनिर्देशस्थानामण्त्वमुपपद्यते। कः पुनरस्य सादृश्यस्यावर्णजातेश्च विशेषः ? अयमस्ति विशेषः- एतच्च सादश्यं
ह्रस्वास्वेवावर्णव्यक्तिषु वर्त्तते, न दीर्घप्लुतासु। अवर्णजातिस्तु दीर्घप्लुता-

स्वपि वर्त्तत इति गतमेतत्।
अथ कथमेतदवगम्यते अकार इह शास्त्रे विवृतः प्रतिज्ञायत
इत्यत आह- `तस्य' इत्यादि। यदि पूर्वं निवृतोऽकारो न प्रतिज्ञायेत, ततस्तस्याप्रयोगार्थम् `अ अ' (8.4.68) इत्यनेन प्रत्यापत्तिं न कुर्यात्। स्वरूपाद्धि प्रच्युतस्यपुनस्तत्प्राप्तिः- प्रत्यापत्तिः, सा कथमविचलितस्वरूपस्यैवोपपद्येत ? अथ वा, यदि विवृतः प्रतिज्ञायते, तदा तस्य शास्त्रस्य परिसमाप्तावपि तथाभूतस्यैव प्रयोगः
स्यात् ? इति पूर्वपक्षमाशङ्क्याह- `तस्य' इत्यादि। अर्थशब्दो निवृत्तिवचनः, यथा-मशकार्थो धूम इति। तस्य विवृतस्य प्रयोगनिवृत्तिर्यथा स्यादित्यर्थः। अथ वा - अर्थ-
शब्दः प्रयोजनवचनः, तस्येत्यनेन संवृतः प्रत्यवमृश्यते, प्रयोगोऽर्थः प्रयोजनं
यस्य तत् तथोक्तम्। क्रियाविशेषणत्वान्नपुंसकत्वम्। तदेतदुक्तं भवति- तस्य संवतस्य स्वरूपात् प्रच्युतस्य प्रयोगनिमित्तं प्रत्यापत्तिः करिष्यते; यतः शास्त्रपरि-
समाप्तौ ततो न भवति तथाभूतस्यैवायं प्रयोगः इति।

2.ऋलृक।
`तस्य ग्रहणं भवति त्रिभिः' इति। कथं त्रिभिर्ग्रहणं लभ्यते? यदि समुदायानुबन्धः, अवयवानुबन्धो न; अथ चावयवानुबन्धः, न तदा समुदायानुबन्ध इत्येकनैव ग्रहणं स्यात् ? नैष दोष; प्रतिज्ञया त्वनुबन्धानां व्यवहारः। प्रतिज्ञा तु
पौरुषेयी, पुरुषश्चोभयत्र प्रतिज्ञानं कुर्वन्न विरमति; विरोधाभावात्। न हि समुदायानुबन्धता अवयवानुबन्धप्रतिज्ञया विरुध्यते, इतरया न चेतरेति। तस्माद्युक्तमुक्तम्-
त्रिभिर्ग्रहणं भवतीति। एवं सर्वत्र योजनीयम्।
इह शास्त्रे वर्णानुमुपदेशः प्रयोजनवशात्। लृकारोपदेशस्य न किञ्चित् प्रयोजनं सम्भवतीत्यभिप्रायेणाह- `अकारादयो वर्णाः' इति। प्रयुज्यते इति प्रयोगः= धात्वादिः; अनन्यत्रभावो विषयार्थः, प्रचुरः प्रभूतः प्रयोगो विषयो येषामिति
बहुव्रीहिः। अथ वा, प्रयुक्तिः= प्रयोगः उच्चारणम्, तस्य विषय इति षष्ठीसमासः। तस्य प्रचुरशब्देन बहुव्रीहिः। `तेषां सुज्ञानमुपदेशे प्रयोजनं पृच्छयत इति, अस्य वचन-
स्यावकाशनिरासार्थमुक्तम्. यदि ह्येतन्नोच्येत, लृकारस्यैव तु केवलं प्रयोजनं

प्रच्छ्यत इति, तदा स्यादस्य वचनस्यावकाशः।
`लृकारस्तु क्लृपिस्थ एव प्रयुज्यते' इति। तुशब्दोऽकारादिभ्यो विशेषार्थः। स्यादेतत्- क्लृपिसम्बन्धिनस्तस्य यान्यच्कार्याणि तदर्थमुपपेशः कर्त्तव्य इत्यत आह- `क्लुपेश्च' इत्यादि। यद्यसिद्धत्वं ततः किमित्याह- `तत्र ऋकार एव' इत्यादि। `लत्वविधानाद्यानि' इत्यादि। लत्वं विधीयते येन शास्त्रेण तल्लत्वविधानम्। करणे
ल्युट्। अथ वा-भावे विधिर्विधानम्। लत्वस्य विधानमिति षष्ठीसमासः। `ततदः पराणि'
इत्यादि। एतेन लत्वस्य तेषु सिद्धत्वं दर्शयति। पूर्वत्र हि परमसिद्धम्, न तु
परस्मिन् पूर्वम्। `क्लृ3प्तशिखः' इति। क्लृप्ता शिखा यस्येति बहुव्रीहिः।अत्र
`गुरोरनृतः' (8.2.86) इत्यादिना प्लुतो विधीयते। स च `अचश्च' (2.1.88)
इत्येवं स्थानिनमुपस्थापयति। लृकारस्याक्ष्वनुपदेशादसत्यच्त्वे स न स्यात्। `प
प्रक्लृप्तः' इति। अत्र `निपाता आद्युदात्ताः' (फि.सू. 4.80), `उपसर्गाश्चा-
भिवर्जम्' (फि.सू.4.81) इति प्रशब्दाकार उदात्तो भवति। लृकारोऽपि धातुस्वरेण
उदात्त एव। निष्ठाप्रत्ययस्वरे कृते `अनुदात्तं पदमेकवर्जम्' (6.1.158) इति
पश्चात् सोऽनुदात्तो भवति। `कुगतिप्रादयः' (2.2.18) इति समासे कृते समासान्तरोदात्तत्वे प्रसक्ते `कतिरनन्तरः' (6.2.49) इति पूर्वपदप्रकृतिभावेन प्रशबद् एवोदात्तः, तस्मात् परस्य लृकास्य `उदात्तादनुदात्तस्य स्वरितः' (8.4.66) इति स्वरितत्वं विधीयते, तदसत्यचत्वे न स्यात्; तस्याज्धर्मत्वात्।
`क्लृप्तः' क्लृप्तवान्' इति।
`अनचि च' (8.4.47) इति अच उत्तरस्य यरो द्वर्वचनं विधीयते, तदप्यनच्त्वे न स्यात्
। यदुक्तम् `क्लृपिस्थ एव प्रयुज्यते' इति, तद्विघटयन् प्रयोजनान्तरं दर्शयितुमाह- `यच्च' इत्यादि साधुशब्दोच्चारणशक्तेरन्या शक्तिः अशक्तिः, ततो जातम्-अशक्तिजम्। `तदनुकरणस्यापि साधुत्वमिष्यते' इति। अर्थभेदेन शब्दान्तरत्वात्, शिष्यप्रयुक्तत्वाच्च, तदन्यसाधुशब्दवत्। ननु

चानुकार्यस्यासाधुत्वादनुकरणस्यासाधुत्वेन भाव्यम् `प्रकृतिवदनुकरणं भवति' इति वचनात्, नैतदस्ति; शास्त्रीया हि तत्र प्रकृतिराश्रीयते। प्रकृतिवदिति च शास्त्रनिबन्धनमेव कार्यमतिदिश्यते। न चाशक्तिजमसाधुशब्दरूपं
शास्त्रीया प्रकृतिः, नाप्यपशब्दत्वं शास्त्रनिबन्धनं कार्यम्। न हि शक्यं व्याकरणेनाप्यपशब्दत्वमाख्यातुम्, तस्य साधुशब्दसंस्कारायैव प्रवृत्तत्वात्। तस्माद-
पशब्दसयाप्यनुकरणं साध्वेव। तत्र तत्स्थस्यापि लृकारस्याच्कार्याणि न स्युः, यद्य7ु तस्योपदेशो न स्यात्। `कुमार्य्लृतकः'इति। आत्राच्त्वे सति
लृकारस्य तत्र परतो यणादेशो भयति। ननु च `इको यणचि' (6.1.77) इत्यत्र संख्यातानुपदेशोऽपि लृकारोपदेशस्य
प्रयोजनमुपपद्यत एव। असति लृकारोपदेशे तस्य युक्तं प्रयोजनम् ? न चैतदस्ति; मा भूत्संख्यातानुदेशः, असत्यपि तस्मिन् `स्थानेऽन्तरतमः'(1.1.50) इति परिभाषया व्यवस्था
भविष्यति। इत्संज्ञा तर्ह्यपरं पर्योजनम्, उपदेशे ह्यसति `गम्लृ सृप्लृ गतौ' (धा.पा.982,983) इत्यादिषु `उपदेशेऽजनुनासिकः' (1.3.2) इतीत्संज्ञा न स्यात्। तस्यां
चासत्यां `पुषादिद्युताद्यलृदितः परस्मैपदेषु' (3.1.55) इति अङ् न स्यात्, नैतदस्ति; असत्यप्युपदेशे अस्मादेव लृदितो धातोरङ्गविधानादित्संज्ञा विधास्यते इति नाक्षु
प्रयोजनमुपदेशस्य। तस्मात् पूर्वोक्तान्येव प्रयोजनानि। तानि च ऋकारलृकारयोः सवर्ण-
संज्ञा वक्तव्येत्येतदनाश्रित्योक्तानि। अत्र ह्याश्रिते सत्यस्त्यपि लृकारोपदेशे `
अणुदित्सवर्णस्य च' (1.1.69) इति ऋकारेण गृह्यमाणे लृकारस्य ग्रहणादेव सिध्यन्ति।

3. एओङ्।

`पूर्वाश्च' नोक्तम्, पूर्वेरस्य ग्रहणासम्भवात्। अथ `षिद्भिदादिभ्योऽङ्' (3.3.104) इत्यत्राकारेणास्य कस्माद्ग्रहणं न भवति? तत्र केचिदाहुः-`आदिरन्त्येन सहेता' (1.1.71) इत्यत्र `अणुदित्सवर्णस्य चाप्रत्ययः' (1.1.69) इत्यतोऽप्रत्यय-
ग्रहणमनुवर्त्तते, तेनायमर्थः सम्पद्यते- आदिरन्त्येन ग्राहको भवति, न चेत् प
प्रत्ययो भवतीति। प्रत्ययश्चायम्, तेन ग्राहको न भवति। एवञ्च `सुप्तिङन्तं पदम्' (1.4.14) इत्यावावपि प्रत्ययो ग्राहको न स्यात्। तस्मादनभिधानादिह प्रत्याहारग्रहणं न भवतीति वेदितव्यम्। अभिधानलक्षणा हि कृत्तद्धितसमासा भवन्ति। न च `षिद्भिदादि-
भ्योऽङ्' (3.3.104) इति अकारादिप्रत्ययोत्पत्तौ विवक्षितार्थाभिधानं भवति। इह
तर्हि `शास इदङ्हलोः' (6.4.34)`ऋदृशोऽङि गुणः'(7.4.16) इति चाकारेण
प्रत्याहारग्रहणं कस्मान्न भवति? चिण्सदृशस्य चङसदृशस्य चाङो ग्रहणात्। `शास इदङ-
हलोः' इत्यत्र हि `भञ्जेश्च चिणि'(6.4.33) इत्यनुवर्तते। `ऋदृशोऽङि गुणः' 97.4.16)इत्यत्रापि `णौ चङ्युपषाया ह्रस्वः' (7.4.1)। अतो मण्डुकप्लुतिन्यायेन चङग्रहणेन
समानाधिकरणेनाङ विशेष्यते-चङ्यङीतीति, न चाङः चङभवति; अतिविलक्षणत्वात्। तत्र
सामर्थ्यादिवार्थो गम्यते। परपदार्थेषु हि प्रयुज्यमानाः शब्दा अन्तरेणापि इवशब्द-
प्रयोगमिवशब्दार्थ गमयन्ति, यथा-अग्निर्माणवकः, गौर्वाहीकः इति।तेनायमर्थो भवति-
चङीवाङीति, चङसदृशोऽङित्यर्थः। कश्च चङसदृशोऽङ ? यश्च्लेः स्थाने विहितः। तथा च
च्लिस्थानिकस्यैवाङो ग्रहणं सम्पद्यते, न तु प्रत्याहारस्य। एवं `शास इदङहलोः'(6.4.34)इत्यत्रापि च्लिग्रहणेनाङि विशेष्यमाणे च्लिस्थानिकस्यैवाङो ग्रहणं वेदितव्यम्। इह तर्हि `सनि च' (2.4.47) `इङश्च'(2.4.48) इति,`परिमाणाख्यायां
सर्वेभ्यः' (3.3.20) `इङश्च' (3.3.21) इति च कस्मादिकारेण प्रत्याहारग्रहणं न
भवति ? पूर्वत्र तावन्न भवति, `इको झल्' (1.2.9) इति कित्त्वविधानात्। प्रत्याहारे ह्येतस्मिन् सनि गम्यादेशविधानादिगन्तत्वाभावे गुणस्याप्राप्त्या कित्त्वविधानमन-
र्थकं स्यात्। पूर्वत्र तावन्न भवति, यदि हि स्यात्इक इति ककारेणैव प्रत्याहारं
कुर्यात्। न ह्यङन्ताद्धातोः परस्य सनः सम्भवोऽस्ति; यतः प्रत्याहारग्रहणं ङकारेणार्थवद्भवति। परत्रापि न भवति; वैयर्थ्यप्रसङ्गात्। तथा हि इकारान्तेभ्यः `एरच्'
(3.3.56) इत्यचा भवितव्यम्, उकारन्तेभ्योऽपि `ऋदोरप्'(3.3.21)इत्यपा।
लृकारान्ता न सन्त्येव। एजन्तानां प्रागेव प्रत्ययोत्पत्तेः `आदेच उपदेशेऽशिति(6.1.45)इत्यात्त्वेन भवितव्यम्, अतस्तेऽपि प्रत्ययविधानकाले न सन्त्येवेति। ऋकार एक
एवावशिष्यते, ततो यदि घञ् विधित्सितः,अपार्थकं प्रत्याहारग्रहणं स्यात्, उरित्येव
ब्रूयात्। `क्रीङजीनां णौ' (6.1.48) इत्यत्रापि क्रिणातिजयत्योः पृथगुपादानादिकरेण

ग्रहणं न भवति। इकारान्तानां मध्ये तयोरेव यता स्यादिति नियमार्थं पृथगुपादानमिति
चेत् न; एवमपि ककारेणैव प्रत्याहारं कुर्यात्, एजन्तानामात्त्वस्य सामान्यलक्षणेनैव सिद्धत्वात्। `इङ्धार्य्योः शत्रकृच्छ्रिणि' (3.2.130) इत्यात्रापि धारयतिना धातुना साहचर्यात् `इङ' इत धातोर्ग्रहणम्, न प्रत्याहारस्येति वेदितव्यम्।

4.ऐऔच्।
इह `आदिरन्त्येन सहेता' (1.1.71) इत्यनेन सूत्रेणाकारादीनामजित्येषा
संज्ञा विधीयते। सा च यथा इकारादीनां भवति, तथा णकारादीनामप्यनुबद्धानां स्यात्; तेषामपि तत्रोपदेशात्। ततश्च तया प्रदेशान्तरे `इको यणचि' (6.1.77) इत्येवमादौ तेषु
प्रातिपदिकेषु यथा दध्यत्रेत्यादौ यणादेशो भवति, तथा दधि णकारीयतीत्यादावपि
स्यादित्यभिप्रायेणाह- `प्रत्याहारे' इत्यादि। कथमज्ग्रहणेषु नेति कार्यमिति शेषः। `अचः' इत्यस्याः संज्ञायाः प्रदेशवाक्येषु ग्रहणानि उच्चारणानि अज्ग्रहणानि। तेषु
सत्सु णकारादीनां कथमच्कार्यं न भवेत्। भवेदेवेत्यर्थः। `आचारात्' इति। आचरणमाचारः=आचार्यप्रृत्तिः, ततो ज्ञापकान्न भवति। यदयम् `उणादयो बहुपलम्' (3.3.1),
`तृषिमृषिकृशेः काश्यपस्य' (1.2.25), `ङमोह्रस्वादचि ङमुण् नित्यम्' (8.3.32),
`ङसिङसोश्च' (6.1.110) इति णकारादिषु परतो यणादेशं न करोति, ततो ज्ञापयति
`सत्यामप्यच्संज्ञायामच्कार्याणि न भवन्ति' इति। अथ वा - `अजित्येषैव संज्ञैषां न
भवति' इत्येषोऽर्थोऽनया आचार्यप्रवृत्त्या ज्ञाप्यते।यदि हि संज्ञा स्यात् आचार्यस्तेष्वच्कार्याणि कुर्यात्। एवं ज्ञापकेन संज्ञाभावं प्रतिपाद्य, इदानीं न्यायेन प्रतिपादयितुमाह- `अप्रधानत्वात्' इति। अणित्येवमादिकाः संज्ञाः प्रणेतुं तद्रूपप्रतिपादनाय अनुबन्धा उच्चार्यन्ते। ततश्च
परार्थमुपादीयमानत्वादप्रधान्यमनुभवन्ति।
इतरे तु स्वार्थमुपादीयन्त इति तेषां प्राधान्यम्। तेन तेषामेवाजिति एषा संज्ञा
भवति, नानुबन्धानाम्। प्रधानाप्रधानसन्निधौ हि प्रधानमेव कार्येण सम्बन्धमनुभवति,
नेतरत्। तथा चाह भाष्यकारः- `प्रधाने कार्यसम्प्रत्ययात् सिद्धम्' इति। यद्येवम्, अकारस्याप्येषा संज्ञा न स्यात्, संज्ञाप्रतिपादने तस्याप्यङ्गभावोऽस्त्येव?
`स्वस्य च रूपस्य' इत्यनुवृत्तिसामर्थ्यात् तस्य भवतीत्यदोषः। एतेनानन्तरोक्तेन
कारणद्वयेन सा न भविष्यतीति प्रतिपादयितुमाह- `लोपश्च' इत्यादि। बलवानेव बलवत्तरः, स्वार्थे एव तरप्; `अल्पाच्तरम्' (2.2.34)इति यथा। अनुबन्धा हि इत्संज्ञकाः, तेन
तेषामच्संज्ञायाः प्रागेव `तस्य लोपः' (1.3.9)इति लोपेन भवितव्यम्; तस्य
बलवत्त्वात्। तदसतां तेषां कुतः संज्ञा? तस्याञ्चासत्यां कुतोऽज्ग्रहणेष्वच्कार्य-
स्य सम्भवः? बलवत्त्वं तु लोपस्य परत्वान्नित्यत्वाच्च। संज्ञाशास्त्राद्धि लोप-
शास्त्रं परम्, अतस्तस्यापि परत्वम्। कृताकृतप्रसङ्गत्वान्नित्यत्वम्। कृतायामपि
संज्ञायां लोपेन भवितव्यम्, अकृतायामपि। न तु लोपे कृते संज्ञा भवति, संज्ञिनाम-
सत्त्वात्। यद्येवम्, यथा अजन्तः पतिनां णकारादीनामनुबन्धानां प्रथमं लोपो भवति तथा चकारस्यापि स्यात्, ततश्चाजिति संज्ञा न निष्पद्यते?
वचनसामर्थ्यात् तस्य प्राग्लोपो न भविष्यति। लुप्तेऽपि वा तस्मिन् भूतपूर्वेण तेन सहितः अकारः संज्ञा भविष्यति। अजन्तः पतिनां तु लुप्तानां णकारादीनां नार्हित संज्ञा भवितुम्; इकारादिषु
सावकाशत्वात्।
इहैते अकारादयो वर्णा अनेकावयवा इष्यन्ते `तस्यादित उदात्तमर्धह्रस्वम्' (12.32) `एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ' (8.2.107)इति वचनात्। सन्ति च केषाञ्चित् केचिदवयवा वर्णान्तरसरूपाः, तद्यथा-ऋकारे रेषः लृकारे
लकारः,एकारे च ऐकारे चाकाररेकारौ, ओकारे च औकारे च अकारोकारौ। दीर्घेष्वाकारादिषु
ह्रस्वा अकारादयः। तत्र य एते ऋकारादिवर्णानामवयवास्ते किं वर्णग्रहणेन गृह्येरनम्?न वा? तत्र पूर्वस्मिन् कल्पे-अग्ने इह, वायो उदकमित्यकः सवर्णे दीर्घत्वं
प्राप्नोति, प्रणीय, आलूयेति ह्रस्वाश्रयस्तुक्। एवमादयोऽन्त्येऽप्यचस्मिन् पक्षे दोषाः प्रसजन्ति, ते च भाष्यादवधार्याः। इतरत्र तु नुडविधिलादेशविनामेषु ऋकारग्रहणं कर्त्तव्यम्। नुडविधौ तावत् `ऋधु वृद्धौ' (धा.पा.1245)लिट्, अनृधतुः आनुधुरित्यत्र ऋकारे रेफस्य हल्ग्रहणेनाग्रहणात्
द्विहल्त्वाभावे`तस्मान्नुड द्विहलः' (7.4.71) इति नुड् न प्राप्नोति;लादेशविधौ-क्लृप्तः क्लृप्तवानिति रेफस्य `कृपो रो लः' (8.2.18) इति लत्वं न सिध्यति;विनामविधौ-मातृणाम्, पितृणामिति णत्वं न

स्यादित्यत आह- `वर्णेषु' इत्यादि। वर्णेषु ऋकारादिषु । `वर्णैकदेशाः' इति। रेफादय इति। वर्णात्मभूतत्वज्ञापनार्थमेकदेशा इत्युक्तम्। एतदुक्तं भवति- वर्णानामात्मभूता एकदेशा वर्णैकदेशा इति। यदि हि `एकदेशाः' इत्येतावदुच्येत, ततः कस्यचिदभ्रान्तिः
स्यात्- `अर्थान्तरभूता एवैते एकदेशाः' इति। वर्णैकदेशास्तूर्य्यादयोऽपि सन्तीति
तद्वयवच्छेदार्थमाह-`वर्णान्तरसमानाकृतयः' इति। वर्णान्तरसमानाकृतयः इति। वर्णान्तरवत् समानाकृतिर्येषां ते वर्णान्तरसमानाकृतयोऽवयवाः। ततोऽन्यैर्वर्णैरनवयवभूतै-
स्तुल्याकृतय इत्यर्थः। `तेषु' इति। वर्णैकदेशेषु । `तत्कार्यम्' इति। वर्णान्तर-
कार्य्यम्- अकः सवर्णे दीर्घत्वादि। किं पुनः कारणं न भवतीत्याह- `तच्छायानुकारिणो हि'इत्यादि। तच्छाया तदाकारः।
वर्णान्तराणामकारादीनामाकारमात्रम्। तेऽनुकुर्वन्ति; तत्तुल्यरूपत्वात्, न तु त एव। न हि तदाकारानुकारित्वमात्रेणैव तत्त्वं भवति। तथा हि गवि गवयावयवानुकारिणोऽवयवाः सन्ति, न च तेषां तत्स्वभावता। किं पुनः कारणं ते त एव न भवन्तीत्याह- `पृथक्' इत्यादि। प्रयत्नः प्रयतनं स्थानकरणव्यापारः। वर्णान्तरहेतोः प्रयत्नात्पृथगन्येन प्रकारेण यं निर्वर्त्त्यं निष्पाद्यं वर्णमाचार्या इच्छन्ति, तदेते वर्णा अवयवाः। यदि वर्णाः स्युः, प्रयत्नान्तरनिर्वर्त्त्याः स्युः, न चैवम्। तथा हि- समुदायार्थो यः प्रयत्नः तेनैव ते निष्पाद्यन्ते। तदेवम्, अग्रहणक-
पक्षमाश्रयतैव ग्रहणकपक्षभाविनो ये दोषास्तेषां प्रसङ्गः प्रतिक्षितः। ननु च ग्रहण-
पक्षोऽपि भाष्ये व्यवस्थापितः; तदनुषङ्गिणां दोषाणां परिहारात्, तत्कस्मात् स
परित्यक्तः ? बहुप्रतिविधेयत्वात्। अग्रहणकपक्षे त्वल्पं प्रतिविधेयम्। अतः स एव
वृत्तिकारेणाश्रितः।
यदि तर्हि गृह्यन्ते, नुडादिविधिषु ऋकारग्रहणं कर्त्तव्यतया स्थितमेवेत्यत आह-`नुड्विधिलादेशविनामेषु' इत्यादि। नुडाविधिषु यच्चोद्यमापतति ऋकारविषये तस्य
प्रतिविधानं कर्त्तव्यमित्यर्थः। तत्र नुडाविधौ तावत्-ऋकारस्य रेफो हल्ग्रहणेन
गृह्यते। तेनात्रापि द्विहलोऽङ्गस्य नुड्भवति- `आनुधतुः आनृधुः' इति। एतत्
स्वयमेव वृत्तिकारेण प्रतिपदानं कृतम्। अथ किमयमृकारस्थो रेफो वर्णात्मकः ? नेत्याह। इदानीमेव ह्युक्तम्- `तच्छायानुकारिणो हि ते, न पुनस्त एव'इति। ये तर्हि
हकारादयो वर्णा अक्षरसमाम्नाये उपदिष्टास्ते किं वर्णआत्मकाः ? नेत्याह। तथा हि `हयवरट्' (मा.सू.5) इत्यादौ वक्ष्यति- `इत्येतान् वर्णानुपदिश्य' इति। अथ कथमिदानीं
वर्णात्मनां हलां ग्रहणेन ऋकारस्थस्यापि अवर्णात्मनो रेफस्य ग्रहणं भवति ? द्वि-
हल्ग्रहणसामर्थ्यादित्यभिप्रायः। तत्र हि `तस्मान्नुड्' इत्येतावदेव वक्तव्यम्। न
चैवमुच्यमा4ने आटतुः, आटुरित्यादावपि प्रसङ्गो भवति; `अश्नोतेश्च' (7.4.72) इत्यस्यनियमार्थत्वात्- अद्विहलो यदि भवति तदश्नोतेरेव,नान्यस्येति।
अश्नातिनिवृत्त्यर्थं तदिति चेत् ?वार्त्तमेतत। यदि ह्येतावत् प्रयोजनं स्यात्, `नाश्नः' इत्येव
प्रतिषेधं कुर्यात्।तदेवमन्तरेणापि द्विहल्ग्रहणं सिद्धे यद्द्विहल्ग्रहणं करोति तस्यैतत् प्रयोजनम्-द्विहल्छायानुकारिणोहि यथा स्यादिति।यस्याप्येको मुख्यो हल,
अपरोऽवयवः तत्समानाकृतित्वादुपचारेण हल्व्यपदेशर्हः,तस्यापि यथा स्यादित्येवमर्थः। एतच्च कथं लभ्यते? यदि हलित्येषा श्रुतिस्तत्र
हल्छायानुकारिण्यापि ऋकारस्थायां रेफव्यक्तौ वर्त्तते, नान्यथा। तस्माद्द्विहल्ग्रहणेन ऋकारस्थो रेफोऽपि गृह्यते; अन्यथा द्विहल्ग्रहणमनर्थकं स्यात्।
`रेफः' इति परप्रसिद्ध्या तत्रोक्तम्। वर्णग्रहणवादिनां हि ऋकारभागोऽपि `रेफः' इति प्रसिद्धः। सादृश्यादेवमुक्तम्। भवति हि
सादृश्यादतस्मिन्नपि तद्वयपदेश- यथा- अग्निर्माणवक इति। अथ वा `रादिफः'(वा.321)
इत्यत्र `वर्णात्कारः' (वा.320) इत्यतो `वर्णात्' इति नाणुवर्त्तते, तेनावर्णात्मकादपि रादिफो भवतति, बहुलवचनाद्वा। अत एव लृकारस्थाल्लकारसरूपादवयवाद्
अवर्णात्मनोऽपि कारप्रत्ययो भवतीति वेदितव्यम्। लादेशविधावपि -`र' इति सामान्यमुपादीयते।. तेन यः केवलो रेफः यश्च ऋकारस्थः- तयोर्द्वयोरपि ग्रहणम्। `ल' इत्यपि
सामान्यमेव। ततोऽयं केवलस्य रेफस्य स्थाने केवल एव लकार आदेशो विधीयते।
ऋकाररस्याप्येकदेशविकारद्वारेण लृकारः। चथा च `लुटि च क्लृपः' (1.3.93) इत्येवमादयोनिर्देशा उपपद्यन्त इति। एतत् `कृपो रो लः'
(8.2.18)इत्यत्र स्वयमेव वृत्तिकृता प्रतिपादितम्`र इति(1) सामान्यमुपादीयते' (काशिका. 8.2.18) इति। वर्णत्वावर्णत्वकृतं
भेदमुत्सृज्य यत् सामान्यवर्णात्मिकायां च रेफव्यक्तौ वर्त्तते यतस्तयोर्वर्णत्वा-
वर्णत्वभेदभिन्नयोरपि `र' इति शब्दप्रत्यौ अभिन्नौ भवतः, तावुपादीयेते; न तु

वर्णात्मिकैव रेफव्यक्तिः। `तेन' इति। सामान्योपादानेन द्वयोरपि ग्रहणं भवतीति।

तस्य सामान्यस्य द्वयोरपि सद्भावात्। `ल इत्यपि सामान्यमेव' इति। `उपादीयते' इत्यपेक्षते। अत्रापि यश्च केवलो लकारः, यश्च लृकारस्थः तयोर्द्वयोरपि ग्रहणमित्येतद्वय-

क्तव्यं स्यात्। पूर्वानुसारेण गम्यमानत्वान्नोक्तम्। `ततोऽयम्'

इत्यादि। यत एवं द्वयोरपि रेफलकारयोर्ग्रहणम्, तस्मात् केवलस्य रेफस्य स्थाने

लकारोऽयमादेशो विधीयते। अन्तरतमत्वादृकारस्यापि लृकारः। ननु च सत्यपि द्वयोरपि ग्रहणे ऋकारस्य स्थाने लृकारो भवतीत्येतत् कुतो लभ्यते? न हि ऋकारस्थो रेफ ऋकारो भवति, किं तर्हि ? तदवयवः। नापि लृकारस्थो लकार ऋकारो भवति, किं तर्हि? तदवयवः। तत्र

द्वयोरपि ग्रहणे सति ऋकारस्थस्यापि रेफस्य लृकारस्थो लकारो वर्णैकदेशतयान्तरतमो

भवतीत्येतस्य चोद्यस्यापाकरणार्थमेकदेशविकारद्वारेणेत्युक्तम्।तदेकदेश ऋकारस्यावयवो रेफसस्तस्य विकार लृकारावयवो लकारः। अथ वा एकदेश-। अथ वा एकदेशलृकारस्थो लकारः, स एव विकारः। ऋकारस्थस्य रेफस्य स एव एकदेशविकारः। द्वारं मुखम्, उपाय इति यावत्। तेन समस्तस्यैवऋकारस्य स्थाने समस्त एव लृकार आदेशो विधीयते। यदि हि ऋकारलृकाराभ्यां तत्स्थयोश्च रेफलकारयोः पृथग्भावः सम्भवेत्, तदा ऋकाररैकदेशस्य रेफस्य केवलस्य

लृकारैकदेशो लकारः केवल शक्यते विधातुम्। न च तयोस्ततः पृथग्भाव सम्भवति। तस्माद्य-

थोक्तेन प्रकारेण ऋकारस्य लृकारादेशो विधीयते। अनन्तरोक्तस्यार्थस्य दृढीकरणाय `तथा च' इत्यादेरुपन्यासः। यत एवमेकदेशद्वारेण ऋकारस्य स्थाने लृकार आदेशो विधीयते।

एवञ्च सति `लुटि च क्लृपः' (1.3.93) इत्येवमादयो निर्देशा उपपद्यन्ते, नान्यथा। आदिशब्देन `ऋदुपुपधाच्चाक्लृपिचृतेः' (3.1.110) `तासि च क्लृपः' (7.2.60) इत्येतयोर्निर्देशयोर्ग्रहणम्। विनामविधावपि `ऋवर्णाच्चेति वक्तव्यम्' (वा.946) इत्युक्त्वा

"रश्रुतिसामान्यनिर्देशाद्वा सिद्धम्। अवर्णभक्त्या च व्यवधाने णत्वं भवतीति

क्षुभ्नादिषु नृनमनतृप्नोति(1) ग्रहणं णत्वप्रतिषेधार्थं द्रष्टव्यम्। अथ वा ऋवर्णादपि णत्वं भवतीत्येदेव (2) तेन ज्ञाप्यते" (काशिका.8.4.1) इति वृत्तिकृता स्वयमेव

प्रतिविहितम्।`रश्रुतिसामान्यनिर्देशात् सिद्धम्'इति। `र' इति श्रुतिः

उपलब्धिर्यस्यस रश्रुतिः रेफः। तस्य केवलस्य ऋकारस्थस्य च वर्णत्वावर्णत्वकृतभेदं

परित्यज्य यत् सामान्यं रेफमात्रं तदिह निर्दिश्यते, न तु वर्णत्मिकैव रेफव्यक्तिः। तेन सिद्धं तिसृणाम्, चतसृणाम्, मातृणाम्, पितृणाम् इत्यादावपि णत्वम्; ऋकारेऽपि तस्य रश्रुतिसामान्यस्य विद्यमानत्वात्। स्यादेतत्- ऋकारेत्रयो

वर्णावयवाः, तन्मध्ये रेपोऽर्धमात्रात्मा, तत्र रश्रुतिसामान्यस्य निर्देशेनैव

सिध्यति। यासौ रेफात् पराऽवर्णभक्तिस्तस्या व्यवधानादित्यस्य चोद्यस्य परिहारायो-

त्तरो ज्ञापकग्रन्थः- यदयं क्षुभ्नादिषु णत्वप्रतिषेधाय नृनमनशब्दं तृप्तनोति-

शब्दञ्च पठति, तेनैतज्ज्ञाप्यते `अवर्णभागव्यवधानेऽपि णत्वं भवति' इति; अन्यथा हि तत्र त्रयोः पाठोऽनर्थकः स्यात्,प्राप्त्यभावात्। प्राप्तिपूर्वकत्वाच्च प्रतिषेधानाम्। यद्यपि वर्णात्मिकैव रेफव्यक्तिर्निर्दिश्यते, तथापि सिद्धमिति दर्शयितुमाह- `अथ वा' इत्यादि। पूर्वसूत्रोपात्ताद् रश्रुतिसामान्यचनिर्देशात् परयाऽवर्णभक्त्या व्यवहितादपि णत्वं भवतीति ज्ञापितम्। इदानीं तु सूत्रानुपात्तदृकारदव्यवहितादेवे-

त्येष विशेषः।

अपरे तु- सर्वाण्येतानि प्रतिविधानानि वर्णैकदेशग्रहणकपक्षमाश्रित्य विहितानीत्याचक्षते, एतच्चासम्यक्; यं हि पक्षमाश्रित्य `नुड्विधिलादेशविनामेषु ऋकारे प्रतिविधातव्यम्' (वा.1)इत्युक्तं तत्रैव प्रतिविधातुं युक्तम्; अन्यथा ह्यग्रहणकपक्षमभ्युपेत्य ग्रहणकपक्षेऽपि प्रतिविधानं कुर्वता वृत्तिकारेणाकौशलमेव केवलमा-मात्मनः प्रकटितं स्यात्।।

5. हयवरट्।

`तस्य ग्रहणं भवत्येकेन `शश्छोऽटि'इत्यकारेण इति। अत्र `शश्छोऽटि'

(8.4.63) इत्येतत् प्रदेशवाक्योपलक्षणं द्रष्टव्यम्। एवंजातीयकेषु निर्देशेष्वकारेण ग्रहणं भवति, न तु वर्णान्तरेणेत्यत्रायमर्थोऽभिप्रेतः। न त्वत्रैव सूत्रे अकारेण ग्रहणं भवतीति, `अट्कुप्वाहनुम्व्यवायेऽपि' (8.4.2) Flf दीर्घादटि' (8.3.9)

इत्यत्राप्यकारेण ग्हणस्येष्टत्वात्। अथ `लुङलङलृङक्ष्वड्डुदात्तः'(6.4.71)

इत्यत्राप्यकारेण ग्रहणं कस्मान्न भवति? `प्राक्सितादड्व्यवायेऽपि' (7.3.63) इति वचनात्। प्रत्याहारे ह्येतस्मिन्नकारादीनां योऽन्यमतस्ते

नालोऽन्त्यपरिभाषयाङ्गान्तरस्य भवितव्यम्; प्रत्येकमट्संज्ञकत्वात्, प्रत्येकमेवाकारादीनामादेशत्वात्।

तथा चान्त्यग्रहणेन ग्रहणादड्व्यवधानं नोपपद्यते। अथ प्रत्येकमप्यसंज्ञकत्वे समस्तानामप्यादेशभावः प्रकल्प्येत, एवमनेकाल्त्वात् सर्वादेशः स्यात्, तथा च

स्थान्यपि
सकारो न स्यादिति कस्य केन व्यवधानान्मूर्धन्यो बवेदभ्यषुणोदित्यत्र ? अथ `आर्धधातुकस्येड् वलादेः' (7.2.35) इत्यत्रेकारेणास्य ग्रहणं कस्मान्न भवति ? `तत्र विदित
इति च' (5.1.43) इति निर्देशात्। प्रत्याहारे ह्येतस्मिन् न `आदेः परस्य ' (1.1.54) इति इकारादीनामन्यतमस्तकारस्यादेशः स्यात्, तथा च विदितमिति रूपं नोपपद्यते। अथ
`दीधीवेवीटाम्' (1.1.54) इत्यत्रापीकारेण ग्रहणं कस्मान्न भवति? `जयति' `सम्भवति'
`अवहरति'इत्येवमादिनिर्देशात्। प्रत्याहारे ह्येतस्मिन् गुणप्रतिषेधादेवमादयो
निर्देशा न सम्भवेयुः।
यकारात्परस्य रेफस्योपदेशे सति यो दोषस्तमुद्भावयितुकाम आह- `अयम्' इत्यादि परोपदेशस्तु वल्यन्तर्भावात् `जीवेरदानुक्' (द..1.163) जीरदानुः,
`गोधायाः ढ्रक्' (4.1.129) गौधेर इत्यत्र `लोपो व्योर्वलि' (6.1.66) इति व्योर्लोपो यथा स्यात्, रल्ग्रहणे च वकारस्य ग्रहणं मा भूदित्येवमर्थश्च ।
यदि हि वकारात् पूर्वो रेफ
उपदिश्येत्, `रलो व्युपधाद्धलादेः संश्च' (1.2.26) इति देवित्वा विदेविषतीत्यत्र
कित्वं वा स्यात्। ननु च क्रियमाणेऽपि रस्य यकारात् परोपदेशे प्राप्नोत्येव
वकारस्य रल्ग्रहणेन ग्रहणम्, जशामपि मध्ये तस्योपदेशात् ? नैतदस्ति; उभयोर्भिन्नगुणनिष्पाद्यत्वात् भेदस्य सिद्धत्वात्। यथोक्तम्--
`(1)पृथक्प्रयत्ननिर्वर्त्यवर्णमि-
च्छन्ति' इति। अन्तःस्थत्वेनेषत्स्पृष्टकरणत्वादितरस्य च स्पर्शत्वेन स्पृष्टकरण-
त्वात्। अयञ्च दन्त्योष्ठ्यो वकारः।
यस्तु `जबगडदश्' (मा.सू.10) इष्यते, स ओष्ठयो वेदितव्यः। ननु च वकारेण
व्यवधानान्नयं यकारात् परः, किं तर्हि ? वकारात् पर इति। तत् किमुच्यते यकारात् पर
इति? व्यवधानेऽपि परशब्दो वर्त्तते, यथा-बाल्यात् परं वृद्धत्वमित्यदोषः। अत्र यौवनेन व्यवहितेऽपि वृद्धभावे परशब्दस्य वृत्तिः. यदि यकारात् पर उपदिश्यते ततः
किमित्याह- `तस्य यर्ग्रहणेन' इत्यादि। यरित्यस्याः संज्ञाया ग्रहणेनोच्चारणेन, तथा ययितत्यस्याः संज्ञाया ग्रहणेनोच्चारणेनेत्यर्थ-। अथ वा- यरां संज्ञानां ग्रहणेनोपदानन , ययां संज्ञिनां ग्रहणेनोपादानेनेत्यर्थः। `ग्रहणे सति' इति। उपादाने सति।
तद्ग्रहणेन तु तद्ग्रहणम्, तस्यापि तत्संज्ञकत्वात्; तदन्तर्भावाच्च।स्वर्नयती-
त्यत्र `ऋटुरषा मूर्धन्याः' इति तुल्यस्थानत्वाद् रेफस्य नकारे परे परसवर्णो णकारा
देशो भवति, विशेषानभिधानात्। ननु चैवं सति स्थानेऽन्तरतमपरिभाषा बाध्येत; न ह
रेफस्यान्तरतमो णकारः प्रयत्नभेदात् ? नैतदस्ति; `व्यक्तिः पदार्थः' इत्येतद्धि
दर्शनमाश्रित्य चोद्यते। तेन स्थानेऽन्तरमपरिभाषया बाधानाशङ्कनीया।
यत्र ह्यन्तरतमोऽनन्तरतमश्च विद्यते तत्र तस्या व्यापारः। न चेहान्तरतमोऽस्ति,
यस्माद्वयक्तौ पदार्थे प्रतिलक्ष्यं लक्षमं प्रवर्त्तते। आनन्त्यात् सर्वाणि लक्षणानि नोच्चार्यन्ते। तत्र यदेतद्विषयं लक्षणं तत् प्रयत्नभेदादन्तरतमेऽपि णकारे यदि न प्रवर्तते, तदा यस्य वैयर्थ्यमेव स्यात्। तस्माज्जातौ पदार्थे इयं परिभाषा
वेदितव्या,न तु द्रव्ये। `मद्रह्दो भद्रह्रदः' इति। अचो हकारादुत्तरोऽयं रेफो यर् भवतीति द्विर्वचनं प्राप्नोति, `अचो रहाभ्यां द्वे' (8.4.46) इत्यत्र `यरोऽनु-
नासिकेऽनुनासिको वा' (8.4.45) इत्यतो यरित्यनुवर्त्तते, तत्र द्विर्वचने सति द्वयोः
रेफयो श्रवणं स्यात्। `रो रि' (8.3.14) इत्येकस्य लोपो भविष्यतीति चेत्? न;
लोपे कर्त्तव्ये द्विर्वचनस्यासिद्धत्वात्। `हलो यमां यमि लोपः' (8.4.64) इत्यनेन
तर्हेयकस्य लोपो भविष्यति? सिद्धं ह्यस्मिंल्लोपे द्विर्वचनम्। एवमपि पक्षे द्वयो
रेफयोः श्रवणं प्रसज्येत। तत्र हि `झयो होऽन्यतरस्याम्'(8.4.62) इत्यतो-
ऽन्यतरस्यांग्रहणमनुवर्तते। अथापि तन्नानुवर्त्तेत ? एवमपि द्विर्वचनविधान्-
सामर्थ्याल्लोपो न भविष्यति। अन्यथा हि द्विर्वचनविधानमनकर्थकं स्यात्।
`कुण्डं रथेन' इति। `अनुस्वारस्य ययि परसवर्णः' (8.4.58) इति तदन्यस्य परसवर्णस्यासम्भवाद्रेफस्य रेफ एव परसवर्णः स्यात्। `रेफोष्णणां सवर्णा न सन्ति' इति ट
रेफस्य सवर्णो न भवतीत्येतच्च नाशङ्कनीयम्; वर्णान्तरपेक्षया तदुक्तम्,
वर्णान्तराणां यथायोगमतुल्यस्थानप्रयत्नत्वात्। रेफव्यक्तीनां तु परस्परापेक्षया सावर्ण्यमस्त्येव; तुल्यस्थानप्रयत्नत्वात्।

अन्ये तु-`यथि रेफ अनुस्वारस्य परसवर्णो णकारः स्यात्, तुल्यस्थानत्वात्'
इति वर्णयन्ति; एतच्चायुक्तम्; न हि स्थानमात्रतुल्यतया सवर्णो भवति। किं तर्हि ?
तुल्यस्थानतया, तुल्यप्रयत्नतया च। न च रेफस्य णकारतुल्यप्रयत्नः; रेफस्येषत्स्पृ-
त्वात्, णकारस्य च स्पृष्टत्वात्। एवं व्यक्तिपदार्थमाश्रित्य परेण चोदिते जाति-
पदार्थमाश्रित्य परिहारं वक्तुकाम आह- `नैष दोषः' इत्यादि। आकृताविति जाताविर्त्यथः। केषाञ्चित् जातिः पदार्थः,केषाञ्चिद् द्रव्यम्, पाणिनेस्तूभयम;
लक्ष्यानुरोधात्। तत् क्वचित् किञ्चिदाश्रीयते। तत्र जातौ पदार्थ आश्रीयमाणे जातिरेव शब्देनाभिधीयते, नान्तरीयकत्वात्तु तदाधारा व्यक्तयः प्रतीयन्ते;
जातेराधारमन्रेण प्रत्येतुमशक्य-
त्वात्। एतस्मिन् दर्शने तस्यास्तु जातेः स्थानित्वमादेशत्वं परत्वमव्यवहितत्व-
मित्यायो धर्माः शब्दसंस्कारोपयोगिनो व्यक्तिद्वारकाः। तेन `यरोऽनुनासिकेऽनुनासि-
को वा' (8.4.45) इत्येवमादिलक्षणं प्रवर्त्तमानं जातिमतीषु व्यक्तिष्वेव
प्रवर्त्तते, तत्र प्रवृत्तेर्जातौ प्रवृत्तं भवति। न च तासु व्यक्तिषु जातिं प्रति कासाञ्चिदासत्तिर्विप्रकर्षो वा; यतः क्वचिदेव प्रवर्त्तेत; न सर्वत्र; सम्बन्ध-
स्याविशिष्टत्वात्। तस्मात् तत्र प्रवर्त्तमानं यत्र वचनान्तरेण न्यायेन वा न
बाध्येत,तत्र सर्वत्रैव प्रवर्त्तते। एवञ्च प्रवृत्तं समुदाये प्रवृत्तं भवति।
`सकृत्' इति। एकवारम्, न पुनः पुनः; सकृत्प्रवृत्यैव लक्षणस्य च चरितार्थत्वात्। एतस्मिन् दर्शने `यरोऽनुनासिकेऽनुनासिको वा' (8.4.45) इत्येतल्लक्षमं कथं
प्रवर्त्तेत? किमविशेषेण सर्वेष्वेव जातिमत्सु पदार्थेषु प्रवर्त्तते ? उत विशेषेण केषुचिदेव ? यद्यविशेषेण स्यात्, स दोषस्तदवस्थ एव। अथ विशेषेण वाच्यः, तर्हि
सविशेष इत्यत आह- `यरोऽनुनासिके' इत्यादि। एतेन स्थानेऽन्तरतमपरिभाषाया
उपस्थानात् तद्वशेनान्तरतमेष्वेव प्रवर्त्तते, नान्येष्विति दर्शयति- `तदनेन'

इत्यादि। यत एवान्तरतमेष्वेव प्रवर्त्तते, तस्मादनेन लक्षणेन गकारादीनां
येऽन्तरतमाः स्थानगुणाभ्यामुभाभ्यामपि ते ङकारादयोऽनुनासिका विहिताः।`यथास्वम्'
इति। यथात्मीयमिति। ये येषामन्तरतमास्ते तेषां विहिता इत्यर्थः। `गकारादीनाम्'इति। आदिशब्देन जाकारादीनां ग्रहणम्।`ङकारादयः' इत्यत्रापि
आदिशब्देन ञकारादयोऽनुनासिका गृह्यन्ते। तत्र स्थानतो गुणतश्चान्तरतमाः। तद्यथा- गजडदबानां यथाक्रमं ङञणनमाः।
तथा हि- `अकुहविसर्जनीयाः कण्ठ्याः' इति गकारङकारयोस्तुल्यं कण्ठः स्थानम्।
`इचुयशास्तालव्याः' इति जकारञकारयोस्तालु।`ऋटुरषा मूर्द्धन्याः' इति ङकारणकारयो-
र्मूर्धा। `लुतुलसा दन्त्याः' इति दकारनकारयोर्दन्तः। `उपूपध्मानीया ओष्ठ्याः' इति बकारकमकारयोरोष्ठः। गुणस्तु सर्वेषामेषवैषां तुल्यः; `स्पृष्टं करणं स्पर्शनाम्'
इति। कादयो मावसानाः स्पर्शाः। `ये तु न स्थानतो नापि गुणतः' इति। अन्तरतमा
इत्यपेक्षते। `ते सर्वे निवर्त्तिताः' इत्यनेन वक्ष्यमाणेन सम्नब्धः। अविधानमेवैषां निवर्त्तनम्। `स्थानमात्रेण गुणमात्रेण वा' इति। तत्राप्यन्तरतमा इत्यपेक्षते।
पूर्ववच्च सम्बन्धः। तत्र नापि स्थानतो नापि गुणतोऽन्तरतमा अनुनासिकाः, ते यथा-

गजडानां यवलाः सानुनासिकाः, निरनुनासिकाश्चापि, ते तेषां स्थानगुणाभ्यामनन्तरतमा एव। सानुनासिकग्रहणं तु `यरोऽनुनासिके' (8.4.45) इत्यादौ सूत्रेऽनुनासिक्सयादेशत्वेनोपादानात्। तत्र गकारयकारयोर्यथाक्रमं कण्ठतालुस्थानत्वात् स्थानत आन्तरतम्यं
नास्ति; जकारलकारयोस्तालुदन्तस्थानत्वात्, डकारयकारयोर्यथाक्रमं कण्ठतालुस्थान-
त्वात् मूर्धदन्तोष्ठस्थानत्वात्। गुणतोऽपि तेषां नास्त्यान्तरतम्यम्; गकारादीनां स्पृष्टकरणत्वात्, यकारादीनामीषत्स्पृष्टकरणत्वात्; `ईषत्स्पृष्टं
करणमन्तःस्थानम्' इति। वचनात्। अन्तस्था यरलवाः। स्थानमात्रेणान्तरतमा अनुनासिकाः। तद्यथा- जदबानां यँलँवाँः सानुनासिकाः। अत्र जकारस्य यकारस्तुल्यस्थानः; तयोस्तालुस्थानत्वात्।
दकारस्य लकारः; तयोर्दन्तस्थानत्वात्। बकारस्य वकारः; उभयोरोष्ठस्थानत्वात्।
यदप्यन्तःस्थस्य वकारस्य `दन्ताः'- स्थानमधिकम्, तथापि यत्र तयोस्तुल्यस्थानमोष्ठः, तत्कृतमान्तरतम्यमस्त्येव, उकारौकारवत्- उकारस्य ओष्ठस्थानम्, ओकारस्य तु
कण्ठोऽपि, `ओ औ कण्ठ्योष्ठ्यौ' इति वचनात्; तथापि यत्तयोस्तुल्यं स्थानम् ओष्ठस्त-
त्कृतमान्तरतम्यं भवत्येव। यथा च तयोरेकस्य स्थानाधिक्येऽपि आन्तरतम्यम्, तथा बकारवकारयोरपि । गुणमात्रेणान्तरतमा यथा- जबजानां ङणनाः;

सर्वेषां स्पृष्टतागुणत्वात्। स्थानतस्तेषामान्तरतम्यं नास्ति; जबडानां यथाक्रमं ताल्वोष्ठमूर्धस्थानत्वात्, ङणनानान्तु कण्ठमूर्धदन्तस्थानत्वात्। `इति' इत्यादि। इतिकरणो हेतौ। यत एवं स्थान-
गुणाभ्यां येऽन्तरतमास्त एवानेन विहिताः, अन्ये तु सर्वे निवर्त्तिताः। तस्मात्
स्थानमात्रेणान्तरतमो रेफस्य णकारो न भवति। स्थानमात्रेणान्तरतमत्वञ्चोभयोर्मूर्ध-
स्थानत्वात्। गुणतस्त्वान्तरतम्यं नास्ति; स्पृष्टतादिगुणभेदाच्च। `रेफस्य यरन्त-
र्भावे सति' इति। यर्कार्यप्राप्तेरयं हेतुः। `यर्कार्यं प्राप्तम्' इति। द्विर्वचनमित्यर्थः। तद्धि यरन्तर्भावात् रेफस्य प्राप्नोति यथाऽन्येषां यराम्। `तत्'
इत्यादि। रेफस्य द्विर्वचनं प्रति निमित्तभावः साक्षाच्छिष्टः = प्रत्यक्षविहितः, `अचो रहाभ्याम्' (8.4.46) इति साक्षाद्रेफं निमित्तत्वनोपादाय द्वर्वचनविधानात्।
यर्कार्यन्तु यरन्तर्भावादनुमितम्। `प्रत्यक्षानुमितमोश्च प्रत्यक्षं बलीयः' कात.प.95) इति साक्षाद्विहितेन निमित्त साक्षाद्रेफं निमित्तत्वेनोपादाय द्विर्वचन-
विधानात्। यर्कार्यन्तु यरन्तर्भावादनुमितम्। `प्रत्यक्षानुमितमोश्च प्रत्यक्षानुमितमोश्च प्रत्यक्षं बलीयः' (कात.प.95)इति साक्षाद्विहितेन निमित्तभावेन रेफस्य
द्विर्वचनं बाध्यते; तद्यथा-ब्राह्मणा भोज्यन्ताम्, माठरकौण्डिन्यौ परिवेविष्टामितिअत्र हि साक्षाद्विहितेन परिवेषणं प्रति साधनभावेन
माटरकौण्डिन्ययोर्ब्राह्मणत्वाद्योऽनुमितो भोजनं प्रति साधनभावः स बाध्यते। यद्येवम्; दध्युदकादिषु दोषः। `इको
यणचि' (6.1.77) इत्यत्र ह्यजन्तर्भावादिको यणादेशं प्रति निमित्तभावोऽनुमीयमानः। यणादेशस्तु साक्षाच्छिष्टः; `इकः' इत साक्षादिकं कार्यिममुपादाय विधानात्। ततश्च
साक्षाच्छिष्टेन तेन निमित्तभाव इको बाध्यते। तत्र व्यक्तेः पदार्थस्याश्रितत्वा-
ददोषः। व्यक्तौ पदार्थे प्रतिलक्ष्यं लक्षणं प्रवर्त्तत इत्युक्तम्। भूदेष दोष इति लक्षममप्येकमेव, यच्चार्कुकः मर्क्क इत्यादौ चरितार्थम्। अतो यद्यपि मद्रह्रवादौ
द्विर्वचनं न विदधाति, तथापि न भवति वैयर्थ्यप्रसङ्ग इति। `न द्वरुच्यते रेफः' इति।इतिकरणेनानन्तरोक्तस्यार्थस्य द्विर्वचनाभावं प्रति हेतुभावो द्योत्पते।
`अनुस्वारस्य'इत्यादि। न केवलं `यरोऽनुनासिकेऽनुनासिको वा' (8.4.45)इत्येतदन्तरतमं सकृदेव प्रवर्त्तमानं विदधाति, अपि तु `अनुस्वारस्य ययि परसवर्णः' (8.4.
58) इत्येतदपि इति `अपि' शब्दस्यार्थः। स्यादेतत्- यद्यप्यन्तरतमं विदधाति, तथापि
भवितदव्यमेवात्र रेफेण परसवर्णेन। तस्याप्यन्तरतमत्वादित्यत आह- `न च' इत्यादि। न च रेफस्य सवर्णोऽस्तीति सम्बन्धः; किंविशिष्टो नास्ति? अनुस्वारान्तरतमः।
अनुस्वारस्य सदृशतम इत्यर्थः। इति हेतोर्न भवति कुण्डं रथेनेत्यत्र परसवर्णः। कथं
पुनरनुस्वारान्तरतमः, सवर्णो रेफस्य नास्ति? उच्यते- रेफस्य रेफ एव सवर्णः, नान्यो वर्णः। स चानुस्वारस्यान्तरतमो न भवति; स्थानभेदाद्गुणभेदाच्च। रेफस्य हि मूर्धा
स्थानम्, अनुस्वारस्य पुनः `अनुस्वारयमा नासिक्याः' इति इष्यते, नान्येषाम्। यद्यपिवर्गाणां तृतीयचतुर्था अन्तःस्था हकारानुस्वारौ च यमौ च तृतीयचतुर्थौ नासिक्याश्च
संवृतकण्ठा नादानुप्रदाना घोषवन्तश्चेति बाह्यप्रयत्नाख्येन गुणेन संवतकण्ठत्वादिना अनुस्वारान्तरतमो रेफः सवर्णः सम्भवति, तथापि न कगुणमात्रेणान्तरतममेतल्लक्षणम्
परसवर्ण विधातुमुत्सहते। यत्र स्थानतो गुणतश्चान्तरतमास्तत्रानुस्वारस्य परसवर्णाः सन्ति; शङ्कितः, कुण्ठित इत्यत्र चरितार्थत्वात्। अत्र
स्थानतोऽप्यनुस्वारस्य नासिकास्थानस्य ङणावन्तरतमौ; तयोरपि नासिकास्थानत्वात्। `ञमङणनाः स्वस्थाना नासिकास्था-नाश्च' इति वचनात्।
गुणतोऽपि; तेषां पूर्वोक्तैरनुस्वारगुणैरनुगतत्वात्,`यथा
तृतीयास्तथा पञ्चमाः' इति वचनात्। अनेन हि `वर्गाणां तृतीयचतुर्थाः' इत्यादिना
ग्रन्थेन येऽनुस्वारसाधारणा वर्गतृतीयानां गकारादीनां गुणा उक्तास्ते ङकारादीनां
निर्दिश्यन्ते। गुणमात्रेणाप्यन्तरतमं विदध्याद्रेफम्, यद्यसकृत् प्रवर्त्तते तत्। मा भूत् पुनः पुनः प्रवृत्तिरपार्थिकेति कृत्वा न चासकृत् प्रवर्त्तत इत्युक्तम्।
`उरःकेण'इत्यादि। उरः कायति, उरः पाति। `कै शब्दे'(धा.पा.916), `पा रक्षणे'
(धा.पा.1056) इत्याभ्याम् `आतोऽनुपसर्गे कः' (3.2.3) `आतो लोप इटि च'(6.4.64)
इत्याकारलोपः, उपपदसमासः, सुब्लुक्, `ससजुषो रुः' (8.2.66) तस्य `खरवसानयोर्विसर्ज-
नीयः। (8.3.15), `कुप्वोः क पौ च' (8.3.37) इति यथायोगं विसर्जनीयावुपध्मानीय-
जिह्वामूलीयौ।।

6.लण्।

अयं णकारो द्विर्बध्यते- पूर्वतश्चैवं परतश्चैवम्। तत्रेण्ग्रहणेष्वण्ग्रहणेषु च सन्देहो भवति; किं पूर्वेण स्युः, परेण वेति ? अतस्तदपनयनार्थमाहे-
`इण्ग्रहणानि' इत्यादि। तत्र यथा सर्वाणीण्ग्रहणानि परेण णकारेण गृह्यन्ते तथा `अइउण्' (मा.सू.1) इत्यत्र प्रतिपादितम्। अण्ग्रहणानि तु यानि परेणानि

सम्भाव्यते, तानि पूर्वेण प्रतिपादितानि। कानि पुनस्तानि ? `ढ्रलोपे पूर्वस्य दीर्घोऽणः' (6.3.111) `केऽणः' (7.4.13) `अणोऽप्रगृह्यस्यानुनासिकः' (8.4.57), `उरण् रपरः' (1.1.51)

इत्येतेषु सूत्रेषु यान्यण्ग्रहणानि। तत्र पूर्वस्मिस्तावत् सूत्रे दृढादिषु `वृढ'शब्दपाठो ज्ञापकः `न परेणाण्ग्रहणम्' इति। यदि हि परेण स्यात्, `वृढः' इति रूपं न

स्यात्। ततश्च दृढादिषु `वृढ'

पाठो नोपपद्येत। `बृहू उद्यमे' (धा.पा.1347)इत्यस्य सूत्रेषु निष्ठायां ठत्वघत्व-

ष्टुत्वढलोपेषु कृतेषु `वृढ' इति रूपं भवति। किञ्च दीर्घश्रुत्या तत्र `अचश्च' (1.2.28) इति सन्निधापिते सत्य च एव दीर्घत्वेन भवितव्यम्। तथा च यदि परेण, अन्तःपातिनामप्यचां दीर्घत्वमभिमतं स्यात्, असन्देहार्थमज्ग्हणमेवकुर्यात्। अथ वा- तदपि न

कुर्यात्; `अचश्च' इत्यस्मादेव सर्वाचां दीर्घत्वसिद्धेः। तस्मादण्ग्रहणसामर्थ्यात्पूर्वेणाण्ग्रहणं विज्ञायते। `केऽणः'(7.4.13) इत्यनेनापि के परतो

हलामणामसम्भवादचामेव ह्रस्वो विधीयते। तत्र यदि सर्वेषामचां ह्रस्वत्वमभीष्टं स्यात्। असन्देहार्थम-

ज्ग्रहणमेव कुर्यात्। अथ वा- तदपि न कुर्यात्, ह्रस्वग्रहणेनोपस्थापितात् `अचश्च' इत्यस्मादेवाभिलषितार्थसिद्धेः। तृतीयेनापि सूत्रेण

पदान्तस्याणोऽनुनासिको विधीयते, न च पदान्ता हलोऽणः सन्तीत्यचामेवानुनासिको विधेयः; तत्र यदि सर्वेषामचामनुनासि-

को विधित्सितः स्यात्, असन्देहार्थमच्ग्रहणमेव कुर्यात्। अथ वा - तदपि न कुर्यात्; अच एव हि प्रगृह्यसंज्ञा भवन्ति, न हलः। तत्र नञिवयुक्तन्यायेन प्रगृह्य प्रतिषेधात् तत्सदृशस्याच एव कार्यं विज्ञास्यते। तस्मात् तत्राप्यण्ग्रहमसामर्थ्यात् पूर्वेणैवाण्ग्रहणं प्रतीयते। `उरण् रपरः'(1.1.51) इत्यत्रापि

`होतृप्रशास्तृणाम्'(6.4.11) इति निर्देशो ज्ञापयति- `नेह परेणाण्ग्रहणम्' इति। परेणाण्ग्रहणे सति

`नामि' (6.4.3) इति रपरो दीर्घः स्यात्' तथा च प्रशास्तृणामिति निर्देशो न स्यात्। किञ्च- न च रेफादन्य ऋकारस्य स्थाने हलोऽणः क्वचिच्छास्त्रे विधीयन्ते। तथा हि

`इको यणचि' (6.1.77) इति रेफः स्यात्। न च ऋकारस्य स्थाने `कर्त्रर्थम्' इत्यादौ

रेफे रेफपरे अरेफपरे वा विहिते कश्चिद्विशेषः, कृते हि रपरे तत्रैकस्य रेफस्य

`रो रि'(8.3.14) इति लोपेन भवितव्यम्। तस्मादेतदप्यण्ग्रहणं परेण णकारेण भवदजर्थमेवस्यात्। तत्र यदि सर्वेषामचां स्थाने विधीयमानानां रपरत्वमिष्टं स्यात्, असन्देहार्थमज्ग्रहणणेव कुर्यात्। तदेवमेतदज्ग्रहणं पूर्वेणैव णकारेण भवतीति निश्चीयते। `

अणुदित्सवर्णस्य चाप्रत्ययः' (1) इत्येकमनेन इति।अत्र च `उर्ऋत्'(7.4.7) इत्यत्र

नैव सवर्णानामृकारो ग्राहक उपपद्यते,भाव्यमानत्वात्, `भाव्यमानेनाणा सवर्णानां ग्रहणं न' (व्या.प.35) इति प्रतिषेधात्, नैतदस्ति; वक्ष्यति हि तत्र- `न चायं भाव्यमानोऽण्, किं तर्हि ? आदेशान्तरनिवृत्यर्थं स्वरूपमेवाभ्यनुज्ञायते'इति। अची-

कृतदित्यत्र`कृत संशब्दने' (धा.पा. 1653)चुरादिणिच्, लुङ, च्लेः `णिश्रि'(3.1.48)

इत्यादिना चङ। `उर्ऋत' इति ॠकारस्य ऋकारः, णिलोपः, `चङि'(6.1.11) इति

द्विर्वचनम्; `उरत्' (7.4.66) इत्यत्त्वम् हलादिः शेषः, `सन्वल्लघुनि' (7.4.93) इतीत्त्वम्, `दीर्घो लघोः'(7.4.94) इति दीर्घत्वम्।

अथ किमर्थमज्ग्रहणमेवैतन्न क्रियत इति ? यत्र कृते सन्देह एव न भवतीति भावः। किं कारणम् ? नैवं शक्यमित्यत आह- `अन्तःस्थानामपि हि' इत्यादि। अन्तःस्था द्वि

प्रभेदाः- रेफवर्जिताः सानुनासिकाः, निरनुनासिकाश्चेति वचनात्। यवलाः सानुनासिका-

श्चेति वचनात्। यवलाः सानुनासिकनिरनुनासिकभेदेन द्विप्रकाराः; ते प्रत्याहारेऽपि

निरनुनासिका वा उपदिश्येरन्, सानुनासिका वा ? यदि निरनुनासिकाः ? सयँय्यन्तेत्यादौ `अनुस्वारस्य ययि परसवर्णः' (8.4.58) इत्यान्तरतम्यात् सानुनासिकेषु यकारादिषु

परसवर्णेषु कृतेषु तेषां प्रत्याहारेऽनुपदेशाद् यत्वं नास्तीति `अनचि च' (8.4.47) इति यरो द्विर्वचनं विधीयमानं न स्यात्। अण्ग्रहणे तु सत्यम् सवर्णान् गृह्णातीत्येतेषामपि द्विर्वचनं सिध्यति। ननु च कृतेऽपि द्विर्वचने `हलो यमां यमि लोपः' (8.4.

64) इत्येकस्य लोपविधानात् त्रयाणां यकाराणां श्रवणं न सम्भवत्येव। तत्किं द्विर्वचनार्थेन प्रयोजनेन ? नैतदस्ति; पाक्षितो हि स लोपः, `झयो होऽन्यतरस्याम्'(8.4.62) इत्यन्यतरस्याग्रहणानुवृत्तेः। तत्र यस्मिन् पक्षे लोपो नास्ति, तत्र त्रयाणां श्रवणं भवत्येव।अथ सानुनासिका उपदिश्येरन् ? प्रत्याहारेऽनुस्वारस्य परसवर्णत्वं निरनुनासिके परतो न स्यात्; ययां मध्ये तेषामसन्निवेशात्।

`हकारादिषु' इत्यादि। प्रतिज्ञानुनासिक्याः पाणिनीया-। यत्रेच्छन्ति

तत्रानुनासिक्यं प्रतिजानते, नान्यत्र। लकारे च तैरकारस्य तत् प्रतिज्ञायते, न

हकारादिषु। `(1)इत्संज्ञकः' इति। `उपदेशेऽजनुनासिक इत्' (1.3.2) इतीत्संज्ञा

विधानात्। तेन इत्यादिना अनुनासिकप्रतिज्ञायाः फलं दर्शयति। ऋकारलृकारयोः सवर्णसंज्ञोपसंख्यानादृकारो गृह्यमाणो लृकारमपि गृह्णाति, ततः `उरण्

रपरः' (1.1.51) इति यथा ऋकारस्याण् शिष्यमाणो रपरो भवति एवं लृकारस्यापि भवन् लपरश्चेष्यते।
तस्मादनुनासिकः प्रतिज्ञायते। तेन `आदिरन्त्येन सहेता' (1.1.71) इति `उरण रपरः'
इत्यत्र `र' इति प्रत्याहारग्रहणं भवति, रेफात्प्रभृत्या लणोऽकारात्। तस्मिंश्च
ऋकारस्याण् रपरः भवति, लृकारस्य तु लपर इति। ततः `तवल्कारः' इत्याद्युपपन्नं भवति।।

7. ञमङणनम्।
`तस्य ग्रहणं भवति त्रिभिः' इति। अथ `सृजिदृशोर्झल्यमकिति'(6.1.58)
इत्यत्राप्यस्याकारेण ग्रहणं कस्मान्न भवति? `साक्षाद्द्रष्टरि' (5.2.91) इति
निर्देशात्। प्रत्याहारे ह्येतस्मिन्नकाराद्यादेशविधानाद् द्रष्टृशब्दो न सिध्येत्। इह तर्हि `भ्रस्जो रोपश्रयो रमन्यतरस्याम्' (6.4.47) इति रेफेण कस्मान्न
भवति? अथ रमयमुपात्तः, न त्वम्- इत्येष कुतो निश्चयः? तुल्या हि संहिता तत्र भवितव्यं
सन्देहेन किमयं रम्? आहोस्विदमिति? व्याख्यानान्निश्चय इति चेत्? यदि तर्हि
व्याख्यानस्य निश्चयहेतुत्वमभ्युपेयते, तत एवात्र चान्यत्र च सर्वत्रैवंजातीयके
सन्देहविषये निश्चयो भविष्यतीति किमन्यैरतिविस्तरग्रन्थकारिभिर्हेतुभिरुपन्यस्तैः
प्रयोजनम् ! यस्तु मन्यते `भ्रस्जौ रोपधयो रम्' इत्यत्र व्यवस्थितविभाषया
प्रत्याहारस्य ग्रहणं न भविष्यतीति, स इदं स्याद्वचनीयः- किमनेनान्यतरस्यांग्रहणेन?रम्ग्रहणं विकल्प्यते- अन्यतरस्यां रम् गृह्यत इति ? अथ
विधानमन्यतरस्यां रम्
विधीयत इति ? यदि रम्ग्रहणम्, ततो रेफस्यैवेदं स्वरूपेण मकारानुबन्धवतो ग्रहणम्, नप्रत्याहारस्येति लभ्यते। एतद्वयवस्थितविभाषया रमागमस्तु विकल्पेन
न स्यात्; अन्यतरस्यांग्रहणविकल्पे चरितार्थत्वात्। न हि द्वितीयमन्यतरस्यां ग्रहणमस्ति, येन विधानं विकल्प्येत, इतरत्र तु पक्षे सिध्यति पाक्षिकं विधानम्;
किन्तु यत् तदभिमतं
व्यवस्थितविभाषया रेफस्यैवेदं मकारानुबन्धवतः स्वरूपेण ग्रहणम्, न प्रत्याहारस्येति, तन्नोपपद्यते; एकत्वादन्यतरस्यांग्रहणस्य। तस्य
विधानविकल्पेनैवोपयुक्तत्वात्।
किञ्च, कुतश्चायमध्यवसायो व्यवस्थितविभाषेयमिति ? व्याख्यानादिति चेत्; किमिदानीं
पारम्पर्याश्रयणेन ! व्याख्यानादेव नैवं प्रत्याहारग्रहणं भविष्यतीति
यत्किञ्चिदेतत्। ` ञकारेणापि प्रत्याहारग्रहणमस्य दृश्यते' इति। यद्येवम्, किमर्थं त्रिभिरियुक्तम् ? `ञमन्ताड्डः'(द.उ.5.7) इत्यत्र प्रत्याहारस्य नावश्यं
ग्रहणमिति दर्शयितुम्। अत्र हि ञकारमकारस्वरूपोपादानेऽपि विना प्रत्याहारग्रहणेनान्यतोऽपि
मकाराद्यन्ताड्डप्रत्ययः सिध्यत्येव, बहुलाधिकारविधानात्। नन्वेवमपि `चतुर्भिः'
इत्येवं वक्तव्यम्, यमिर्ञमन्तेष्वित्यत्र ञारेणाप्यस्य ग्रहणदर्शनात्क, सत्यमेतत्;यदि ग्रहणमात्रमभिप्रेत्यैतदुच्येत्, न चचेदं ग्रहणमात्रमभिसन्धायोक्तम्, किं
तर्हि? ग्रहणविशेषम्, सौत्रम्। न चेदं सौत्रं ग्रहणम्, किं तर्हि ? आनिट्कारिकम्।
`केचित्' इत्यादि। यान्येतान्यनन्तरं प्रत्याहारग्रहणान्युक्तानि तानि `झभञ्' (म.
सू.8) इत्यत्र यो ञकारस्तेनैव भवत्वित्येवं विचिन्त्य केचिदाचार्या मकारस्य प्रत्याख्यानं कुर्वन्ति। तत्र तु प्रत्याख्याने `पुमः खय्यम्परे' (8.3.6) इत्यादिषु
सूत्रेषु मकारस्य स्थाने ञकारः कर्त्तव्य इति तेषामभिप्रायः। `तथा च सति' इत्यादिना मकारानुबन्धप्रत्याख्याने दोषं दर्शयति। `ङमो ह्रस्वादचि ङमुण्
नित्यम्' (8.3.32) इति हि पाठे झभोरपि प्रत्याहारहेऽन्तर्भावाज्झभावप्यागमिनौ स्याताम्- इत्येतच्चो-
द्यमापतति। तयोः झभोः पदान्तयोरभावान्न भविष्यत इति परिहारो वाच्यः। तस्मिन्नुक्ते, `ननु च लभेरुब्जेश्च क्विपि विहित आगमिनावभौ स्त एव पदान्तौ'
इति पुनश्चोद्यम्।
तस्मिन् `झलां जशोऽन्ते' (8.2.39) ति बकारजकारयोः कृतयोः कुतस्ताविति पुनः
परिहारः! ननु चागमिनोझभोरभावाद्वषम्यं स्यात्; तथा हि-ङणनास्त्रय आगमिनः,आगमास्तु
ङणनझभाः पञ्च; ततश्च संख्यावैषम्यान्नैषाम् `यथासंख्यम्' (1.3.10) इति संख्यातानु-
देश स्यादिति पुनश्चोद्यम्; नैष दोषः; सूत्रे यावन्त आगमाः, आगमिनोऽपि तावन्त एव
पठ्यन्ते, तत्र लक्ष्यमनपेक्ष्य ङकारादीनामेव यथासंख्यमागमा भवन्तीति सूत्रार्थे
विहिते उत्तरकालं यथासम्भवं कार्यप्रतिपत्तिर्भविष्यतीति। येषां तावदागमानामागमिनः सन्ति तेषां यथासंख्यं भविष्यति। `झकारभकारौ तु पदानतावागमिनौ
न स्तः' इति कृत्वा
आगमावपि न भविष्यत इति पुनः परिहारो वाच्यः। एवमनेकचोद्यपरिहारेणागमिनो-
र्झभोरभावाद्धेतोरागमाभावप्रतिपत्तौ साध्यायां महाप्रतिपत्तिगौरवं भवेत्।

तस्मादयुक्तं मकारप्रत्याख्यानमिति भावः।

8.झभञ्।

9.घढधष्।

10.जबगडदश्।

11. खफछठथचतव्।
ननु च छकारेणैवास्य ग्रहणम्, न च खफौतदन्तर्भूतौ, तत्किमर्थं तयोरिह
ग्रहणम्? इत्याह- `खफग्रहणम्' इत्यादि। उत्तरेषु प्रत्याहारेष्वनयोरप्यन्तर्भावो
यथा स्यादित्येवमर्थं तयोर्ग्रहणमित्यर्थः।।

12.कपय्।

13 शषसर्।

14. हल्।
इहान्येषां वर्णानां सकृदुपदेशः हकारस्तु द्विरुपदिश्यते, तस्य द्विरुपदेशे प्रयोजनं जिज्ञासुराह- `अथ किमर्थम्' इत्यादि। `स्निहित्वा' इति। `ष्णह प्रीतौ' (धा.पा.1200), आदेः ष्णः स्नः, `समानकर्तृकयोः पूर्वकाले' (3.4.21) इति क्त्वा,इट्।`अलिक्षत्' इति। `लिह आस्वादने' (धा.पा.1026)लृङ, `हो ढः' (8.2.31), `षढोः कः
सि' (8.2.41) इति कत्वम्, `आदेशप्रत्यययोः' (8.3.59) इति षत्वम्। `रुदिहि, स्वपिहि' इति। रुदिस्वपिभ्यां विध्यादिलोट्; `सेर्ह्यपिच्च' (3.4.87), अदादित्वाच्छपो लुक्; `रुदादिभ्यः सार्वधातुके' (7.2.76)इतीट्। `अदाग्धाम्' इति। `दह भस्मीकरणे' (धा.पा.
991)लुङ, तस्य च्लिः, `तस्थस्थमिपाम्' (3.4.101) इत्यादिना तसस्ताम्,च्लेः सिच्
`वदव्रज'(7.2.3) इति वृद्धिः, `दादेर्धातोर्घः'(8.2.32), `झलो झलि' (8.2.26) इति
सिचो लोपः, `झषस्तथोर्धोऽधः' (8.2.40) इति तकारस्य धत्वम्, `झलां जश् झशि'(8.4.53) इति घकारस्य गकारः। तत्र यदि ग्रहणं न स्यात्, ततो घत्वस्याप्यसिद्धत्वात् घकारात् अझलः परः सिजिति' तस्य `झलो झलि' (8.2.26) इति लोपो न स्यात्। तस्मात्
शल्वल्झल्ग्रहणेषु चास्य ग्रहणं यथा स्यादित्युपदिष्टस्यापि पुनरुपदेशः।
यद्येतानि प्रयोजनानि परोपदेश एवास्तु; तेनैव ह्येतानि सिध्यन्ति, पूर्वो-
पदेशस्तु न कर्त्तव्य इत्यभिप्रायेणाह- `हयवरदित्यत्र तर्हि' इत्यादि।
`अड्ग्रहणेषु' इत्यादि। यदि पूर्वत्र नोपदिश्येत,अड्ग्रहणेन चाश्ग्रहणेन चाग्रहणात् `महाँ हि सः' इत्यत्र रुत्वानुनासिकत्वयत्वयलोपा न स्युः। महच्छब्दात् सुः,
`उगिदचाम्' (7.1.70) इति नुम; `सान्तमहतः संयोगस्य ' (6.4.10) इति दीर्घः,
हल्ङ्यादिसंयोगान्तलोपौ। महान् हि इति स्थिते हकारे परतस्तस्याड्ग्रहणेन ग्रहणात् `दीर्घादटि समानपदे' (8.3.9) इति रुत्वम्, `आतोऽटि नित्यम्' (8.3.3) इति पूर्वस्यानुनासिकः। अश्ग्रहणेन ग्रहणात्`भो भगो अघो' (8.3.17) इत्यादिना रेफस्य यत्वम्,
अशीति वर्त्तमाने `हलि सर्वेषाम्' (8.3.22) इति यलोपः। `हशि च' इत्यादि। इदमपरं
पूर्वोपदेशस्य प्रयोजनम्। असति हि तस्मिन्, ब्राह्मणो हसतीत्यत्र हकास्य हश्ग्रहणे-नाग्रहणात् तस्मिंस्त्वसति परतो रोरूत्वं न स्यात्। ब्राह्मणशब्दात् सुः, तस्य
`ससजुषो रुः' (8.2.66), `हशि च' (6.1.114) इत्युत्वम्,`आद्गुणः' (6.1.87)।
`एकस्मात्' इत्यादि। परे ग्राह्या इति शेषः। स्युरिति वक्ष्यमाणेन सम्बन्धः। एकस्मादिति दिग्योगलक्षणा पञ्चमी। एकस्माद्वर्णात् परे ङकारादयो ग्राह्या भवेयु रित्यर्थ। अथ वा - एकस्मादिति ल्यब्लोपे पञ्चमी, प्रासादात् प्रेक्षते इति यथा, तथा प्रदेशवाक्येष्वेकं वर्णमुपच्चार्य परिगृह्य वा ङकारादयो ग्राह्या भवेयुरित्यर्थः। स पुनरेको वर्णः। ` एओङ' (मा.सू. 3), `झभञ्'(मा.सू.8),`अइउण्' (मा.सू.1)

`खफछठथचटतव्' (मा.सू.11) `हयवरट्' (मा.सू.5) इत्यत्र येन सह ङकारादीनां ग्रहण
मुक्तं स एव वेदितव्यः। `द्वाभ्यां षः' इत्यत्र परे ग्राह्या इति यदध्याहृतं यच्च
`स्युः' इति क्रियापदं तदर्थादेकवचनतया विपरिणमति। द्वाभ्यां परो द्वौ वा उच्चार्य षकारो ग्राह्यो भवेदित्यर्थः। एवमुत्तरत्राप्यर्थो वेदितव्यः। कौ पुनर्द्वौ ?
`झभञ्' (मा.सू.8) `घढधष्' (मा.सू.9) इत्यत्र याभ्यां षकारस्य ग्रहणमुक्तम्, तावेव।
`त्रिभ्य एव कणमाः स्युः' इति। ते पुनस्त्रयः - `ऋलृक्'(मा.सू2) `लण्'(मा.सू.6)
`ञमङणनम्' (मा.सू.7) इत्यत्र यैः ककारादीनां ग्रहणमाख्यातम्, त एव। `ज्ञेयौ चयौ
चतुर्भ्यः' इति। ते पुनश्चत्वारः- `ऐऔच्' (मा.सू.4), `कपय्'(मा.सू.12) इत्यत्र
चयोर्यैश्चकारयकारयोर्ग्रहणमभिमतम्, त एव। `रः पञ्चभ्यः' इति। तेन पुनः पञ्च -
`शषसर्'(मा.सू.13) इत्यत्र यै रेफस्य ग्रहणं प्रतिपादितम्, त एव। `शलौ षड्भ्यः'
इति। ते पुनः षट्- `जबडदश्' (मा.सू.10) `हल्' (मा.सू.14) इत्यत्र यैः
शकारलकारयर्ग्रहणमुक्तम्, ते वेदितव्या इति।।
इति प्रत्याहारप्रकरण्।

अथ प्रथमाध्यायस्य
प्रथमः पादः
1.वृद्धिरादैच्।(1.1.1)
वृद्धिः,आत् ऐच्- इति केचित् त्रिपदमिदं सूत्रं वर्णयन्ति। अन्ये तु, आच्च, ऐच्च् इति आदैजिति समाहारे द्वन्दोऽयमिति मत्वा वृद्धिः, आदैच् इति द्विपदम्।
इतरेतरयोगे हि बहुत्वाद्बहुवचनं स्यात्। ननु च समाहारेऽपि `द्वन्द्वाच्चुदषहान्ता-
त्'(5.4.106)इति टच् समासान्तः स्यात्; समासान्तविधेरनित्यत्वान्न भविष्यति। अनित्यत्वं षष्ठे ज्ञापयिष्यते। अथ `चोः कुः' (8.2.30) इति कुत्वं कस्मान्न भवति? `अय-
स्मयादीनि च्छन्दसि' (1.4.20) इति भसञ्ज्ञकत्वात्। आदिशब्दस्य प्रकारवाचित्वादैच्छ-
ब्दोऽयमयस्मयादिषु द्रष्टव्यः। ननु तत्र च्छन्दसीत्युच्यते, न चेदं छन्दः, तत्कुतो भसञ्ज्ञा ? `छन्दोवत् सूत्राणि भवन्ति' इत्यदोषः।
इहेदं सूत्रमनर्थकं वा स्याद्यथाकथञ्चिदुदात्तादिवचनवत् ? साध्वनुशासनार्थवा, वृद्धिशब्दस्यादैचाञ्चानेन साधुत्वमाख्यायत इति ? प्रयोगनियमार्थं वा, आदैच पर एव वृद्धिशब्दः प्रयोक्तव्य इति ? आदेशार्थवा, आदैचां वृद्धिशब्द आदेशो भवति ते वा तस्येति ? आगमागमिसम्बन्धार्थं वा, आदैचां वृद्धिशब्द आगमो भवति, ते वा तस्येति ?
विशेषणविशेष्यभावप्रसिद्ध्यर्थं वा, आदैचां वृद्धिशब्दो विशेषणम्, ते वा, तस्येति ?एकविभक्तिकत्वं ह्यत्र दृष्टम्, दृष्टश्चैकविभक्तिकयोर्विशेषणविशेष्यभावः, तद्यथा
नीलमुत्पलमिति; सञ्ज्ञासञ्ज्ञिसम्बन्धार्थं वा ? दृश्यते हि सोऽप्येकविभक्तिकयोः, तद्यथा `अयं पनसः' इति? तत्र तावदाद्यः पक्षो नोपपद्यते।
सगषिगतज्ञानातिशयो
ह्याचार्यः परहितप्रतिपन्नः समाहितचेताः शिष्याणां कृतरक्षासंविधानो मङ्गलपूर्वकं
महता प्रयत्नेन सूत्राणि प्रणीतवान्। तत्राशक्यमेकेन वर्णनाप्यनर्थकेन भवितुम, किं पुनरियता सूत्रप्रबन्धेन!नापि शक्यं वृद्धिशब्दस्यादैचां च साधुत्वमनेन विधीयत इति विज्ञातुम्, लक्षणान्तरेण विहितत्वात् तेषां साधुत्वस्य। तथा हि वृद्धिशब्दोऽयम-
विशेषेणचोपदिष्टः। `वृधु वृद्धौ' (धा.पा.759) इत्यतः क्तिन्प्रत्ययः `स्त्रियां
क्तिन्'(3.3.94) इति, `झषस्तथोर्धोऽधः'(8.2.40) इति धत्वम्, `झलां जश् झशि' (8.4.
53)इति धकारस्य दकारः। आदैचोऽप्यक्षरसमाम्नाय उपदेशात्। ऐचोऽक्षरसमाम्नाय उपदेशः, नाकारस्येति चेत्? अवर्णजातेरुपदेशात् सोऽपि गृह्यत इत्यदोषः। अथाप्यकारव्यक्तेरुपदेशः? एवमप्यदोषः। `अणुदित्सवर्णस्य चाप्रत्ययः'(1.1.69) इत्यकारेण गृह्यमाणेनाकारस्यापि ग्रहणात्।
प्रयोगनियमार्थमप्येतन्नार्हति भवितुम। प्रयोगनियमार्थे
ह्येतस्मिन् `सिचि वृद्धिः' (7.2.1) मृजेर्वृद्धिः' (7.2.114) इत्यादावनादैच्परस्य वृद्धिशब्दस्य प्रयोगो नोपपद्यते। कथं हि नाम स्वयमेव नियमं कृत्वा तमनादैच्परं
प्रयुञ्जीत!
अन्यस्तु प्रयोगनियमार्थमेतन्न भवतीति प्रतिपादयितुमाह- नह च प्रयोगनियमा-
र्थमारभ्यत इति। ननु चायं प्रयोगनियमार्थमेवारभ्यते `ते प्राग धातोः' (1.4.80) इति ? ते गत्यपसर्गसञ्ज्ञका धातोः प्रागेव प्रयोक्तव्याः इति परेण चोदिते

परिहारमाह- `
प्रत्याख्यायते स योगः, न वा, तथानिष्टदर्शनात्' इति। न हि प्रपचतीति प्रयोक्तव्ये कश्चित् पचति प्र इति प्रयुङ्कते। अथापि न प्रत्याख्यायेत, एवमपि न दोषः, यतः
सञ्ज्ञानियमोऽयं न प्रयोगनियमः, ते प्रादयो धातोः प्राक् प्रयुज्यमाना एव गत्युपस-र्गसञ्ज्ञका भवन्तीति। अथापि प्रयोगनियमार्थं स्यात्, एवमपि न दोषः, लौकिकानां
शब्दानामर्थे प्रयुक्तानां प्रयोगनियम आरभ्यते, आदैच्छब्दश्च लौकिकः, तस्य किं
प्रयोगनियमार्थेन वचनेनेति? तत्र यदुक्तं `प्रत्याखअयायते स योगः' इति, तदयुक्तम्। न हि सार्थकस्य प्रत्याख्यानं युक्तम्। निरर्थकः स इति चेत् ? अत्राप्यनर्थकत्वाशङ्काप्रसङ्गः। यदि ह्यनर्थकान्यपि कानिचित् सूत्राणि प्रणीतवान् सूत्रकार इत्येषोऽ-
ध्यवसायः स्यात्। तस्मात तस्य प्रामाण्यमभ्युपगच्छता सर्वं तत्प्रणीतं येन केनचित् प्रकारेण सार्थकमभ्युपेयम्। योऽपि सञ्ज्ञानियमपक्षमाश्रित्य परिहार उक्तः, सोऽपि वृत्त्या विरुध्यते। `ते गत्युपसर्गसञ्ज्ञका धातोः प्राक् प्रयोक्तव्याः' इत्यनेन
हि वृत्तिग्रन्थेन प्रयोगनियम एवाश्रित इति स्पष्टमेवाख्यातम्। न च वृत्तिं
व्याख्यातुमुद्यतस्य तद्विरुद्धं व्याख्यानं युज्यते कर्तुम।
यदप्युक्तं `लौकिकानां शब्दानाम्' इत्यादि, तदपि न प्रयोगनियमार्थता-
शङ्कापनोदायालम्। तथा हि `विभाषा सुपो बहुच् पुरस्तातु(5.3.68), `अव्ययसर्व-
नाम्नामकच् प्राक् टेः' (5.3.71), `कृञ्चानुप्रयुज्यते लिटि' (3.1.40) इत्यलौकिकानामपि बहुजादीनं शास्त्रे प्रयोगनियमो दृश्यते, तत्र भवितव्यमेवाशङ्क्या, किमेतत्
प्रयोगनियमार्थम्, अथान्यार्थमित्यलमतिप्रसङ्गेन। तस्मात् पूर्वोक्त एव परीहारो
युक्तः।
आदेशार्थमप्येतच्छक्यते न विज्ञातुम्। यदि ह्यादैचामनेन वृद्धिशब्द आदेशो
विधीयेत, य एते निर्देशाः `याति वाति द्राति प्साति' (8.4.17) इति, यश्च `रायो हलि'(7.2.85) इति, यश्च `नावो द्विगोः' (5.4.99) इति, ते नोपपद्येरन्। अथ वृद्धिशब्द-
स्यादैच आदिश्येरन्, एवमपि `इद्वृद्धौ'(6.3.28), `वृद्धिनिमित्तस्य च तद्धितस्य' (6.3.39)इत्येवमादयो निर्देशा न सम्भवेयुः। अत एवागमार्थमप्येतन्नोपपद्यते। न
ह्यादैचां वृद्धिशब्द आगमे विहिते तस्य वा तेषु पूर्वोक्ता निर्देशा उपपद्यन्ते।
अन्यस्त्वाह- आदेशविधाने स्थान्यादेशसम्बन्धे षष्ठ्या भवितव्यम्, आगमविधानेप्यवयवावयविसम्बन्धे, न चेह षष्ठी विद्यते, तस्मात् षष्ठ्या अभावान्नेदमादेशार्थम्, नाप्यागमार्थम् इति। एतच्चासम्यक्। विनाऽपि षष्ठ्या `हल्ङ्याग्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' (6.1.68), `अनिते'(8.4.19), `अन्तः'(8.4.20), `उभौ साभ्यासस्य'
(8.4.21) इत्यावेशविधानदर्शनात्। आगमविधानस्यापि `न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्' (7.3.3) इति षष्ठीमन्तरेणापि दर्शनात्
विशेषणविशेष्यभावप्रसिद्ध्यर्थमप्येतन्न् सम्भाव्यते। तथा हि सम्भवव्यभिचारे च सति विशेषणविशेष्यभावो भवति,
नीलोत्पलवत्। न चेहादैचां वृद्धिशब्दे तस्य वा तेषु सम्भवः। ननु च यथोत्पलशब्दःसर्वत्रोत्पलार्थे वर्तमानो नीलशब्देनार्थान्तराद्वयवच्छिद्यत इति व्यवच्छिद्यमानो विशेष्यो भवति, नीलशब्दस्तु व्यवच्छिन्दन् विशेषणम्, तथानयोरपबि यो वयवच्छेद्यः स
विशेष्यो भवति, यस्तु व्यवच्छेदकः स विशेषणमिति? नैतदस्ति। उभयोर्हि सार्थकत्वे
सत्येतदुपपद्यते, नीलोत्पलशब्दवत्। न चादैचोऽर्थवन्तः। भवतु नामानयोर्विशेषणविशे-
ष्यभावः, तथापि नैतत्सिद्ध्यर्थमिदं युक्तम्; निष्प्रयोजनत्वात्, तत्पुनः प्रकृतानुपयोगित्वात्। शब्दानुशासने हि शास्त्रे प्रकृते यग्नाम शब्दसंस्कारानुपयोगिवचनं तत्सर्वमप्रयोजनम्। शब्दसंस्कारानुपयोगित्वं त्वेतत्प्रतिपदितेन विशेषणविशेष्यभावेनवृद्धिशब्दस्यादैचां वा स्वरविशेषस्य वा रुपविशेषस्य वा संस्कारस्यासिद्धेः। विशेषणविशेष्यभाव एव तेषां संस्कार इति चेत् ? यद्येवम्, अत्यल्पमिदमुच्यते`वृद्धिरादैच्' (1.1.1)इति। नीलोत्पलमित्यद्पि हि वक्तव्यम्, नीलोत्पलादिशब्दानां विशेषणविशेष्यभावप्रसिद्धये। न चोक्तम्, अतो नैष संस्कारोऽभिमत इति नास्य तादर्थ्यं सम्भाव्यते।
ननु तुल्यविभक्तिकानां तद्गुणसमाध्यारोपोऽपि दृष्टः, तद्यथा `सिंहो माणवकः' इति, तस्मात् तदर्थमेतद्भविष्यतीति यत्पक्षान्तरमेके परिकल्पयाम्बभूवुः, तदर्थम-
प्येतन्न भवति, तद्गुणसमाध्यारोपस्य सतोऽप्यत्र प्रकृतानुपयोगित्वेनानर्थकत्वात्। तस्मात् पारिशेष्यात् सञ्ज्ञासञ्ज्ञिसम्बन्धार्थमेवैतदित्यालोच्याह-`वृद्धिशब्दः सञ्ज्ञात्वेन' इत्यादि। भवतु नाम परिशेष्यात्तदर्थम्। एतत् कुतो लभ्यते ? वृद्धि-
शब्दः सञ्ज्ञा, आदैचः सञ्ज्ञिनः इति। विपर्ययः कस्मान्न भवति,आदैचः सञ्ज्ञा, वृद्धिशब्दः सञ्ज्ञी इति? नार्हति विपर्ययो भवितुम्। तथा हि, लघ्वर्थत्वात् सञ्ज्ञाकरणस्य, यस्मिन्नुच्चार्यमाणे प्रदेशेषु लाघवं भवति तस्य सञ्ज्ञार्थत्वेन भाव्यम्। वृद्धिशब्दे च विभक्तिकेऽप्युच्चार्यमाणे लाघवं भवति, नादैक्षु;

यस्माद्वृद्धिशब्द
उच्चार्यमाणे चतस्त्रो मात्रा भवन्ति, आदैक्षु तु पञ्च। न चादैचां प्रत्येकं
सञ्ज्ञाभावाल्लाघवं भवतीति शक्यं परिकल्पयितुम्, प्रयोजनविशेषमन्तरेणैकस्थाने-
सञ्ज्ञाविधानस्य निष्फलत्वात्। किञ्चावर्तिभ्यः सञ्ज्ञा भवन्ति। वृद्धिशब्दश्चावर्तते, नादैच्छब्दः तस्मान्न भवति विपर्ययः `वृद्धिशब्दः' इति।
शब्दग्रहणमर्थव्यवच्छे-
दार्थम्। असति हि तस्मिन् शब्दादर्थावगतेरर्थस्यैव सञ्ज्ञात्वं विज्ञायेत। यद्यपि प्रागेव सञ्ज्ञा विहिता, तथापि शिष्यप्रशिष्यप्रबन्धाद्युपरमाद्विधीयत इतिवर्तमान प्रयत्वेन् निर्देशः। यत्र समुदास्य कार्यमिच्छति तत्र उभेपदग्रहणं करोति, यथा `उभे
अभ्यस्तम्' (6.1.5) इति, अन्वर्थां वा महतीं सञ्ज्ञाम्, `हलोऽन्तराः संयोगः'(1.1.7) इति। तत्र हि महती सञ्ज्ञैवमर्था क्रियते, समुदायस्यैषा सञ्ज्ञायथा स्यादिति।
एतच्चोत्तरत्र व्यक्तीकरिष्यामः। इह तु न किञ्चित्तथाविधं वचनमस्ति यतः समुदायस्यै-
षा सञ्ज्ञा स्यात्। तस्मादेकैकस्यैषा सञ्ज्ञेति मनसि कृत्वाह `प्रत्येककम्' इति।
ननु चेहापि लाघवार्थमेकाक्षरायां सञ्ज्ञायां कर्तव्यायां वृद्धिरिति महत्याः
सञ्ज्ञायाःकरणं समुदायस्य सञ्ज्ञा यथा स्यादित्येवमर्थम्? नैतदस्ति। मङ्गलार्थत्वा-
दस्याः सञ्ज्ञायाः। अत एवास्याः प्रागुच्चारणम्। अन्यथा सञ्ज्ञायाः सतः कार्यिणः
कार्येण भवितव्यमिति, यथा `अदेङ्गुणः'(1.1.2) इत्यादौ पूर्वसञ्ज्ञीनिर्दिष्ट-,
तथेहापि निर्दिशेत्। आकारस्य गुणान्तरयुक्तयोश्चैचोः प्रत्याहारेऽसन्निवेशान्नामी वर्णा इति कस्यचिन्मन्दधियो भ्रान्तिः स्यात्, अतस्तन्निराकरणायाह-
`वर्णानाम्'
इत्यादि। प्रत्यासत्तेस्तद्भावितानामेवैषां सञ्ज्ञा स्यादिति कस्यचिद्विपर्ययः
स्यात्, अतस्तमपाकर्तुमाह-`सामान्येन' इति। व्याप्तेर्न्यायादित्यभिप्रायः।
सामान्येनेत्यस्यार्थं विस्पष्टीकर्तुमाह- `तद्भावितनाम्' इत्यादि। ते तद्भाविताः
ये वृद्धिशब्देनोत्पादिताः, ततोऽन्येऽतद्भाविताः। आदिति तपरकरणम्-`तपरस्तत्कालस्य'(1.1.70) इति गुणान्तरभिन्नानामपि तुल्यकालानां ग्रहणार्थं वा स्यात्, भिन्न-
कालानां ग्रहणनिवृत्त्यर्थं वा ? तत्र् पूर्वः पक्षस्तावन्नोपपद्यते; अभेदकत्वादिहोदात्तादीनां शास्त्रे गुणानाम। कुत एतत् ? `लुङलङलृङक्ष्वडुदात्तः'(6.4.71) इत्युदात्तग्रहणात्, अन्यथा ह्युदात्तगुणयुक्तमेवाटमुच्चारयेत्। द्वितीयोऽपि नोपपद्यते।
यदि ह्याकारः सवर्णानां ग्राहकः स्यात्, ततस्तेन भिन्नकालस्याप्यवर्णस्य ग्रहणे सति तस्यापि सञ्ज्ञा मा भूदिति भिन्नकालानां ग्रहणनिवृत्त्यर्थं तपरकरणमुपपद्यते। न
चासौ सवर्णानां ग्राहकः, अनण्त्वात्, तस्य पुनरक्षरसमाम्नायेऽसन्निवेशात्। तस्मादनर्थकं तपरकरणम्। ततो न कर्तव्यमेवेत्यत आह- `तपरकरणम्' इत्यादि। एचोरर्थः प्रयोजनं
यसय् तत् तथोक्तम्। ननु च जातौ पदार्थे प्लुतस्यापि ग्रहणं भवति, तत्राप्यवर्णजातेः समवयात्, तत्रासति तपरकरणे तस्यापि सञ्ज्ञा स्यत्, तस्मात्
तन्निवृत्तय तपरकरणं भवदाकारार्थमप्युपपद्यत एव, तत्किमुच्यते `एजर्थम्' इति ? एवं मन्यते-
जातिपक्षसमाश्रयणेऽपि हि दीर्घोच्चारणसामर्थ्याद्द्विमात्रा एवावर्णव्यक्तयः
समाश्रिता इति गम्यते, इतरथा हि लाघवार्थम् `अद्' इत्येवाभिदध्यात्। न च ह्रस्वनिवृत्त्यर्थं दीर्घोच्चारणमिति शक्यते परिकल्पयितुम्, दीर्घोच्चारणेऽपि ह्रस्व-
ग्रहणं प्राप्नोत्येव, तत्राप्यवर्णजातेः सम्भवादिति। न चासन्देहार्थम् `आत्' इत्युक्तम्, वर्णान्तरासाधारणत्वात्, असंहितया वा सन्देहाभावादिति। ननु च `तपरस्तत्काल-
स्य' (1.1.70)इत्यत्र तः परो यस्मादिति बहुव्रीहिराश्रितः, न चात्रैच् तपरः, तत्कथं तपरकरणमैजर्थं भवतीत्यत आह- `तावपि परस्तपरः' इति। न केवलं तः परो यस्मात् स तपर
इति, अपि तु तादपि यः परः सोऽपि तपर इति अपिशब्देन दर्शयति. एतदुक्तं भवति, न
केवलं बहुव्रीहिरेव तत्राश्रीयते, किं तर्हि? पञ्चमीतत्पुरुषोऽपि। यता चैतदुभयमा-
श्रीयते तथा तत्रैवोपपादयिष्यामः। इति करणो हेतौ यत एवं तादपि परस्तपरः, तेन तपरकरणमैजर्थमित्यर्थः।`खट्वैडकादिषु' इत्यादिना तदेवैजर्थत्वं तपरकरणस्य स्पष्टीकरोति।
वृक्ष एलका `वृक्षैलका'। अक्रियमाणे ह्यत्र तपरकरणे त्रिमात्रिकस्याकारैकारसमुदाय
स्यस्थाने वृद्धिरेचि'(6.1.88) इति वृद्धिरान्तरतम्यात् त्रिमात्रिक एवैकारः स्यात्यदि तस्यापि वृद्धिसञ्ज्ञा स्यात्। खट्वा ओदनं खट्वौदनम्, खट्वा एलका

खट्वैलका इत्यत्रापि पूर्वोत्तरसमुदाययोश्चतुर्मात्रायोश्चतुर्मात्रावकारैकारौ स्याताम्,तन्मा
भूदेष दोष इति त्रिमात्रचतुर्मात्राणामैचां वृद्धिसञ्ज्ञानिवृत्तये तपरकरणं क्रियते। आश्वलायनः, ऐतिकायनः' इति। अश्वलेतिकशब्दाभ्यां `नडादिभ्यः फक्' (4.1.99),
`यस्येति च' (6.4.148) इति लोपः, `किति च'(7.2.118) इत्यादिवृद्धिः। `औपगवः' इति।
उपगुशब्दात् `प्राग्दीव्यतोऽण्'(4.1.83)। `औपमन्यवः' इति। उपमन्युशब्दात `अनृष्यानन्तर्ये बिदादिभ्योऽञ्' (4.1.104)इत्यञ्, उभयत्रापि
`ओर्गुणः'(6.4.146), अवादेशः (6.1.78), ` तद्धितेष्वचामादेः' (7.2.117) इति वृद्धिः। एतानि चत्वार्यपि तद्भावितो-
दाहरणानि। ननु येऽत्र त्रयः सञ्ज्ञिनस्तेषामाद्यैस्त्रिभिर्विषयो दर्शितः, किमर्थ-
श्चतुर्थोपन्यासः? केचिदाहुः- वद्धिनिमित्तभेदात्, आद्ययोरुदाहरणयोः कित्तद्धितो
वृद्धेर्निमत्तम्, तृतीयेऽपि णित्, तचुर्थेऽपि ञित् इति। एतच्चायुक्तम्। तथा हि `इको गुणवृद्धी' (1.1.3) इत्यत्र`अकार्षीत्' इत्युदाहृत्य `अहार्षीन्' इत्युदाहृतम्', न च तत्र वृद्धिनिमित्तभेदोऽस्ति। तथा `न धातुलोप आर्धधातुके' (1.1.4) इत्यत्र
लोलुवः इत्युदाहृत्य `पोपुवः, मरीमृजः' इत्यधिकोदाहरणोपन्यासः कृतः। न च तत्र लोपनिमित्तभेदः; प्रतिषेधनिमित्तभेदो वा अधिकोदाहरणोपन्यासस्य हेतुर्विद्यते। प्रायेणा-
न्यष्वेपि च सामान्यलक्षणेषु विनापि निमित्तभेदानाधिकोदाहरणोपन्यास उपलभ्यते।
योऽप्याह `ओपगव इत्यनेनैच औकारस्य विषये दर्शितेऽपि स्वरभेदादौपमन्यव
इत्येतदधिकमुदाहरणमुपन्यस्तम्' इति, तस्यापि तदयुक्तम्, अत एवानन्तरोक्ताद्धेतोर्वेदितव्यम्।. यदि निमित्तभेदः, स्वरभेदो वा सर्वत्राधिकोदाहरणोपन्यासो वेदितव्यः। `शालीयः, मालीयः' इति। अतद्भावितस्योदाहरणे । अत्र हि वृद्धिसञ्ज्ञायां वृद्धिर्यस्या
चामादिस्तद्वृद्धम्' (1.1.73) इति वृद्धसञ्ज्ञाफं छप्रत्ययोपन्यासस्तस्या एव फलभूताया अभिव्यक्त्यर्थः। वृद्धसञ्ज्ञायां हि सत्यां ` वृद्धाच्छः' (4.2.114) इति जातादावर्थे छो विधीयते। ऐकारौकारयोस्त्वतद्भावितयोरुदाहरणं नात्र दर्शितम्, एतदनुसरसार-
णैव गम्यमानत्वात्। आकारस्यातद्भावितस्य वृद्धिसञ्ज्ञायाः कार्ये दर्शिते, तयोरपि तदेव कार्यमिति तन्मुखेनैव गम्यत एव। के पुनसत्योरुदाहरणे? `रैमयम्, नौमयम्' इति।
आत्रैकारौकारयोर्वृद्धिसञ्ज्ञायां सत्यां पूर्ववद्वृद्धसञ्ज्ञा। तस्यां च सत्यां
रायो विकारः, नावो विकार इति `नित्यं वृद्धशरादिभ्यः' (4.3.144) इति मयड्भवति।

2.अदेङ् गुणः। (1.1.2)

`तपरकरणं त्विह सर्वार्थम्'इति। सर्वस्मिन्नर्थः प्रयोजनं यस्य तत्
तथोक्तम्। तुशब्दः पूर्वस्माद्विशेषं दर्शयति। तत्र ह्यैजर्थमेव, इह तु सर्वार्थम्, अकारार्थमेङर्थमपि। असति हि तपरकरणं अदेङामणत्वात् सवर्णानां ग्रहणं सति भिन्नकालानामप्येषा सञ्ज्ञा स्यात्। ततश्च `तरिता' इत्यत्रान्तरत्मयाद्दीर्घस्य दीर्घ एव गुणस्यात्।ननु च वृद्धिसञ्ज्ञा गुणसञ्ज्ञाया बाधिका भविष्यति, तत् कुतोऽयं प्रसङ्गः ? नैतदस्ति। एकसञ्ज्ञाधिकारे हि सञ्ज्ञया सञ्ज्ञान्तरं बाध्यते, न चात्रेकसञ्ज्ञाधि-कारः। स्यादेतत्, असत्यप्येकसञ्ज्ञाधिकारे यथा
`जीवति तु वंश्ये युवा'(4.1.163) इति गोत्रसञ्ज्ञा युवसञ्ज्ञया बाध्यते, यथा च `लिट् च' (3.4.115), `लिङाशिषि'(3.4.116)इति
चार्धधातुकसञ्ज्ञया सार्वधातुकसंज्ञा बाध्यते, तथा गुणसंज्ञा वृद्धिसञ्ज्ञया बाधिष्यते इति? अयुक्तमेतत। युवसञ्ज्ञाविधौ तुग्रहणं नियमार्थं क्रियते। ततो युक्तं यद्युवसञ्ज्ञया गोत्रसञ्ज्ञा बाध्यत इति। आर्धधातुकसञ्ज्ञाऽपि यत् सार्वधातुकसञ्ज्ञा बाध्यते तदपि युक्तमेव, `छन्दस्युभयथा' (3.4.117)ति वचनात्। यदि सार्व-
धातुकार्धधातुकसञ्ज्ञयोः समावेशः स्यात्, न बाध्यबाधकभावः, तदा `छन्दस्युभयथा'(3.4.117) इति वचनमपार्थकं स्यात्। इह तु न किञ्चित् तथाविधं निबन्धनमस्ति, यतो वृद्धिसञ्ज्ञया गुणसञ्ज्ञा बाध्यते। अथापि कथञ्चिद्बाध्येत, एवमपि त्रिमात्रिकस्यापि गुण-
सञ्ज्ञा स्यादेव। न हि सा तया शक्या बाधितुम्, तस्य अतद्विषयत्वात्। त्रिमात्रस्यापि गुणसञ्ज्ञायां सत्यां त्रिमात्रोऽपि गुणः प्रसज्यते। ॠकारस्य हि कालतो यथैकमत्रिकोऽकारोऽन्तरतमो न सम्भवति, तथा त्रिमात्रोऽपि, तत् कुत एतल्लभ्यते ? ह्रस्वेनैवास्य गुणेन भवितव्यम् न हि त्रिमात्रेणाकारेणेति। किञ्च, यदि भिन्न-
कालानामपि गुणसञ्ज्ञा स्यात्, `खट्वा इन्द्रः= खट्वेन्द्रः खट्वा उर्वी खट्वोर्वी' इत्यत्र त्रिमात्रत्वात् पूर्वोत्तरसमुदायात्मनः स्थानिनः `आद्गुणः' (6.1.87)इति
त्रिमात्रो गुणः स्यात्। खट्वा ईषा= खट्वेषा, खट्वा उढा=खट्वोढा' इत्यत्र चतुर्मा-
मात्रित्वात् चतुर्मात्रः। तस्मात् सर्वार्थं तपरकरणं कर्तव्यम्। `तरिता' इत्यादि। `तृ तप्लवनतरणयोः' (धा.पा.969), `चिञ् चयने' (धा.पा.1251), `ष्टुञ् स्तुतौ'

(धा.पा.1043), एभ्यः `ण्लुल्तृचौ'(3.1.133) इति तृच्। `आर्धधातुकस्येड् वलादेः'(7.2.35) इतीट्, `सार्वधातुकार्धधातुकयोः' (7.3.84) इति गुणः, सु, `ऋदुशनस्'(7.1.94) इत्यादिना अनङ, `सर्वनामस्थाने च' (6.4.8) इति दीर्घः। एतानि त्रीणि यथाक्रमदेङां तद्भावितानामुदाहरणानि। `पठन्ति, पठन्' इत्यकारस्यातद्भावितस्योदाहरणे। अत्रान्त्याकारस्य गुणसञ्ज्ञायां `अतो गुणे' (6.1.97) पररूपत्वं भवति। पठन्निति शत्रन्तमेतत्।
एकास्यातद्भावितस्यकार्योदाहरणम्- `अहं पचे' इत्यादि। ओकारस्यातद्भावितस् तन्न
सम्भवतीति न प्रदर्श्यते।

3.इको गुणवृद्धी। (1.1.3)
`परिभाषेयम्' इति। नाधिकारः, अस्वरितत्वात्। नापि गुणवृद्धयोर्विधायकं लक्षणम्, लक्षणान्तरेण तयोर्विधास्यमानत्वात्। `स्थानिनियमार्था' इति। स्थानिनि नियमः
स्थानिनियमः, स्थान्यन्तरव्यवच्छेदेनैकत्र प्रवर्तनम्, सोऽर्थः प्रयोजनं यस्याः सा तथोक्ता। `अनियमप्रसङ्गे नियमो विधीयते' इति। यत्र साक्षात् स्थानी न निर्दिष्टः
`सार्वधातुकार्धधातुकयोः'(7.3.84), `सिचि वृद्धिः परस्मैपदेषु'(7.2.1) इत्यादौ,
तत्रानियमे प्रसक्ते नियममेषां करोति-इक एव नान्यस्येति. अतः स एवस्या विषयो
वेदितव्यः, न तु यत्र साक्षात् स्थानी निर्दिश्यते सोऽपि, यथा- `ओर्गुणः' (6.4.146) `अत उपधायाः' (7.2.116) इत्यादिः। तत्र ह्यनियमस्य प्राप्तिरेव नास्ति। लिङ्गवती चेयं परिभाषा, लिङ्गं चास्या गुणवृद्धिग्रहणम्, तत्रोपतिष्ठते। तथा च द्वे षष्ठ्यौ प्रादुर्भवतः,-`इकः' इत्येका षष्ठी,
`मिदेर्गुणः'(7.3.82) इत्येवमादिका द्वितीया।
तत्र कामचारादयथेष्टं सिध्यति। तयोर्विशेषणविशेष्यभावः क्रियते। `मिदेः'
इत्यत्रान्त इग न सम्भवतीति त्सयाङविशेषणत्वं नोपपद्यतेतस्मादत्राङ्गेनेगेव विशिष्यते- मिदेरङ्गस्य य इगिति। तेन स्थानष्ठ्यभावादलोऽन्त्यस्यानुपस्थाने सति यत्र तत्र स्थस्येको गुणः सिद्धो भवति। `सार्वधातुकार्धधातुकयोः' (7.3.84) इत्यादौ त्वङ्गस्य इगन्तत्वं सम्भवति। तेन चाङ्गे विशिष्यमाणे तदन्तविधौ सतीष्टं सिध्यति। तस्मादिकै-वाङ्गं विशिष्यते, `इगन्तस्याङ्गस्येति। एवंचय सत्यस्याः स्थानषष्ठीत्वात् `अलो।-
न्त्यस्य' (1.1.52) इत्येतदुपतिष्ठछते, तेनेगन्तस्यैवाङ्गस्य गुणवृद्धी भवतः,
नेतरस्य। `स्वसञ्ज्ञया' इति। अत्र वक्ष्यमाणोऽभिप्रायः। `इक एव स्थाने' इति।
यदर्थेयं परिभाषा तस्य नियमस्य स्वरूपं दर्शयति- `अकार्षीत्' इति। `डुकृञ् करण' (धा.पा. 1472),लुङ, `च्लेः सिच्' (3.1.44) सिचि वृद्धिः (7.2.1)`अस्तिसिचोऽपृक्ते' (7.3.96) इतीट्। एवम् `अहार्षीत्' इति। अत्र `हृञ् हरणे' (धा.899) इत्ययं विशेषः। `इक इति किम्' इत। एकदेशद्वारेण समुदायस्य पर्यनुयोगो वेदितव्यः। न हि `गुणवृद्धी'
इत्येतावता विनेग्ग्रहणेनार्थः कश्चित् संगृह्यते। `यानम्' इति। यातेर्ल्युटि गुणे विधीयमान आन्तरतम्यादकारः स्यात्। ततश्च द्वयोरकारयोः `अतो गुणे' (6.1.97
पररूपत्वे कृते `यनम्' इत्यनिष्टं रूपं स्यात्। `ग्लायति' इति। `ग्लै म्लै
हर्षक्षये' (धा.पा.903.904), अत्र सन्ध्यक्षरस्य ऐकारस्य एकारो गुणः स्यात्। ततश्चायादेशे कृते ग्लयति इत्यनिष्टं रूपं स्यात्। `उम्भिता'इति। `उभ उम्भ पूरणे' (धा.पा.1319,1320), तृच्, इट्। अत्र व्यञ्जनस्य कारस्यौष्ठ्यस्य ओकारो गुणः स्यात्। ततश्चावादेशे कृते `उभविता' इत्यनिष्टं रूपं स्यात्।
अथ कथं स्वसञ्ज्ञया शिष्यमाणावित्येष विशेषो लभ्यते? न हि सूत्रे
स्वसञ्ज्ञाग्रहणमस्तीत्यत आह `पुनर्गुणवृद्धिग्रहणम्' इत्यादि। इहपूर्वसूत्राभ्यां गुणवृद्धिग्रहणमनुवर्तते। कतस्मिन्ननुवर्तमाने यत् पुनरिह गुणवृद्धरिग्रहणं क्रियतेतस्यैतत् प्रयोजनम्- `यत्र स्वसञ्ज्ञया गुणवृद्धी विधीयेते तत्रायं नियमो यथा
स्यात्, अन्यत्र मा भूत्'इति। पुनर्गुणवृद्धिग्रहणसामर्थ्यादन्यतरस्य गुणवृद्धिग्रहणस्य सञ्ज्ञाप्रधानत्वं सम्पाद्यते। कतेन स्वसञ्ज्ञया विधाने नियमो भवतीत्येषोऽ-
र्थो लभ्यते। अन्यथा हि यद्येवं पूर्वो नियमो नात्राभिमतः स्यात्, ततो नियतस्य निय मस्य प्रकृतगुणवृद्धिग्रहणानुवृत्त्यैव सिद्धत्वात् पुनरिह गुणवृद्धिग्रहणमनर्थकं
स्यादित्येवमभिप्रायः। `इह मा भूत्' इत्यादिनार्यैवं प्रकारस्य नियमस्य व्यवच्छेद्यत्वं दर्शयति- `द्यौः' इति। `दिव औत्'(7.1.84) इत्यौकारः। स्वरूपेण विधीयमानोऽलोऽन्त्यस्यैव भवति, नेकः। `पन्थाः' इति। `पथिमथ्यृभुक्षामात्' (7.1.85) इत्याकारोऽन्त्यस्यैव भवति, नेकः।
`इतोऽत्सर्वनामस्थाने'(7.1.86) इतीकारस्य अकारः, `थोऽन्थः'
(7.1.87) इति थकारस्य न्थादेशः। `इयम्' इति। `त्यदादीनामः'

(7.2.102) इत्यत्वमन्तर्सयैव भवति, नेकः। `दश्च' (7.2.109) इति दकारस्य मकारः। स
इत्यत्र त्वस्याः परिभाषाया उपस्थाने सति त्यदाद्यत्वं न स्यादेव। `तदोः सः सावन-
न्त्ययोः' (7.2.106) इति सत्वम्, ननु च `अनश्च' (1.2.28) इत्ययमपि स्थानिनियमः
स्वसञ्ज्ञाविधान एवेष्यते, तस्यापि च नियमस्य द्यौरित्यादिकं व्यवच्छेद्यम्। तथा
हि वृत्तिकारस्तत्र वक्ष्यति `स्वसञ्ज्ञया विधाने नियमः। अजिति वर्तते। इह मा भूत्, द्यौः, पन्थाः, सः, द्युभ्याम्, द्युभिः' (का 38) इति, ततश्च यदनेन
नियमेनैवंविधेन कर्त्तव्यं तत्तेनैव सिध्यति, नार्थ एवंविधयनियमर्थेन पुनरिह गुणवृद्धिग्रहणेन?
सत्यमेतत्' किन्त्वेवमर्थप्रतिपत्तौ य एते मन्दधियः प्राथमकल्पिकाः श्रोतारः, तेषांप्रतिपत्तिगौरवं स्यात्। तस्मात्ताननुग्रहीतं विस्पष्टार्थमिह सञ्ज्ञाविधाने
नियमं प्रतिपादयितुं पुनर्गुणवृद्धिग्रहणं कृतम्. तद्येवम्, यत् येन विधातव्यं तदनेनैव
विहितमिति तत्र सञ्ज्ञाविधाने नियमो न कर्त्तव्यः ? नैतदस्ति; यदि ह्यसावित्थम्भूतो नियमो न स्यात्, ततो `द्युभ्याम् द्युभिः' इत्यत्र `दिव उत्'(6.1.131) इत्युकारः
स्वरूपेणैव विधीयमानोऽच एव स्थाने स्यात्, नालोऽन्त्यस्य। न ह्यनेन नियमेनाचः
शक्यते व्यावर्तयितुम्, तस्य गुणवृद्धिसञ्ज्ञकत्वात्।

4.न धातुलोप आर्धधातुके। (1.1.4)

उक्तपरिमाणस्य शब्दस्य धातुसञ्ज्ञा कृता। तस्य सर्वस्य लोपे कृते यत्र गुणवृद्धी प्राप्नुतस्तदार्धधातुकेन सम्भवत्येव, तत् किं प्रतिषेधेन ? तस्मात्
प्रतिषेधविधानसामर्थ्याद्धात्वेकदेशे धातुशब्दो वर्तत इति मत्वाह- `धात्वेकदेशो धातुः' इति। `धातुलोपे'इति। यद्ययं धातोर्लोपो धातुलोप इति तत्पुरूषः, तत
आर्धधातुकग्रहणं गुणवृद्धिविशेषणं वा स्यात्- `धा4तुलोपे सत्यार्धधातुकनिमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवतः' इति। लोपविशेषणं वा स्यात्-` आर्धधातुकनिमित्ते धातुलोपे सति
गुणवृद्धी न भवतः' इति? पूर्वस्मिन् `क्नोपयति'इत्यत्र प्रतिषेधः प्राप्नोति। तत्र प्रतिविधानं कर्तव्यम्। द्वितीये तु न भवत्येष दोषः। न हि `क्नोपयति'
इत्यत्रार्धधातुकनिमित्तलोपः, किं तर्हि, कतवल्निमित्तकः। किन्तु द्वितीये पक्षे प्रेद्धमित्यत्र प्राप्नोति। अस्ति ह्यत्रार्धधातुकनिमित्तो लोपः। ननु
चेग्लक्षणयोर्गुणवृद्धयोरयं प्रतिषेधः; न चात्रेग्लक्षणो गुणः ? नैतदस्ति; अत्रापीग्लक्षण एव गुणो यो ह्युभयोः स्थाने भवति, लभते सोऽन्तयतरव्यपदेशम्। तथा हि- `मातुः, पितुः' इत्यत्रोभयोः
स्थाने भवन् रपरोऽण् भवति। तस्माल्लोपविशेषणपक्षेऽपि तत्पुरुषे प्रतिविधानं
कर्त्तव्यमेव। बहुव्रीहौ तु न किञ्चित् प्रतिविधेयमिति मन्यमानो बहुव्रीहिरयमिति
दर्शयन्नाह- `तस्य' इत्यादि। एतेन लोपविशेषणमार्धधातुकमित्येतद्दर्शितं भवति। एवं
चार्धधातुके सम्भवति यदि तत्तस्य निमित्तं भवति, ततश्च क्नोपयतीत्यत्रातिप्रसङ्गो
नावतरति। `तत्र' इत्यादि। नापि गुणवृद्ध्योरार्धधातुकं निमित्त्वेन विशेषणमित्या-
ख्यातम्। ततश्च प्रेद्धमित्यत्राप्यतिप्रसङ्गो न भवति, न ह्याद्गुण आर्धधातुक-
निमित्तः। `ये ते' इति। स्त्रीलिङ्गनिर्देशः `गुणवृद्धी'इत्यनेन स्त्रीलिङ्गेन सामानाधिकरण्यात्। अस्य तु स्त्रीलिङ्गता `परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' (2.4.26)
इत्यतिदेशात्। अर्थस्य च सोऽतिदेश इति यत्तदोरपि तत्रार्थे वर्तमानयोः स्त्रीलिङ्गता भवति। ननु च नियमस्य प्रकृतत्वात् तस्यैवायं प्रतिषेधो युक्तः, तत्
किमित्येवमाह-`तत्र ये गुणवृद्धी प्राप्नुतस्ते न भवतः' इति। तयोः प्राधान्यात्। तत् पुनर्नियमेनोपक्रियमाणत्वात्, नियमस्य तु तादर्थ्यादप्राधान्यम्। तस्माद्गुणवृद्धयोरेवायं
प्रतिषेधो न्याय्यः।
`लोलुवः, पोपुवः' इति। `लूञ् छेदने' (धा.पा.1483), `पूञ् पवने (धा.पा.1482)इत्येताभ्यां `धातोरेकाचः' (3.1.22) इत्यादिना यङ्, `सन्यङो'
(6.1.9) इति द्विर्वचनम्, `गुणोयङलुकोः' (7.4.82) इत्यभ्यासस्य गुणः, यङन्तात् पचाद्यचि `यङोऽचि च' (2.4.74) इति लुकि तन्निमित्तगुणप्रतिषेधः,
तस्मिन् सति `अचि श्नुधातुकभ्रुवाम्' (6.4.
77) इत्यादिनोवङ। `मरीमृजः' इति। `मृजू शुद्धौ' (धा.पा.1066), पूर्ववद्यङ, द्विर्वचनम्, उरदत्त्वम्, (7.4.66) `हलादिः शेषः' (7.4.60) `रीगृदुपधस्य च' (7.4.90)इति
रीगागमः। लोलूयादिभ्य इत्यादिशब्देन `पोपूय, मरीमृज्य' इत्येतयोर्ग्रहणम्। `लूञ्-
लविता' इति। यावदेव धातुसञ्ज्ञा न भवति तावदेव `सर्वविधिभ्यो लोपविधिर्बलीयात्'
(व्या.प.70) इति ञकारस्य लोपो भवति, पश्चाल्लू इत्येतस्य धातुसञ्ज्ञा, तेन ञकारलोपो धातुलोपो न भवतीति भवति प्रत्युदाहरणम्। `रेड् ' इति। `रिष

इति। पूर्वनिपातव्यमिचारलिङ्गमिति। `द्वन्द्वे घि',`अल्पाच्तरम्' इति यौ पूर्वनिपातौ तयोर्व्यभिचारे लिङ्गमित्यर्थः। तेन धूमाग्नी, मृदङ्गशङ्खपणवा इत्यादिप्रयोगोपपत्तिः।।

तौ सत्।। 3.2.127 ।।

तौ सत्।। तौग्रहणं किमर्थम्, संज्ञाविधिर्यथा स्यात् सदित्यस्य प्रत्ययस्य विधिर्मा भूदिति? नैतदस्ति प्रयोजनम्, पूर्वसूत्रे शतृशानचौ स्वरयिष्येते, तत्सामर्थ्यात्तयोरनुवृत्तयोः संज्ञैव भविष्यति, तत्राह----तौग्रहणमुपाध्यसंसर्गार्थमिति। लट्स्थानिकत्वाद् वर्त्तमानकालविहितत्वं चोपाधिः, तेनोपाधिनाऽसंबन्धार्थः, तौग्रहणमित्यर्थः, किं सिद्धमित्याह---शतृशानज्मात्रस्येति। असति तौग्रहणे यादृशौ शतृशानचौप्रकृतौ लट्स्थानिकौ वर्त्तमानकालौ च तादृशयोरेव संज्ञा स्यात्, ततश्च लृडादेशयोर्न स्यात्। `लृटस्सद्वा' इत्येतत्तु वचनं सत्संज्ञकप्रतिरूपयोर्विधानार्थ स्यात्, यथा----अमी पिष्टपिण्डाः सिंहाः क्रियन्तामिति तदाकाराः क्रियन्ते। विहितयोस्तूत्तरकालं संज्ञा न सिध्यति, ततश्च ब्राह्मणस्य पक्ष्यन्, ब्राह्मणस्य पक्ष्यमाण इति समासप्रतिषेधो न स्यात्; तस्यां दशायां सत्संज्ञाया अभावात्। एवं भूतकालयोरपि न स्यात्। `वर्त्तमानसामीप्ये वर्त्तमानवद्वा' इति वचनाद्भूतेऽपि शतृशानचौ भवतः। एवं तत्रापि वर्त्तमानवदित्यतिदेशेन विधानमेव तयोर्भूते सिद्ध्यति, न तु संज्ञा। प्रत्ययाधिकाराद्धि प्रत्यय एवातिदिश्यते, न सज्ञा। तथा `ननौ पृष्टप्रतिवचने'इत्यपि लटः शतृशानचौ भवत इत्युक्तम्, तयोरपि संज्ञा न भवेत्, तौग्रहणे सति तयोरपि संज्ञा भवति----ननु मां ब्राह्मणस्य कुर्वन्तम्पश्य ननु मां ब्राह्मणस्य कुर्वाणम्पश्येति। अथ क्रियमाणेऽपि तौग्रहणे कथमिव कालान्तरविहितयोः संज्ञा सिद्ध्यति, यावता प्रकृतस्यैव वस्तुनस्सर्वनाम्ना परामर्शः? सत्यम्; तौग्रहणसामर्थ्यात्तु विशेषणांशरित्यागेन शतृशषानचो रूपमात्रं परामृश्यते।।

पूङ्यजोः शानन्।। 3.2.128 ।।

पूङ्यजोः शानन्।। इहैते शानन्नादयो यदि लटोऽनुवृत्तिमाश्रित्य तस्यैवादेशाः क्रियेरन्, वेति वक्तव्यम्, पवमानः यजमानः, पवते यजत इत्यपि यथा स्यात्, वाऽसरूपविधिना तिङो बविष्यन्ति, न लादेशेषु वाऽसरूपविधिरस्तीत्युक्तम्। साधनाभिधानम्---साधनस्य चाभिधानं प्राप्नोति `लः कर्मणि च भावे चाकर्मकेभ्यः' इति भावकर्मणोरपि प्रसङ्गः। परस्स्वरश्च न सिद्ध्यति---कतीह पवमानाः, `अदुपदेशाल्लसार्वधातुकम्' इत्यनुदात्तत्वं प्राप्नोति। आत्मनेपदसंज्ञा---`तङानावात्मनेपदम्' इत्यात्मनेपदसंज्ञा च प्राप्नोति, ततश्च परस्मैपदिभ्यश्चानश् न स्यात्कतीह नन्दमानाः। तस्मादशक्या एवैते लादेशा विज्ञातुमिति मत्वाह---शानन्प्रत्ययो भवतीति। शकारस्सार्वधातुकसंज्ञार्थः, नकारस्स्वरार्थः।

यदीत्यादि। `न लोकाव्यय' इत्यत्र स्वरूपस्य ग्रहणं मन्यमानस्य प्रश्नः। तृन्निति प्रत्याहारनिर्देशादिति। षष्ठीप्रतिषेध इत्यनुषङ्गः।

द्विषश्शतुर्वा वचनमिति। `द्विषोऽमित्रे' इति योऽयं शतृप्रत्ययस्तस्य प्रयोगे वा षष्ठी भवति, प्रत्याहारेऽन्तर्भावान्नित्यं प्रतिषेधे प्राप्ते वचनम्। यस्यापि तन्निति स्वरूपग्रहणं तेनाप्येतद्वक्तव्यम्---पक्षे षष्ठी यथा स्यान्नित्यं मा भूदिति। शेषविज्ञानात्सिद्धम्, कर्मणि शेषत्वेन विवक्षिते षष्ठी, कर्मरूपेण विवक्षिते द्वितीयेति।।

ताच्छील्यवयोवचनशक्तिषु चानश्।। 3.2.129 ।।

ताच्छील्यवयोवचनशक्तिषु चानश्।। मण्डयमाना इत्यादि। `मडि भूषायाम्',`भूष अलङ्कारे' चुरादी, `असु क्षेपणे',पर्यासः===सन्नहनम्, शिखापर्यायः शिखण्डशब्दः। वचनग्रहणं विस्पष्टार्थम्।।

इङ्धार्योः शत्रकृच्छ्रिणि।। 3.2.130 ।।

इङ्धार्योः शत्रकृच्छ्रिणि।। अकृच्छ्रः सुखसाध्यो यस्य धात्वर्थ इति। अस्तीति शेषः। `अत इनिठनौ' इतीनिः, अपुत्रा भार्यादिवद् बहुव्रीहिणैव सिद्धे तत्पुरुषान्मत्वर्थीयः कृतः; लघुत्वम्प्रति सर्वत्रानादरात्। इङ आत्मनेपदित्वाद्धारयतेश्च कर्त्रभिप्राये शता न सिद्ध्यति, लसार्वधातुकानुदात्तत्वं च प्राप्नोतीत्ययमारम्भः।।

द्विषोऽमित्रे ।। 3.2.131 ।।

द्विषोऽमित्रे।। असन्देहार्थम् `मित्रे द्विषः' इति सूत्रान्यासादकारप्रश्लेषो विज्ञायत इत्याह---अमित्रश्शत्रुरिति। अमेर्द्विषतीति त्रच्प्रत्ययः, न पुनरयं नञ्समासः, परवल्लिङ्गप्रसङ्गात् लोकाश्रयत्वाल्लिङ्गस्य। स्वरे दोषः, चित्स्वरो हीष्यते। बह्वचास्तु मध्योदात्तममित्रशब्दमधीयते---अमित्रस्य व्यथया मन्युमिन्द्रः, अमैरमित्रमर्दय। द्विषेस्स्वरितत्वात्कर्त्रभिप्राये शता न प्राप्नोतित्ययमारम्भः।।

सुञो यज्ञसंयोगे।। 3.2.132 ।।

सुञो यज्ञयंयोगे।। कर्मसाधनस्संयोगशब्द इत्याद---यज्ञसंयुक्तेऽभिषव इति। सर्वे सुन्वन्त इति। प्रयोगः। तस्य विषयमाह---सर्वे यजमानास्सत्त्रिण उच्यन्ते इति। सूत्रेषु हि ये यजमानास्ते ऋत्विज इति सर्वे प्रधानकर्त्तारः। इह `सुञो यज्ञे' इत्येव सिद्धम्, यज्ञविषयश्चेत्सुनोत्यर्थो भवतीत्यर्थः, तत्किं संयोगग्रहणेन? तत्राह---संयोगग्रहणमिति। `लटः शतृशानचौ' इत्यनेनाप्यप्रधाने कर्त्तरि न भवति, संयोगग्रहणसामर्थ्यात्प्रधानकर्त्ता=अधिकारी।।

अर्हः प्रसंसायाम्।। 3.2.133 ।।

अर्हः प्रसंसायाम्।। अर्हति चौरो वधमिति। `लटः शतृशानचौ' इत्यनेनापि न भवति, प्रथमासमानाधिकरणत्वात्। अस्तु वा `अदुपदेशाल्लसार्वधातुकम्' इत्यनुदात्तः।।

आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु।। 3.2.134 ।।

आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु।। तदित्यादि। `धातोः' इति वर्तते, धातुश्च शब्दः, न तस्य शीलादिप्रतिविशेषणत्वमुपपद्यते, तस्मात्तस्य योऽर्थः स

शीलादीनां त्रयाणां विशेष्याणां विशेषणत्वेन त्रिभिस्तच्छब्दैर्निर्दिश्यते। तत्र धात्वर्थे शीलं यस्य स धात्वर्थो धर्मो यस्य तस्य धात्वर्थस्य साधुकारीत्येवमित्यर्थः।

तद्धर्मा तदाचार इति। धर्मशब्दस्याचारे प्रसिद्धत्वात्। विनापि शीलेनेति। तच्छीलाद्भेदं दर्शयति। यो धात्वर्थ साघु करोतीति। विनापि शीलेनेत्यनुषङ्गः।।

तृन्।। 3.1.135 ।।

तृन्।। मुण्डयितार इति। श्राविष्ठायनानां गोत्रविशेषाणामेष कुलधर्मः। अपहर्त्तार इति। अह्वरदेशे भवा आह्वरकाः, `रोपधेतोः प्राचाम्' इति वुञ्, तेषामेव देशधर्मः। श्राद्धे सिद्धेः। निर्वृत्ते। उन्नेतार इति। अयमपि कुलधर्मः।

तृन्विधाविति। अताच्छील्याद्यर्थ आरम्भः। तृजेव भवतीति। तृन्तृचौ `शंसिक्षदादिभ्यः संज्ञायां चानिटौ' इत्यनेन। स्वरे विशेष इति। तृनि `तादौ च निति कृत्यतौ' इति गतेः प्रकृतिस्वरस्स्यात्, तचि तु कृत्स्वरो भवति। `तृन्तृचौ' इत्यस्यैव विषयव्यवस्थार्थमिदम्। अनुपसर्गेभ्यस्तृन्, सोपसर्गेभ्यस्तृजिति प्रपञ्चार्थ वा, तथा च प्रशास्तेति। तृच्यपीण्नास्ति।

नयतेः षुक् चेति। गुणे कृते षुग् वेदितव्यः, प्रकृत्यन्तरं वा; नेषति, नेषतुः, नेषिथेति दर्शनात्।

अनिट्त्वं चोत। त्विषः स्वत एवानिट्त्वादुक्तवक्ष्यमाणसर्वोपसंख्यानशेषभूतमिदम्। तेन पोता, क्षत्तेत्यनिटत्वं भवति।

क्षदेरिति। धातुष्वपठितोऽपि क्षदिरस्मादेव वचनादभ्युपगम्यते, आत्मनेपदी चायम्। उक्षाणा वा वहतं वाक्षदन्त इति बह्वृचब्राह्मणप्रयोगात्। क्वचिदधिकृत इति। द्वाररक्षणे, रथप्राजने च।।

अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्।। 3.2.136 ।।

अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्।। कृञिति करोतेर्ग्रहणम्, प्रसिद्धेः, न हिसार्थस्य। `जनी प्रादुर्भावे' `डुपचष्पाके',`पचि व्यक्तीकरणे इत्यस्येदित्त्वान्नुमा भाव्यमिति नायं निर्द्देशः सम्भवति। `शल हुल पत्लृ गतौ' `उत्पतिष्णू च चेरतुः खरदूषणौ' इति भट्टिकाव्ये प्रयोगः।`पद गतौ' इत्यन्ये पठन्ति। `मदो हर्षे',`मद तृप्तियोगे' इत्ययं तु चुरादिः, तस्योन्मदेति निर्द्देशो न सम्भवति। `रुच दीप्तौ',`त्रपूष् लज्जायाम्',`वृतु वर्तने' `वृधु वृधौ',`षह मर्षणे',`चर गत्यर्थः। येऽत्र सोपपदा उपात्तास्तत्रोपात्तादेव रूपाद्भवति, तत एतन्न नोदनीयम्----`उदः पचपतमद' इति वक्तव्यम्, किं स्वरूपतः? प्रत्येकमुत्पूर्वपाठेनेति तेन समुत्पतिष्णुरिति न भवतीत्याहुः। ये तु निरुपपादा उपात्तास्तेभ्यो यथादर्शनं भवति।।

णेश्छन्दसि।। 3.2.137 ।।

णेश्छन्दसि।। पारयिष्णव इति। `अयामन्ताल्वाय्येत्न्विष्णुषु' इत्ययादेशः।।

भुवश्च।। 3.2.138 ।।

भुवश्च।। छन्दसीत्युच्यते, तत्कथम्----`जगत्प्रभोरप्रभविष्णु वैष्णवम्' `विष्णवे प्रभविष्णवे' इति? निरंकुशाः कवयः। भ्राजिष्णुनेति। नैतद्भाष्ये समाश्रितम्।।

ग्लाजिस्थश्च ग्स्नुः।। 3.2.139 ।।

ग्लाजिस्थश्च ग्स्नुः।। चर्त्वभूत इति। चरत्वं प्राप्तश्चर्त्वेन वा प्राप्त इत्यर्थः। श्र्युकः कितीत्यत्रापीति। गकारोऽपि चर्त्वभूतो निर्द्दिश्यत इत्यनुषङ्गः। वस्नोर्गित्त्वान्न स्थ ईकारः। स्थास्नुरित्यत्र ईकारो न भवति, क्स्नोर्गित्त्वात्। क्ङितोरीत्वशासनात्। ककारेऽकार उच्चारणार्थः। क्ङितोर्हीत्त्वमुच्यते, अयं तु गित्। यद्येवं जिष्णुर्भूष्णुरित्यत्र गुणः प्राप्नोति? ----गुणाभावस्त्रिषु स्मार्यः। गित् कित् ङिदिति त्रिषु गुणाभावः स्मर्तव्यः; `क्ङिति च' इत्यत्र गकारप्रश्लेषात्। इह तर्हि भूष्णुरिति `श्र्युकः किति' इतीट्प्रतिषेधो न प्राप्नोति?----श्र्युकोऽनिट्त्वं गकोरितोः। श्र्युकः परस्य यदनिट्त्वं तद्गकारककारयोर्द्वयोरपीतोर्भवति, न केवलं ककारे; तत्रापि गकारस्य चर्त्वभूतस्य निर्द्देशात्। यद्येवम्, चर्त्वस्यासिद्धत्वाद् `हशि च' इत्युत्वं प्राप्नोति? सौत्रो निर्द्देशः, असंहितया वा निर्द्देशः करिष्यते छन्दसि। दंक्ष्णवः पशव इति। क्स्नोर्गित्त्वादुपधालोपाभावः।।

त्रसिगृधिधृषिक्षिपेः क्नुः।। 3.2.140 ।।

त्रसिगृधिधृषिक्षिपेः क्नुः।। त्रस्नुरिति। `नेड्वशि कृति' इतीट्प्रतिषेधः।।

शमित्यष्टाभ्यो घिनुण्।। 3.1.141 ।।

शमित्यष्टाभ्यो घिनुण्।। इतिशब्द आद्यर्थे इति। अनेकार्थत्वान्निपातानाम्। तत्र `शम्' इति आदिर्येषामिति बहुव्रीहौ सुपो लुक्, `शमु उपशमने',`तमु काङ्क्षायाम्',`दमु उपसमने',`श्रमु तपसि खेदे च',`भ्रमु अनवस्थाने',`क्षमूष् सहने',`क्लमु ग्लानौ',`मदी हर्षे'। उकार उच्चारणार्थ इति। नानुबन्धः, अनुबन्धे हि सति शमिनौ शमिन इत्यत्र `उगिदचाम्' इति नुम् प्रसज्येत;शमिनितरा, शमिनितमेत्यत्र नद्याः शेषस्यान्यतरस्याम् `उगितश्च' इत्यन्यतरस्यां ह्रस्वः स्यात्; `घरूपकल्पचेलड्' इति नित्यमिष्यते, तस्मान्नायमनुबन्धः, किं तूच्चारणार्थ इति व्याचक्षते। भाष्ये तु `अकार उगित्कार्यार्थोऽनुबन्ध एव' इति स्थितम्। तत्र ह्रस्वत्वं विकल्पेनेष्यते, न नित्यम्। नुम्विधौ तु झल्ग्रणमनुवर्त्तिष्यते, अझलन्तत्वान्न प्रविष्यति। शमीति। `नोदात्तस्य' इति वृद्धिप्रतिषेधः। उन्मादीति। ननु मादीत्यत्र चरितार्थमेतत्, उत्पूर्वात्त्वलंकृञादिसूत्रेण विशेषविहित इष्णुजेव प्राप्नोति, वाऽसरूपविधिना घिनुण् भविष्यति, ताच्छीलिकेषु वाऽसरूपविधिर्नास्तीत्येतत्तु प्रायिकमिति वक्ष्यते। असितेति। `असु क्षेपणे',तृन्नेव भवति।।

सम्पृचानुरूधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरामुषाभ्याहनश्च।।
3.2.142 ।।

सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रहदुहयुजाक्रीविविचत्यजरजभजातिचराचरामुषाभ्यहनश्च।।
`पुची संपर्के', रुधिर् आवरणे'; `अनो रुध कामे' इत्यस्य तु दैवादिकस्याग्रहणम्; पृचिना साहचर्यात्। अनुना सह पठितस्य दैवादिकस्य ग्रहणमित्यन्ये। `यम उपरमे',`यसु प्रयत्ने', `सृ गतौ',`सृज विसर्गे', देवृ देवने',`ज्वर रोगे',`क्षिप् प्रेरणे',`रट परिभाषणे',`वद व्यक्तायां वाचि',`दह भस्मीकरणे',`मुह वैचित्ये',`दुष वैकृत्ये',द्विष अप्रीतौ',`द्रुह जिघांसायाम्',`दुह प्रपूरणे',`युजिन् योगे',`क्रीडृ विहारे, `विचिर् पृथग्भावे',`त्यज हानौ',`रञ्ज रागे',`भज सेवायाम्',`चर गत्यर्थः, `मुष स्तेये',`हन हिसागत्योः'। परिदेविर्बूवादिरिति। गृह्यते इति सम्बन्धः। क्रीडार्तस्य तु ण्यन्तस्याग्रहणम्, अण्यन्तैः साहचर्यात्, प्रतिपदोक्तत्वाच्च। अत एव `दिव परिकूजन' इत्यस्य चौरादिकस्यापि न भवति। संपर्कीति। `चजोः कु घिण्ण्यतोः' इति कुत्वम्। येऽत्र संपूर्वाः तेषां द्वन्द्वं कृत्वा `सम एतेभ्यः' इति वक्तव्यम्, एवमाङ्पूर्वेषु परिपूर्वेषु च, एवं सिद्धे यत्प्रतिपदं पठति तस्यैतत्प्रयोजनम्---उपात्तादेव रूपाद्यथा स्यात्, उपसर्गान्तरयुक्तान्मा भूदिति।।

वौ कषलसकत्थस्रम्भः।। 3.2.143 ।।

अपे च लषः।। 3.2.144 ।।

प्रे लपसृद्रुमथवदवसः।। 3.2.145 ।।

प्रे लपसृद्रुमथवदवसः।। `रप लप व्यक्तायां वाचि',`सृ गतौ,'`द्रु गतौ', `मथे विलोडने'।।

निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ्।। 3.2.146 ।।

निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिधादिव्याभाषासूयो वुञ् ।। `णिदि कुत्सायाम्' `तृह हिसि हिंसायाम्',`क्लिश विबाधने',`खाद्द भक्षणे',`णश अदर्शने' ण्यन्तः, भाविना णिलोपेन निर्देशः, अकारस्त्वागन्तुकः। केचित्तु विनाशीति ण्यन्तमेव पठन्ति। क्षिपिरटी उक्तार्थौ, वदिर्ण्यन्तः, `भाष व्यक्तायां वाचि',असूयतिः कण्ड्वादियगन्तः।

अथ किमर्थ निन्दादिभ्यो वुञ् विधीयते, न `ण्वुल्तृचौ' इति ण्वुलैव सिद्धम्, तदेव रूपम्, स्वरोऽप्यसूयतिमेकं वर्जयित्वान्यत्र स एव; असूयतेस्तु ण्वुलि प्रत्ययात्पूर्वमुदात्तं स्यात्, वुञि तु `ञ्नित्यादिः' इति। तस्मादेवैकस्माद् वुञ् विधेयः, अन्येभ्यस्तु ण्वुलैव सिद्धम्, योऽयं तच्छीलादिषु तृन्विधीयते स बाधकः प्राप्नोति, वाऽसरूपविधिना ण्वुलपि भविष्यति, तत्राह---ण्वुलैव सिद्ध इति। तृजादयो न भवन्तीति। न केवलं ण्वुल्विषयमेव ज्ञापकम्, किं तर्हि? प्रत्ययमात्र विषयमित्यर्थः।।

देविक्रुशोश्चोपसर्गे।। 3.2.147 ।।

देविक्रुशोश्चोपसर्गे।। देवयतेरिति। दीव्यतेर्हेतुमण्णिजन्तस्य, `दिवि कूजने' इत्यस्य चुरादिण्यन्तस्य च।।

चलनशब्दार्थादकर्मकाद् युच्।। 3.2.148 ।।

चलनशब्दार्थादकर्मकाद् युच्।। चोपन इति। `चुप मन्दायां गतौ'। शब्दन इति। `शब्द शब्दने' चुरादिः, शब्दप्रातिपदिकाद्वा `तत्करोति' इति णिच्।।

अनुदात्तेतश्च हलादेः।। 3.2.149 ।।

अनुदात्तेतश्च हलादेः।। जुगुप्सन इति। `गुपादिष्वनुबन्धकरणमात्मनेपदार्थम्' इत्युक्तत्वाद् `अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति' इति समुदायस्यानुदात्तेत्वम्। तत्रासत्यादिग्रहणे तदन्तविधिः स्यात्, ततश्चात्र न स्यात्, अतस्तदन्तविधिर्मा बूदित्येवमर्थमादिग्रहणम्।।

जुचंक्रम्यदंद्रम्यसृगृधिज्वलशुचलषपतपदः।। 3.2.150 ।।

जुचंक्रम्यदंद्रम्यसृगृधिज्वलशुचलषपतपदः।। `जु' इति सौत्रो धातुः। गतिवचन इत्येके। वेगवचन इत्यन्ये। `क्रमु पादविक्षेपे',`द्रम हम्म मीमृ गतौ',`सृ गतौ',`गृधु अभिकांक्षायाम्',`ज्वल दीप्तौ',`शुच शोके',`लष इच्छायाम्',`शल हुल पत्लृ गतौ',`पद गतौ'।

ननु चात्र चंक्रम्यप्रभृतयः केचिच्चलनार्थः पदिस्त्वनुदात्तेत्, तेभ्यो यथायोगं पूर्वसूत्राभ्यामेव युच् सिद्धः, किमर्थमिह ग्रहणमित्यत्राह---चलनार्थानामित्यादि। प्रपूर्वः पदिः सकर्मकः। ज्ञापकार्थमिति। ज्ञापनं ज्ञापकम्, भाष्यकारप्रयोगादभावे ण्वुल्। अन्ये पदिग्रणं वर्णयन्तीति। भाष्यकारादयः। ते हि मन्यन्ते---सकर्मकात्पदेर्युचा न भवितव्यम्; अनिभाधानादिति। यथाह---पदिग्रहणमनर्थकमनुदात्तेतश्च हलादेरिरि सिद्धत्वात्? वासरूपनिवृत्त्यर्थ त्विति। ताच्छीलिके वाऽसरूपविधिर्नास्तीति निन्दादिसूत्रे तच्छीलादिषु कर्तृषु वाऽसरूपविधिना तृजादयो न भवन्तीति ज्ञापितम्। इह तु ताच्छीलिकेषु परस्परं वाऽसरूपविधिर्नास्तीति ज्ञाप्यते। अलंकर्तेति। एवमलंकृञास्तृन्न भवतीत्यर्थः। यथा तु पदिग्रहणं ज्ञापकं तथा दर्शयति----तथा हीति। उकञा विशेषविहितेनेति। `लशेषविहितेनेति। `लषपतपद' इत्यादिना। प्रायिकं चैतदिति। एतच्च `सूददीपदीक्षश्च' इत्यत्र वक्ष्यते। गन्तेति। गमेर्लषपतपदाद्युकञ्विषये तृन् भवति। विकत्थन इति। `वौ कषलष' इति घिनुण्विषयेऽनुदात्तेल्लक्षणो युज् भवति।।

क्रुधमण्डार्थेभ्यश्च।। 3.2.151 ।।

न यः।। 3.2.152 ।।

नयः।। `अय वय नय तय गतौ' इति नयतेरनुदात्तेत्त्वादेव युचः सिद्धत्वान्नतस्येदं ग्रहणम्, किं तर्हि? प्रतिषेध एवेति मत्वाऽऽ----यकारान्तादिति। पूर्वेणेति। `अनुदात्तेतश्च' इत्यादिना। क्नूयिता, क्ष्मायितेति। `क्नूयी शब्दे',`क्ष्मायी विधूनने'।।

सूददीपदीक्षश्च।। 3.2.153 ।।

सूददीपदीक्षश्च।। `षूद क्षरणे',`दीपी दीप्तौ',`दीक्ष मौण्ड्ये'।

ननुताच्छीलिकेषु वासरूपविधिर्नास्तीति ज्ञापितम्, तत्कथं वाऽसरूपेण युजिह प्राप्नोति? तत्राह---ताच्छीलिकेष्विति। प्रायिकत्वस्य चायमेव प्रतिषेधो लिङ्गम्, सर्वत्र वाऽसरूपविधेरभावे विशेषविहितेन रप्रत्ययेन बाधितत्वादेव युज् न भविष्यतीति प्रतिषेधोऽयमनर्थकस्स्यात्। तथा चेत्यादिना प्रायिकत्वस्य प्रयोजनं दर्शयति। नानेन प्रतिषेधेन युञ्रयोरेव समावेशो ज्ञाप्यते, यथा भाष्ये प्रतिभासः, किं तर्हि? ज्ञापकस्यैव प्रायिकत्वम्। तेन `गन्ता खेटं विकत्थनः' इत्यपि भवति। एतच्च पूर्वमेवोक्तम्।

अथ वा नन्द्यदिष्विति। योगविभागस्त्विदानीं वैचित्र्यार्थः।।

लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ्।। 3.2.154 ।।

लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ्।। अपलाषुकमिति। अशोभनमित्यर्थः। नन्वत्र विशेषविहितत्वाद् `अपे च लषः' इति घिनुणा भाव्यम्, अयं तु केवलेऽन्योपसर्गपूर्वे च लषौ चरितार्थः, वाऽसरूपविधिनोकञ् भविष्यति? ताच्छीलिकेषु वाऽसरूपविधिर्नास्तीत्येतत्तु प्रायिकमित्युक्तम्। आघातुकं पाकलिकस्य मूत्रमिति। पाकलो नाम गजानां व्याधिविशेषः, स यस्यास्ति स पाकलिकोः, `द्वन्द्वोपतापगर्ह्यात्' इतीनिरेव प्राप्नोति, व्रीह्यादिपाठान्न भवति। पाकलिको गजस्तस्य मूत्रं स्पृष्टमाघ्रातं वान्यान् गजान्हन्ति, एष तस्य स्वभावः। आगामुकं वाराणसी रक्ष आहुरिति। यः शापादिना रक्षोभूतः तं मोक्षार्थ वाराणसीं प्रत्यागमनशीलमाहुरित्यर्थः।।

जल्पभिक्षकुट्टलुण्टवृङः षाकन्।। 3.2.155 ।।

जल्पभिक्षकुट्टलुण्टवृङः षाकन्।।`जल्प जप व्यक्तायां वाचि', `भिक्ष याच्ञायाम्',`कुट्ट छेदने' `लुण्ठ स्येये----चौरादिकौ, `वृङ् सम्भक्तौ'।।

प्रजोरिनिः।। 3.2.156 ।।

प्रजोरिनिः।। इनेरिकारो नकारस्येत्संज्ञा मा भूदिति।।

जिद्दक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च।। 3.2.157 ।।

जिद्दक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च।। `जी जये' जि अभिभवे'---द्वयोरपि ग्रहणम्, `दृङ् आदरे',`श्रिञ् सेवायाम्',`इण् गतौ,`टुवम् उद्गमने',`व्यथ भयचलनयोः' नञ्पूर्वः, नञः कृतलोपस्य निर्द्देशः, निपातनाच्च नञो धातुना समासः, ततो वलोपः, ततः प्रत्ययः। `अम रोगे',`भू सत्तायाम्'। द्वयोरपि ग्रहणमिति। `क्षिष् हिंसायाम्' इत्यस्य तु सानुबन्धकत्वादग्रहणम्। षू प्रेरण इत्यस्य ग्रहणमिति। `षूङ् प्राणिगर्भविमोचने'`षूङ् प्राणिप्रसवे' इत्येतयोस्तु सानुबन्धकत्वादग्रहणम्। प्रजोरप्यत्रैव ग्रहणं कर्तव्यम्, एवं हि चकारो न वक्तव्यो भवति? तथा तु न कृमित्येव।।

स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्।। 3.2.158 ।।

स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्.। चुरादावदन्ताः पठ्यन्त इति। तेन णौ कृतस्यातो लोपस्य स्थानिवद्भावात्पतयतेः `अत उपधायाः' इति वृद्धिर्न भवति, स्पृहयतिगृहयत्योश्च लघूपधगुणो न भवतीति भावः। श्रत्पूर्वो धाञिति। धेटस्तु श्रत्पूर्वस्याप्रयोग एव। अथ किमर्थमालुज्विधीयते, न लुजेवोच्येत? का रूपसिद्धिः? स्पृहयालुः शपि कृते `अतो दीर्घो यञि' इति दीर्घो भविष्यति? तत्र हि `तुरुस्तुशम्यमः सार्वधातुके' इति सार्वधातुकग्रहणमनुवर्तते, न तु तिङ्ग्रहणम्, लकारस्येत्संज्ञाप्रयोजनाभावान्न भविष्यति, यकारादित्वाद्वा। किं यकारो न श्रूयते? लुप्तनीर्दिष्टो यकारः, एवमपि श्रद्धालुर्न सिद्ध्यति, कथम्? शपः श्लुर्द्विर्वचनम्, `श्नाभ्यस्तयोरातः' श्रद्दध्लुरिति प्राप्नोति? अथापि `संज्ञापूर्वको विधिरनित्यः' इति द्विर्वचनं न प्रवर्तिष्यत इत्युच्येत? एवमपि ज्ञापनार्थमालुज् विधीयते, एतज् ज्ञापयति---यत्रालुचैव रूपसिद्धिस्ततोऽप्ययं भवतीति। तेनालुचि शीङो ग्रहणमित्येतन्न वक्तव्यं भवति।।

दाधेट्सिशदसदो रुः।। 3.2.159 ।।

दाधेट्सिशदसदो रुः।। `गामादाग्रहणेष्वविशेषः' इति दारूपाणां यथाभिधानं ग्रहणम्। धेट् पाने, `षिञ् बन्धने', `शद्लृ शातने',`षद्लृ विशरणगत्यवसादनेषु।।

सृघस्यदः क्मरच्।। 3.2.160 ।।

सृघस्यदः क्मरच्।। घसिः प्रकृत्यन्तरमस्ति।।

भञ्चभासमिदो घुरच्।। 3.2.161 ।।

भञ्चभासमिदो घुरच्।।`भञ्चो आमर्दने',`भासृ दीप्तौ,'`ञिमिदा स्नेहने'।।

विदिभिदिच्छिदेः कुरच्।। 3.2.162 ।।

विदिबिदिच्चिदेः कुरच्।। न लाभार्थस्येति। ज्ञानार्थस्येदमुपलक्षणं न लाभार्थस्येत्यर्थः। कुत इत्याह---स्वभावादिति। तेन `लुग्विकरणालुग्विकरणयोरित्येतदपि न प्रवर्तत इत्यर्तः। विदिभिदिच्छिदेर्ङिदिति प्रकृतस्यैव घुरचो ङित्त्वातिदेशेनैव सिद्धे `प्रत्ययान्तरकरणमातिदेशिकं ङित्त्वमनित्यम्' इति ज्ञापनार्थम्। तेन `धू विधूनने' कुटादिः, ततः `अर्त्तिलूधू' इतीत्रप्रत्ययो कृते ङित्कार्य न भवति। केचितु---धुवित्रमित्येवेच्छन्ति, प्राणा वै धुवित्राणीति छान्दसं तदनुसारेण कल्पसूत्रेषु प्रयोगः। कर्मकर्त्तरीति। माघस्तु शुद्धे कर्तरि प्रयुङ्क्ते---`गुरुमत्सरच्छिदुरया दुरयाचितमङ्गना' इति।।

इण्नश्जिसर्त्तिभ्यः क्वरप्।। 3.2.163 ।।

इण्नश्जिसर्त्तिभ्यः क्वरप्।। क्वरपः पकारः स्वरार्थः, तुगर्थश्च। इत्वरीति। `टिड्ढाणञ्' इत्यादिना ङीप्।।

गत्वरश्च।। 3.2.164 ।।

जागरूकः।। 3.2.165 ।।

यजयपदशां यङः।। 3.2.166 ।।

नमिकम्पिस्म्यजसकमहिंसदीपो रः।। 3.2.167 ।।

नमिकम्पिस्म्यजसकमहिंसदीपो रः।। अजसेत्यकार आगन्तुकः। क्रियासातत्ये इति। क्रियाणामविच्छेदेन प्रवृत्तिः===क्रियासातत्यम्। कथं तर्हि अग्निषु प्रयोगः----अजस्रानजुहूत इन्धीरन्निति, आधानाद् द्वादशरात्रमजस्रा इति? अत्राप्यजस्रजागरणादजस्राः।।

सनाशंसभिक्ष उः।। 3.2.168 ।।

सनाशंसभिक्ष उः।। न सनिर्धातुरिति। `षणु दाने' `वन षण संभक्तौ' इति च धातुर्न गृह्यते, कुतः? गर्गादिषु विजिगीषुशब्दस्य पाठात्। न शंसेः स्तुत्यर्थस्येति। एतदाङा सह निर्द्दशाद्विजायते---इच्छार्थो हि स तेन सह पठ्यते, न स्तुत्यर्थः।।

विन्दुरिच्छुः।। 3.2.169 ।।

विन्दुरिच्छुः।। विदेरिति। ज्ञानार्थस्य ग्रहणं नेतरेषाम्, अभिधानात्, निपातनाद्वा। बिन्दुशब्दस्तु पवर्गादिः `बिदि अवयवे' इत्यस्मादौणादिके `मृगय्वादयश्च' इत्युप्रत्यये भवति। वकारस्यच्छन्दसि पक्षे भकार इष्यते---वैश्वदेवा भिन्दव इति। इषेरिति। `इषु इच्छायाम्' इत्यस्य। `इषु गतौ' `इष `आभीक्ष्ण्ये' इत्येतयोस्तु पूर्ववदग्रहणम्।।

क्याच्छन्दसिः।। 3.2.170 ।।

क्याच्छन्दसिः।। क्य इति क्यच्क्यष्कयङां सामान्येन निर्देश इति। सूत्रे वृत्तौ च ककारानुबन्धवतो धातुसंज्ञानिमित्तस्य प्रत्ययस्योपलक्षणात् कण्ड्वादियकोऽपि ग्रहणम्, तेन भुरण्युः तुरण्यवोऽङ्गिरसो नक्षत्रसपर्येम सपर्यव इत्यादि भवति। भाषायां च सुम्नयुशब्द उणादिषु मृगय्वादिषु पाठाद् द्रष्टव्यः। मित्रयुरिति। `क्यचि च' इतीत्वम्, `अकृत्सार्वधातुकयोः' इति दीर्घत्वं च न भवति, `न छन्दस्यपुत्रस्य' इति निषेधात्।।

आद्दगमहनजनः किकिनौ लिट् च।। 3.2.171 ।।

आद्दगमहनजनः किकिनौ लिट् च।। किकिनौ लिट् चापरार्थे प्रयुज्यमानाः शब्दा वतिमन्तरेणापि वत्यर्थ गमयन्ति, गौर्वाहीक इतिवदित्याह---लिड्वच्च तौ भवति इति। किकिनौ भवतः, लिट् च प्रत्ययो भवतीत्ययं त्वर्थो न भवति; तथा हि सति `लिट् किकिनः' इत्येव ब्रूयात्। कार्यातिदेशश्चायम्। यद्येवम्, `लः परस्मैपदसंज्ञा किकिनोः स्यात्, ततश्च देङ्दङादिभ्य आत्मनेपदिभ्यो न स्याताम्। न लकारस्य परस्मैपदसंज्ञा, किं तर्हि? तदादेशानाम्, न चैतावादेशौ। एवमपि भावकर्मकर्तृषु त्रिष्वपि लिड्वद्भावात्किकिनौ प्राप्नुतः? नैषः;उत्पन्नयोर्लिट्कार्यमतिदेश्यम्। उत्पत्तिश्च तयोः कर्त्तर्येव भवति; `कर्तरि कृत्' इत्यनेनास्यैकवाक्यत्वात्। अनभिधानाद्वा भावकर्मणोर्न भविष्यतः। वर्तमानाधिकाराच्च वर्तमाने किकिनोर्विधानमिति भूतकालतापि विरोधान्नातिदिश्यते। स्वरूपाबाधेन च कार्यादिदेशः प्रवर्तत इति तिबादीनां कानच्क्वस्वोश्चाभावः। आदिति दकारो मुखसुखार्थ इति। आदित्ययं दकारः, स च मुखसुखार्थ इत्यर्थः। न त्वयं तपर इति। तश्चासौ परश्च तपरो नायमकारात्परस्तकारो जश्त्वेन निर्द्दिष्ट इत्यर्थः। किं कारणमित्याह---मा भूदिति। तकारो मुखसुखार्थ इति पाठे तु आदित्ययं तकारः स मुखसुखार्थः, न तु तपरकार्यसम्पादनार्थ इत्यर्थः। पपिः सोममिति। `न लोकाव्यय' इति षष्ठीप्रतिषेधो लिटः कार्यमिति सोमशब्दाद् द्वितीया। ततुरिरिति। `बहुलं छन्दसि' इत्युत्वम्। `द्विर्वचनेऽचि' इति स्थानिवद्भावात् `तॄ' इत्येतद् द्विरुच्यते। जज्ञिरिति। `गमहन' इत्युपधालोपः, चुत्वम्।

तद्बाधनार्थ कित्त्वमिति। अर्तेर्ऋकारान्तानां च किकिनोर्गुणो मा भूदित्येवमर्थमित्यर्थः।

उत्सर्ग इति। धातुमात्राद्विधानं कर्तव्यमित्यर्थः। कस्मादित्यत्राह---सदादिभ्यो दशनादिति। सेदिः नेमिरिति। सदेर्नमेश्चैत्वाभ्यासलोपौ। सहिवहित्यादि। अत्र भाषायामित्यपेक्ष्यते। पापतिरिति। `नीग्वञ्चु' इत्यादिना नीगागमः प्राप्तः सासहिवावहिचाचलिपापतीनां निपातनम्' इति वार्त्तिककारवचनान्न भवति। इदं तु वृत्तौ पठितं वाक्यम्। अपर आहेति भाष्ये पठितम्, तत्रापि भाष्यकारवचनान्नीगभावः। उक्तं हि तेन---तान्येवोदाहरणानीति।।

स्वपितृषोर्निजिङ्।। 3.2.172 ।।

शृवन्द्योरारुः।। 3.2.173 ।।

भियः क्रुक्लुकनौ।। 3.2.174 ।।

स्थेशभासपिसकसो वरच्।। 3.2.175 ।।

स्थेशभासपिसकसो वचच्।। ईश्वर इति। `नेड्वशि कृति' इतीट्प्रतिषेधः। स्त्रियामीश्वरा। विन्यस्तमङ्गलमहौषधिमीश्वरायाः। `ईश्वरीं सर्वभूतानाम्' इति तु छान्दसः। औणादिको वरडित्यन्ये। `पुंयोगादाख्यायाम्' इत्यन्ये। `अन्येभ्योऽपि दृश्यन्ते' इति क्वनिपि `वनो र च' इति ङीब्रावीत्यन्ये।।

यश्च यङः।। 3.2.176 ।।

यायावर इति पूर्ववदिटि प्रतिषिद्धे `अतो लोपः',`लोपो व्योर्वलि',`अल्लोपस्य स्थानिवत्त्वादाल्लोपः प्राप्तो वरे कृतस्य स्थानिवत्त्वनिषेधान्न भवति।।

भ्राजभासधुर्विद्यु तोर्जिपृजुग्रावस्तुवः क्विप्।। 3.2.177 ।।

भ्राजभासधुर्विद्यु तोर्जिपृजुग्रावस्तुवः क्विप्।। `भ्राजृ दीप्तौ',`भासृ दीप्तौ',`तुर्वी थुर्वी धुर्वी हिंसायाम्',`द्युत दीप्तौ',`उर्ज बलप्राणनयोः',`पृ पालनपूरणयोः',`जु' इति सौत्रो धातुः,`ष्टुञ् स्तुतौ' ग्रावपूर्वः।

जवतेर्दीर्घत्वं चेति। केचिदाहुः---सूत्रे `जू' इति दीर्घः पठितव्य इति। विध्य न्तरोपसंग्रहार्थं दृशिग्रहणमुत्तरसूत्रादपकृष्टव्यमित्यन्ये। ग्रावस्तुदिति। ग्रावशब्दः सप्तमीनिर्देशाभावेऽप्युपपदसंज्ञ इष्यते। अन्ये तु सूत्रनिर्देशाद्धातुनैव समासे पश्चात्क्विपं कुर्वन्ति।।

अन्येभ्योऽपि दृश्यते।। 3.2.178 ।।

अन्येभ्योऽपि दृश्यते।। विध्यन्तरोपसंग्रहार्थमिति। दृशिग्रहणे सति यथा क्विबन्ता धातवो दृश्यन्ते, तथैव तेऽनुगन्तव्या इत्यर्थो भवति। एवं च ते तथानुगता भवन्ति यदि यथायोगं द्विर्वचनादयो--भवन्ति। विध्यन्तरमेव दर्शयतिक्वचिदिति। तथा चाहेति। वार्त्तिककारः। आयतं स्तौत्यायतस्तूः। कटं प्रवते कटप्रूः। दिद्युदिति। `द्युतिस्वाप्योः सम्प्रसारणम्' इत्यभ्यास्य सम्पसारणम्। कथं पुनरभ्याससंज्ञा, यावता प्रत्यासत्तेः षाष्ठिक एव द्विर्वचने सा विधीयते, अत एवाष्टमिके न भवति? एवं तर्हि दृशिग्रहणादेव सम्प्रसारणम्, अभ्याससंज्ञा च द्रष्टव्या। जगदिति। `गमः क्वौ' इति मलोपः। अत्रापि पूर्ववदेxxxxxxसकार्यम्।

द्वे चेति चकारेण दीर्घः समुच्चीयमानो दीर्घश्रुत्या `अचश्च' इत्युपस्थानादचा च तदन्तविध्याश्रयणाज्जुहोतेरेवाजन्तस्य विज्ञायते, न द्युतिगम्योरित्याह---जुहोतेर्दीर्घित्वं चेति। जुहूरिति। करणस्यात्र कर्तृत्वविवक्षा।

धीरित्यत्रापि करणस्यैव कर्तृत्वविवक्षा, पुरुषो हि ध्यायति, न धीः।।

भुवः संज्ञान्तरयोः।। 3.2.179 ।।

भुवः संज्ञान्तरसोः।। धनिकाधमर्णयोरिति। यस्मै ऋणं धार्यते स धनिकः, यो धारयति सोऽधमर्णः, तयोरन्तरे मध्ये यस्तिष्ठति विश्वासार्थ स प्रतिभूरित्युच्यते। ग्रामयोरन्तरे यस्तिष्ठति तत्र न भवति। एतच्च दृशिग्रहणानुवृत्तेर्लभ्यते। यद्येबम्, संज्ञेयं भवति, तत्र `संज्ञायाम्' इत्येव सिद्धम्? अत्राहुः-----यावद्भव्यभाविन्यः संज्ञा भवन्ति, प्रतिभूशब्दस्तु सत्येव तस्मिन्नृणप्रतिदाने निवर्तते।।

विप्रसंभ्यो ड्वसंज्ञायाम्।। 3.2.180 ।।

विप्रसंभ्यो ड्वसंज्ञायाम्।। मितद्रवादिभ्य इति। मितादिपूर्वेभ्यो धातुभ्य इत्यर्थः। शम्भुरिति। अन्तर्भावितण्यर्थोऽत्र भवतिः।।

धः कर्मणि ष्ट्रन्।। 3.2.181 ।।

धः कर्मणि ष्ट्रन्।। कर्मणि कारक इति। उपपदं तु कर्म न स्मभवति, यदि स्यात् `कर्मण्यण्' इत्यस्मिन्नेव प्रकरणे ष्ट्रनं विदध्यात्। ननु चोत्तरसूत्रे पुनः ष्ट्रन्ग्रहणं कर्त्तव्यं स्यात्, अस्तु लघीयो हि कर्मग्रहणात्ष्ट्रन्ग्रहणम्। न चेह वर्त्तमानकाले ष्ट्रन्प्रत्ययः, धात्रीत्युक्ते क्रियाकारकसम्बन्धमात्रं गम्यते। अतः `कर्मणि' इति प्रत्ययार्थ एव, नोपपदम्।।

दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे।। 3.2.182 ।।

दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे।। दाप् लवन इति। `दैप् शोधने' इत्यस्य त्वग्रहणम्, अनभिधानात्। युजिर्योग इति। `युज समाधौ' इत्यस्य तु पूर्ववदेवाग्रहणम्, अनभिधानात्। युजिर्योग इति। `युज समाधौ' इत्यस्य तु पूर्ववदेवाग्रहणम्। करणे कारके इति। उपपदं तु करणं न भवति, अजादिषु दंष्ट्राशब्दस्य पाठात्। अत एव च पाठात्सूत्रेऽनुनासिकलोपेन निर्द्देशेऽपि ष्ट्रनि न भवति ल्युट्चेव तु भवति। योऽत्र सेट् ततः `तितुत्र' इत्यादिनेट्प्रतिषेधः।।

हलसूकरयोः पुवः।। 3.2.183 ।।

हलसूकरयोः पुवः।। तच्चेत्करणं हलसूकरयोरवयवो भवतीति। एतेन हलसूकरयोरभिधेयत्वमुपपदत्वं च निरस्यति। मुखमुच्यते इति। नान्यः कर्णादिः। एतदपि स्वभावादेव लभ्यते।।

अर्त्तिलूधूसूखनसहचर इत्रः।। 3.2.184 ।।

अर्त्तिलूधूसूखनसहचर इत्रः।। इकारोपदेशः `तितुत्र' इति `एकाचः' इति च यथायोगमिट्प्रतिषेधो मा भूदिति। स्वरार्थश्च, इटि हि सत्यागमानुदात्तत्वं स्यात्, इका तु प्रत्ययाद्युदातद्तत्वम्।।

पुवः संज्ञायाम्।। 3.2.185 ।।

पुवः संज्ञायाम्।। बर्हिष्पवित्रमिति। बर्हिषा कृतं बर्हिषः पवित्रं भवति, तत्र षष्ठीसमासः, `नित्यं समासेऽनुत्तरपदस्थस्य' इति षत्वम्। येनाज्यमुत्पूयते तत्पवित्रम्। अनामिकायाश्चाङ्गुलेर्वेष्ठनं जपादिषु।।

कर्त्तरि चर्षिदवतयोः।। 3.2.186 ।।

कर्त्तरि चर्षिदेवतयोः।। ऋषौ करणे इति। ऋषिः==वेदमन्त्रः, `तदुक्तमृषिणा' इति दर्शनादित्याहुः।।

ञीतः क्तः।। 3.2.187 ।।

ञीतः क्तः।। भूते निष्ठा विहितेत्यादि। तत्र येननाप्राप्तिन्यायेन क्तस्यैव वर्त्तमानविषयतया भूतविषयता बाध्यते, यथा---`वडवाया वृषे वाच्ये' इत्यत्र वक्ष्यते---अपत्ये प्राप्तस्ततोऽपकृष्य वृषे विधीयत इति। एवमुत्तरविहितस्यापि। ज्ञातमित्येतत्तु भूतेऽपि भवति, तेनेत्यधिकारे उपज्ञात इति तद्धितविधानात्। वर्त्तमाने

हि `क्तस्य च वर्त्तमाने' इति षष्ठ्या भाव्यम्। एवं च `पूजितो यः सुरैरपि' इत्यादीनां साधुत्वं चिन्त्यम्।।
मतिबुद्धिपूजार्थेभ्यश्च।। 3.2.188 ।।
मतिबुद्धिपूजार्थेभ्यश्च।। मतिरिच्छेति। बुद्धेः पृथगुपादानाद् बुद्धिर्न गृह्यते। मत इति। `अनुदात्तोपदेश' इत्यनुनासिकलोपः।
शीलित इत्यादि। `शील समाधौ',`रक्ष पालने',`क्षमूष् सहने',`क्रुश आह्वाने रोदने च',`जुषी प्रीतिसेवनयोः',`रुष रोषे',`ह्वञ् हरणे';`हृषु अलीके',`हृष् तुष्टौ' इति वा; `तुष तुष्टौ',`कमु कान्तौ',`यम उपरमे',`कष हिंसायाम्' मृङ् प्राणत्यागे'। तत्राद्यौ सेटौ, उदितामुदितां च `यस्य विभाषा' इतीट्प्रतिषेधः, ईदितः `श्वीदितो निष्ठायाम्' इति। हृष्ट इति। `हृषेर्लोमसु' इति। कषेः `कृच्छ्रगहनयोः कषः' इति। रुषेः `रुष्यमत्वरसंधुषास्वनाम्' इति विकल्पः।
सुप्त इति। सुपेः `त्रीतः क्तः' इत्येव सिद्धे नजिङा तच्छीलादिषु बाद्या मा भूदिति समुच्चीयते। क्वचित्तु सृप्त इति पठ्यते।।
इति श्रीहरदत्तमिश्रविरचितायां पदमञ्चर्यो
तृतीयस्याध्यायस्य द्वितीयः पादः।।
----*****----

## 3.3

अथ तृतीयाध्याये तृतीयः पादः
उणादयो बहुलम् ।। 3.3.1 ।। पदमञ्जरी
वर्तमाने इत्येवेति । `वर्त्तमाने लट्' इत्यतो वर्त्तमानग्रहणानुवृत्तेरविच्छेदमेवकारेण दर्शयति । संज्ञायामिति चेति । `पुवः संज्ञायाम्' इत्यतः ।।
`उणादयः' इत्येव सूत्रमुणादीनां शास्त्रान्तरपरिपठितानां साधुत्वानुज्ञानार्थमस्तु, किं बहुलग्रहणेन ? तत्राह---बाहुलकमिति । `ला आदाने', बहूनर्थान् लाति---बहुलम्, तस्य भावो बाहुलकम्, मनोज्ञादित्वाद् वुञ् । तत्पुनर्बह्वर्थादानं बहुलशब्दप्रवृत्तिनिमित्तम् । बहवः पुनरर्थाः---क्वचित्प्रवृत्तिः, क्वचिदप्रवृत्तिरिति वक्ष्यमाणलक्षणाः । प्रकृतेरिति । जातावेकवचनम् । तनुशब्दोऽत्र वृत्तिविषये गुणमात्रवचनः । प्रकृतीनां तानवमल्पत्वं दृष्ट्वा तद्बाहुलकमुक्तम्, तेनापठिताभ्योऽपि प्रकृतिभ्य उणादयो भवन्ति, यथा---हृषेरुलजुक्तः शकेरपि भवति---शङ्कुलेति । तथा तेषामुणादीनां पञ्चपाद्यां प्रायेण समुच्चयनं कृतम्, न तु साकल्येन; बहुलवचनात्त्वविहिता अपि भवन्ति, यथा---अर्तेः फिडफिड्डौ भवतः---ऋफिडः, ऋफिड्ड इति ।
कार्यसशेषविधेश्च । कार्याणि च सशेषाणि विहितानि न निः शेषाणि । बहुलवचनात्त्वविहितान्यपि भवन्ति । `षणु दाने', `ञमन्ताड्डः', `धात्वादेः पः स' इति सत्वं न भवति, कृते वा सत्वे षत्वं भवति । स्यादेतत्---यावत्यः प्रकृतयः पञ्चपाद्यामुपात्ताः, यावन्तश्च प्रत्ययाः, यावन्ति च कार्याणि विहितानि तावन्त्येव भवन्तु, मा भूदन्येषां बहुलग्रहणेन संग्रह इति ? तत्राह---नैगमरूढिभवं हि सुसाध्विति । निगमः=छन्दः, तत्र भवा नैगमाः ।
निगमशब्दस्थाथादिस्वरेणान्तोदात्त इति `बह्वचोऽन्तोदात्ताट्ठञ्' इति ठञि प्राप्ते ऋगयनादिपाठादण् । रूढिः=प्रसिद्धिः, तत्र भवा रूढिभवाः=संज्ञाशब्दाः, तेषां साधुत्वमनुपात्तानां प्रकृत्यादीनां बहुलग्रहणेन संग्रहे सति भवति, नान्यथा । हिशब्दो हेतौ । यस्मादेवं तस्माद्बाहुलकमुक्तमित्यर्थः ।
अन्यैरप्याचार्यैर्नैगमरूढिभवानां प्रकृत्यादिविभागेन व्युत्पादनं कृतम्, अतोऽस्माभिरपि तत्कर्त्तव्यमेवेत्यभिप्रायेणाह---नाम चेति । निरुक्तकारो हि यास्क आचार्यः स्वशास्त्रे निरुक्तैः सर्वमेव नाम धातुजमाह । तोकमित्यपत्यंनाम । शकटस्य तोकम् शाकटायनः । यन्नेति । पदमर्थः प्रयोजनमप्त्य व्युत्पाद्यत्वेनेति पदार्थः=प्रकृत्यादिः, पदार्थश्चासौ विशेषश्च पदार्थविशेषः, तस्मात्समुत्थितं पदार्थविशेषसमुत्थम् । यदेवंविधं न भवति, प्रकृत्यादिविशेषोपादानेनाव्युत्पादितमित्यर्थः, तद्धातुजत्वेनोह्यम् । कथमूह्यम् ? प्रत्ययतः प्रकृतेश्च । यत्र शब्दरूपे परभागः प्रत्ययत्वेन प्रसिद्धेन केनचित्सदृशः श्रुतः, तत्र तं भागं प्रत्ययं कल्पयित्वा परिशिष्टो भागः प्रकृतित्वेनोह्यते । `हृषेरुलच्' इति प्रत्ययं दृष्ट्वा शङ्किः प्रकृतिरूह्यते, तेन सिद्धं शङ्कुलेत्यस्य धातुजत्वम् । यत्र तु पूर्वो भागो धातुत्वेन प्रसिद्धेन केनचित्सदृशस्तत्र तं भागं प्रकृतिं कल्पयित्वा परिशिष्टो भागः प्रत्ययन्वेनोह्यः । यथा----ऋफिडः, ऋफिड्ड इति, फिडफिड्डौ प्रत्ययौ ।
स चायमूहोऽनादिप्रत्युक्तास्वेव संज्ञासु, न सर्वत्रेत्याह---संज्ञास्विति । कार्याद् गुणप्रतिषेधादिकाद् अनूबन्धं ककारादिकं विद्यात् । तेन फिडफिड्डौ कितावूह्यौ । एतदेवानन्तरोक्तमूहात्मकं शास्त्रमुणादिष्वनुक्तेषु ।।
भूतेऽपि दृश्यन्ते ।। 3.3.2 ।।
पूर्वत्र वर्तमानाधइकारादिति । तत्रैव वर्तमानग्रहणं न निवर्त्तितम्, बाहुल्येन वर्तमाने भवन्ति, क्वचिदेव भूते भवन्तीति किल विवेकप्रदर्शनायेति भावः । उदाहरणेषु `ताभ्यामन्यत्रोणादयः' इति संप्रदानापादानव्यतिरिक्ते कारके मनिन् प्रत्ययः, `नेड्वशि कृति' इतीट्प्रतिषेधः ।।
भविष्यति गम्यादयः ।। 3.3.3 ।।
यथा `स्यदो जवे' इत्युक्ते जवशब्दपर्यायः स्यदशब्दो भवति, तथेहापि भविष्यच्छब्दपर्याया गम्यादयः प्राप्नुवन्तीत्याशङ्क्याह---प्रत्ययस्यैवेत्यादि । प्रकृत्यर्थगता भविष्यत्कालता । प्रत्ययस्यैव द्योत्यत्वेन विधीयते, न पुनः प्रकृत्यर्थपरित्यागेन समुदायस्येत्यर्थः । न प्रकृतेरिति । न प्रकृतेरपीत्यर्थः । गम्यादिषु केचिदुणादयः, केचिदष्टाध्यायीगताः । गमी, आगामीति । `गमेरिनिः' `आङि णिच्च' इतीनिः । भावी, प्रस्थायीति । अस्मिन्नेवाधिकारे `भुवश्च' `प्रात्स्थः' इतीनिः, णित्त्वाद् वृद्धिर्युक्च । रुधिबुधियुधियातिभ्यः प्रतिपूर्वेभ्यो प्रहादिनिः । अस्मादेव निपातनादित्यन्ये । `सुप्यजातौ' इत्यन्ये । प्रतियोगीति ।

संपृचादिसूत्रेण घिनुणि `चजोः कु घिण्ण्यतोः' इति कुत्वम् । णिनि प्रत्यय एव न्यङ्क्वादिपाठादस्मादेव निपातनाद्वा कुत्वमित्यन्ये ।
अनद्यतन उपसंख्यानमिति । किं पुनः कारणं न सिद्ध्यति ? लृटायं निर्देशः क्रियते लृ
ट् चानद्यतने लुटा बाध्यते, तेन लुट एव विषये एते स्युः । न वा वाक्यार्थत्वाद् गम्यादयः शब्दा विशेषे यत्सामान्यं तदाश्रयेण प्रवर्त्तन्ते । अनद्यतनाख्यस्तु विशेषः श्वः शब्दमहिम्ना गम्यते । विशेषविवक्षायां तु लुडेव भवति---श्वो गन्ता ग्राममिति । वासरूपविधिना च लृडपि भवति । तेन भविष्यति, गमिष्यतीत्यादयः प्रयोगा उपपद्यन्ते ।।

यावत्पुरानिपातयोर्लट् ।। 3.3.4 ।।

`पुरा' इत्यविभक्तिको निर्देशः, कर्मधारयो वा । निपातनाद्विशेषणस्य परनिपातः । निपातौ चैतौ निश्चयं द्योतयतः । एतयोश्च प्रयोगे वर्त्तमाने लण्न भवति; भविष्यत्कालतया वर्त्तमानकालताया बाधनात् ।
यावद्दास्यतीति । यत्परिमाणमस्य `यत्तदेतेभ्यः परिमाणे वतुप्', `आ सर्वनाम्नः' इत्यात्वम् । पुरा व्रजिष्यतीति । `पृ पालनपूरणयोः' `भ्राजभास' इत्यादिना क्विप्, `उदोष्ठ्यपूर्वस्य' इत्युत्वम् । अस्य तृतीयान्तत्वं द्योतयितुं करणभूतयेत्युक्तम् । प्रतिपदोक्तत्वादेव निपातयोर्ग्रहणे सिद्धे निपातग्रहणं लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वज्ञापनार्थम् । तेन `आतां पुग्णौ' इत्यत्र लाक्षणिकरयाप्याकारान्तस्य पुग्भवति, `क्रीङ्जीनां णौ' क्रापयति, जापयतीति ।।

विभाषा कदाकर्ह्योः ।। 3.3.5 ।।

`अनद्यतने लुट्' इत्यत्राप्ययं योगोऽनुवर्त्तनीयः, तेन लुड्विषयेऽपि पक्षे लड् भवति । अत एव पक्षे लुडप्युदाहृतः । एतच्च पूर्वयोगेऽपि द्रष्टव्यम् । कर्हि भोक्ष्यते इति । ननु च कर्हिशब्दोऽनद्यतनविषयः, तत्प्रयोगे लुडेव भवितुमर्हति, न लृट्; न वा वाक्यर्थत्वात् । भोक्ष्यत इति पदं भविष्यत्सामान्ये वर्त्तते, अनद्यतनावगतिस्तु कर्हि-शब्दाधीना । न च वाक्यार्थः पदसंस्कार उपयुज्यते ।।

किवृत्ते लिप्सायाम् ।। 3.3.6 ।।

किमो वृत्तं किवृत्तमिति । वर्त्ततेऽस्मिन्निति वृत्तम्, `क्तोऽधिकरणे च' इत्यधिकरणे क्तः । अस्मादेव निपातनाद् `अधिकरणवाचिंना च' इति षष्ठीसमासप्रतिषेधाभाव, शेषषष्ठ्या वा समासः । यत्र किंशब्दोऽवयवत्वेन वर्त्तते तत्सर्वं किंवृत्तम् । ततश्च कीदृशः, किमीयः, किन्तरामित्यादावतिप्रसङ्गात्परिगणनम् । वृत्तग्रहणेनेति । तदिति शब्दरूपापेक्षं नपुंसकत्वम् । डतरडतमौचेति । डतरडतमान्तं किंशब्दरूपमित्यर्थः । कं भवन्तो र्भोजयितार इति । अस्यापि `अनद्यतने लुट्' इत्यत्रानुवृत्तिरिति भावः । एवमुत्तरेष्वपि योगेषु द्रष्टव्यम् ।।

लिप्स्यमानसिद्धौ च ।। 3.3.7 ।।

`लिप्स्यमानसिद्धौ' इति षष्ठीसमासः । वृत्तौ तु वस्तुमात्रमदर्शि । लिप्स्यमानात्सिद्धिरिति । अस्मादेव निपातनाद्वा पञ्चमीसमासः । लिप्स्यमानं भक्तादि तन्निमित्ता या स्वर्गादेः सिद्धिस्तस्यामित्यर्थः । ननु च यत्र लिप्स्यमानस्य सिद्धिर्गम्यते, लिप्सापि तत्र भवति, ततश्च पूर्वेणैव सिद्धं नार्थ एतेन ? तत्राह---अकिंवृत्तार्थोऽयमारम्भ इति । पूर्वसूत्रे किवृत्तग्रहणं लिप्स्यमानसिद्धिरहिते लिप्सामात्रे किंवृत्त एव यथा स्याद्, अकिंवृत्ते मा भूदित्येवमर्थम् ।।

लोडर्थलक्षणे च ।। 3.3.8 ।।

अध्ययनप्रैषस्येति । `कर्तृकरणे कृता बहुलम्' इत्यत्र साधनं कृतेति वा पादहारकाद्यर्थमिति वचनात्सप्तमीसमासः ।।

लिङ् चौर्ध्वमौहूर्त्तिके ।। 3.3.9 ।।

निपातनात्समास उत्तरपदवृद्धिश्चेति । ठञ्प्रत्ययश्चाध्यात्मादित्वात् । `बह्वचोऽन्तोदात्तात्' इत्यत्र तु `व्याख्यातव्यनाम्नः' इति वर्त्तते । उपाध्यायश्चेदागन्तेति । ऊर्ध्वमौहूर्त्तिकेऽनद्यतनत्वं सम्भवतीति चिन्त्यम् ।।

तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ।। 3.3.10 ।।

भिक्षिष्य इत्यस्य जटा इति । अत्र भिक्षणक्रियार्थत्वं जटानाम्, न तु क्रियात्वम्; द्रव्यत्वाज्जटानाम् । धावतस्ते पतिष्यति दण्ड इति । अस्त्यत्र धावनक्रियोपपदम्, न त्वसौ दण्डपातनार्थं धावति, किं तर्हि ? धावतोऽर्थात्पतिष्यति दण्डः । उद्दे शेन हि तादर्थ्यं विविच्यते, न तु हेतुत्वमात्रेण तादर्थ्यम् । अथेत्यादि चोद्यम् । परिहरति---लृटा क्रियार्थोपपदेनेति । तुमुना तु बाधो नाशङ्कनीयः; भिन्नार्थत्वात्---कर्त्तरि ण्वुल्, तुमुन् पुनर्भावे । कथम् ? `तुमर्थे सेसेन्' इत्यत्र तुमर्थग्रहणात् । यदि हि `कर्त्तरि कृत्' इति वचनात्कर्त्तरि तुमुन् स्यात्तद्वदेव सेसेन्प्रभृतयोऽपि कर्त्तरि भविष्यन्ति । अतस्तुमर्थग्रहणात्करत्तुस्तावदयमपकृष्यते । न चान्योऽर्थो निदिश्यते, अनिदिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ति । कश्च धातोः स्वार्थः ? भाव एव । लृट् तु यद्यपि भावकर्मणोश्चरितार्थस्तथापि क्रियायां क्रियार्थायामुपपदे भविष्यति काले च विधानाद्विसेषविहितः । ण्वुल्विधौ तु कर्त्तरीति न श्रूयते, अतोऽसौ विशेषविहितेन लृटा बाध्यते । अथ वा किं न एतेन विशेषविहित इति, द्वयोःसावकाशत्वेऽपि परत्वाल्लृट् ण्वुलं बाधेत । पुनश्चोदयति---वासरूपविधिनेति । परिहरति---एवं तर्हीति । नन्वसति प्रयोजने ज्ञापकं भवति, अस्ति चात्र प्रयोजनम्, किम् ? `अकेनोर्भविष्यदाधमर्ण्ययोः' इति षष्ठीप्रतिषेधो भविष्यदधिकारविहितस्याकस्य प्रयोगे यथा स्यात्, वर्षशतस्य पूरकः पुत्त्रपौत्त्राणां दर्शक इत्यत्र मा भूदिति ? एवं मन्यते---पदान्तरसन्निधानादत्र भविष्यत्कालत्वं गम्यते । यदा हि बालविषयमेतत्प्रयुज्यते तदा तस्यामवस्थायां वर्षशतपूरणस्य पुत्त्रपौत्त्रदर्शनस्य चासम्भवात्तावन्तमसौ कालं जीविष्यतीत्यर्थाद्गम्यते, न त्वत्र पदार्थो भविष्यत्कालत्वमिति । स्थिते त्वस्मिन् ण्वुल्विधाने `वषशतस्य पूरकः' इत्यादौ भविष्यत्कालस्य पदार्थत्वेऽपि न

दोष इत्यभिप्रायेण `अकेनोर्भविष्यदाधमर्ण्ययोः' इत्यत्रोक्तम्---भविष्यदधिकारविहितस्याकस्येदं ग्रहणम्, तेन वर्षशतस्य पूरकः पुत्त्रपौत्त्राणां दर्शक इत्यत्र न भवतीति ।।

भाववचनाश्च ।। 3.3.11 ।।

वक्तीति वचनः, `कृत्यल्युटो बहुलम्' इति कर्त्तरि ल्युट्, करण एव वा---भाव उच्यते येन स भाववचनः । अत्र पुरुषाः कर्त्तारः, भावाधिकारविहिता एव भाववचना भवन्तीत्याह---भाव इति प्रकृत्येति । तुमुना बाध्येरन्निति । लृट् तु भावकर्मकर्तृषु त्रिषु विधानादसमानार्थः । किञ्चि, धात्वर्थस्य सिद्धतायां घञादयः, शुद्धे तु धात्वर्थे लकारः, अतोऽप्यसमानार्थत्वम् ।

इह `भावे' इत्येतावद्वक्तव्यम्, एवमपि ह्युच्यमाने भावे ये विहितास्ते क्रियायां क्रियार्थायामुपपदे भवन्तीत्यर्थो लभ्यत एव, तदपार्थकं वचनग्रहणमिति मत्वा पृच्छति---अथेति । वाचका यथा स्युरिति । वचनग्रहणे हि सति भाववचनाः सन्तो घञादयोऽस्मिन्विषये भवन्तीत्यर्थो भवति, भावस्य वाचकाः सन्तो भवन्तीत्यर्थः । एतदेव प्रश्नपूर्वकं विवृणोति---कथं चेति । याभ्य प्रकृतिभ्य इति । इवर्णान्तेभ्योऽच्, ऋवर्णान्तेभ्य उवर्णान्तेभ्यश्चाबिति । एवम् येन विशेषणेनेति । `हस्तादाने चेरस्तेये', `श्रिणीभुवोऽनुपसर्गे' इत्यादिना । असामञ्जस्यम्=व्यतिकरः, अन्योऽन्यविषयावगाहनमिति यावत् । पाकायेत्यादौ `तुमर्थाच्च भाववचनात्' इति चतुर्थो ।।

अण् कर्मणि च ।। 3.3.12 ।।

चकारः सन्नियोगार्थ इति । अन्यथा पर्यायेण स्यात्---कदाचित्क्रियार्थायामेव क्रियायामुपपदे, कदाचित्कर्मण्येव केवले; वचनं तु भविष्यति काले कादीनामपवादानां बाधनार्थं स्यात् । चकारात्तु सन्नियोगार्थात्समुदायस्यैव प्रत्ययोत्पत्ति प्रति निमित्तत्वम् । उपपदसंज्ञा तु प्रत्येकमेव भवति; प्रत्येकं सप्तमीनिर्देशात् । तेन केवलस्यापि कर्मणः समासो भवति । काण्डलावो व्रजतीति । सोऽपवादत्वात् ण्वुलं वाधत इति । ण्वुल्विधाने च क्रियायां क्रियार्थायामुपपदे वासरूपेण तृजादयो न भवन्तीति ज्ञापितम्, न पुनरस्मिन् प्रकरणे वासरूपविधिर्नास्तीति । तेन योऽयम् `तुमुन्ण्वुलौ' इति ण्वुल्, सोऽस्याणो विषयेऽपि वासरूपविधिना भवत्येव---एधानाहारको व्रजतीति । तथा च `अकेनोर्भविष्यदाधमर्ण्ययोः' इति भविष्यदधिकारविहितस्याकस्य भविष्यति प्रयोगे कर्मणि षष्ठी प्रतिषिद्ध्यते । परत्वाच्च कादीनिति । ननु चापूर्वविधानात्प्रतिप्रसववचनस्य लाघवमस्तीति अण्विषय एव ण्वुलं बाधित्वाण स्यान्नापवादविषये ? एवं मन्यते---इह कर्मणीति न वक्तव्यं वचनग्रहणानुवृत्तेरेव यो वचनेऽण् सोऽस्मिन्विषये भवतीति वचनव्यक्तथा कर्मण्येवोपपदेऽण् सिद्धः, तत्र पुनः कर्मग्रहणं कर्ममात्रपरिग्रहार्थमित्यपवादविषयेऽपि भवतीति । एवं च परत्वादिति कोऽर्थः ? उत्कृष्टत्वादाधिक्यादित्यर्थः । अन्ये तु विप्रतिषेधमेव व्याचक्षते ।।

लृट् शेषे च ।। 3.3.13 ।।

शेषः क्रियार्थोपपदादन्य उच्यते इति । क्रिया क्रियार्थोपपदं यस्मिन् भविष्यति काले ततोऽन्यो भविष्यदित्यर्थः । चकारादिति । यदि तर्हि शेषे चाशेषे च भवति लृडित्येवास्तु, क्रियायां क्रियार्थायामिति निवर्त्तिष्यते, तेन सर्वत्र भविष्यति ? एवमपि शेष एव स्यात्, अशेषे तु तुमुन्ण्वुलौ बाधकौस्याताम् । वासरूपविधिना लृडपि भविष्यति । तदेतत् `शेषे च' इति वचनं चिन्त्यप्रयोजनम् । करिष्यामीति व्रजतीति । इतिशब्दः परस्परसम्बन्धज्ञापनार्थः ।।

लृटः सद्वा ।। 3.3.14 ।।

`लृटः' इति वचनं स्थानिनिर्देशार्थम्, अन्यथा सत्संज्ञकौ प्रत्ययौ स्वतन्त्रौ स्यातां न त्वादेशौ । अप्रथमासमानाधिकरणादिष्विति । आदिशब्देन `सम्बोधने च' `लक्षणहेत्वोः क्रियायाः' इत्यस्मिन्विषये, तथा `प्रत्ययोत्तरपदयोश्च'---करिष्यतोऽपत्यं कारिष्यतः, कारिष्यमाणिः, करिष्यतो भक्तिः करिष्यद्भक्तिः, करिष्यमाणभक्तिः, करिष्यन्ती भक्तिरस्य करिष्यद्भक्तिः, करिष्यमाणा भक्तिरस्य करिष्यमाणभक्तिः, करिष्यत्तरः, करिष्यमाणतरः, करिष्यमाणतमः, करिष्यद्रूपः, करिष्यमाणरूपः, करिष्यत्कल्पः, करिष्यमाणकल्पः । कथं `श्वोऽग्नीनाधास्यमानेन' इत्यनद्यतने शतृशानचौ भवतः ? उक्तोऽत्र परिहारः--- `व्यत्ययो बहुलम्' इति कालव्यत्ययेन लृट् । अथ वा---उत्तरत्रानद्यतन इति योगविभागः, `लृटः सद्वा' इत्येव अनद्यतने यो लृट् तस्यापि सत्संज्ञकौ भवतः । केन पुनरनद्यतने लृट् भवति ? एतदेव ज्ञापयति---भवत्यनद्यतने लृडिति, यदयमनद्यतने लृटः सत्संज्ञकौ शास्ति ।।

अनद्यतने लुट् ।। 3.3.15 ।।

अनद्यतन इति बहुव्रीहिनिर्द्देश इति । `अनद्यतने लङ्' इत्यत्रैवैतद्व्याख्यातं तत एवावधार्यम् ।

परिदेवने इति । परिदेवनम्=अनुशोचनम् । श्वस्तनीति । लुटः पूर्वाचार्यसंज्ञा । भविष्यन्त्यर्थ इति । भविष्यन्तीति लृटः संज्ञा, तस्या अर्थे भविष्यत्सामान्यइत्यर्थः । भावष्यदर्थ इति वा पाठः । भविष्यत्सामान्यरूपेऽर्थ इत्यर्थः । येवमिति । विलम्बितम् । अनभियुक्तः=परिचयरहितः ।।

पदरुजविशस्पृशो घञ् ।। 3.3.16 ।।

पद्यतेऽसाविति । करणस्यात्र कर्तृत्वेन विवक्षा । पदमित्येतत्तु `खनो घ च' इत्यत्र साधयिष्यते । रोग इति । `चजोः कु घिण्ण्यतोः' इति कुत्वम् । स्पृश उपतापे इति । उपतापः=रोगः ।।

सृस्थिरे ।। 3.3.17 ।।

`सृ' इत्यविभक्तिको निर्देशः । सर्त्तेरिति । `सृ गतौ', `ऋ सृ गतौ' इति द्वयोरपि ग्रहणम् । स्थिरे कर्त्तरीति । एतेन स्थिरग्रहणं प्रत्ययार्थस्य कर्त्तुर्विशेषणं नोपपदमिति दर्शयति । एतच्चार्धर्चादिषु सारशब्दपाठाद्विज्ञायते । ननु स्थिरशब्दस्तिष्ठतेर्गतिनिवृत्तिवाचिन उणादिषु करिच्प्रत्ययान्तो निपातितः, सत्तिस्तु

गतिवचनः, तत्कथं सरणस्य स्थिरकर्त्ता युज्यते ? इत्याह---स्थिर इति कालान्तरस्थायीत्यादि । यतः कालान्तरगमनं सम्भवति, ततश्च सर्त्तेर्धातोरर्थस्य कर्त्ता युज्यत इत्यर्थः । तिष्ठन्निति च हेतौ शतृप्रत्ययः । खदिरसार इति खदिरास्थि, तत् दृढत्वात् स्थिरम् । अतीसारो व्याधिरिति । शरीरान्तरावस्थितं रुधिरादिद्रव्यमतिशयेन सारयतीति कृत्वा । अन्तर्भावितण्यर्थोऽत्र सरतिः । `उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः । विसारो मत्स्य इति । विविधं सरतीति कृत्वा । सारो बलमिति । सारयति चेष्टयतीति कृत्वा । अत्राप्यन्तर्भावितण्यर्थः । सरतिः । बलवान्हि चेष्टते, सारशब्द उत्कर्षे पुंल्लिङ्गः, न्यायादनपेते नपुंसकलिङ्ग इति च दृश्यते ।।

भावे ।। 3.3.18 ।।

नित्यानामेव शब्दानां साङ्कर्यस्य निवृत्तये ।
अन्वाख्यानाद्भावशब्दे घञि नान्योऽन्यसंश्रयः ।।

राग इति । `रन्जेश्च' `घञि च भावकरणयोः' इति नलोपः । कथं पुनः पाकादिरुदाहरणं भवति, यावता भवतिनार्थनिर्देशः क्रियमाणोऽस्तिभवतिविद्यतिविषय एव कृतो भवति, न पचादिविषयः ? तत्राह---क्रियासामान्यवाची भवतिरिति । सत्ताख्यं सामान्यमपि भवतिना साध्यत्वेनाभिधीयत इति क्रियासामान्यवाची भवतिर्भवति । तेनार्थनिर्द्देशः क्रियमाण इति । हेतौ शानच्, यस्मात्सामान्यवाचिनार्थनिर्देशः क्रियते, न विशेषवाचिना पचादिना; तस्मात्सर्वधातुविषयः कृतो भवति सामान्यस्य, सर्वेष्वे विशेषेषु भावात्, षण्डादिषु गोत्ववत् विशेषरूपाश्रयनिषेधस्याभावाच्च । इह भावो धात्वर्थः, स च पूर्वापरीभूतोऽपरिनिष्पन्नः, तस्य घञ्वाच्यस्य कथं लिङ्गसङ्ख्यायोग इत्याह---धात्वर्थश्चेति । यथा पचति पाचक इत्यादौ प्रकृतिभागेन क्रियोच्यते, प्रत्ययभागेन तु तदीयं साधनम्; तथा पाकादिषु प्रकृतिभागः साध्यरूपमर्थमाह, प्रत्ययभागस्तु तस्यैव सिद्धरूपतां द्रव्यधर्मैर्लिङ्गसङ्ख्याकारकशक्तिभिः सम्बन्धयोग्यमाकारमाहेत्यथः । उक्तं च---

आख्यातशब्दे भागाभ्यां साध्यसाधनवर्त्तिता ।
प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः ।।
साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।
सत्त्वभावस्तु यस्तस्याः स घञादिनिबन्धनः ।। इति ।।

बहुवक्तव्योऽयमर्थः । इह `भावे' इति पुंल्लिङ्गेनायं निर्देशः क्रियते, एकवचनेन च तत्र पुंल्लिङ्ग एव, भावे एकवचन एव च प्रत्ययाः स्युर्न लिङ्गान्तरे, न च सङ्घ्यान्तरे; ततश्च `स्त्रियां क्तिन्' इत्यत्र स्त्रियां भाव इति सामानाधिकरण्येन सम्बन्धासम्भवात्---स्त्रियामकर्त्तरि कारके क्तिन् प्रत्ययः स्यात्, भावे तु पुंसीव `नपुंसके भावे क्तः' इत्यत्र `अकर्त्तरि च कारके' इत्यस्य निवृत्तत्वान्नपुंसके कर्त्तरि क्तः स्याद्भावे तु पुंसि, द्वित्वबहुत्वयोश्च पाकौ पाका इत्यादौ प्रत्यया न स्युरित्यत आह---पुंल्लिङ्गमेकवचनं चातन्त्रमिति ।।

न विना लिङ्गसङ्ख्याभ्यां सत्त्वभूतोऽर्थ उच्यते ।
इत्यतन्त्रमुपादानं तयोर्न तु विवक्षितम् ।।
धान्यार्थिनामुपादानं पलालादेर्यथा मतम् ।
शब्दसंस्कारमात्रं तु तन्निर्देशप्रयोजनम् ।।

अकर्तरि च कारके संज्ञायाम् ।। 3.3.19 ।।

प्रासः=कुन्तः, प्रसेवः=सूच्या प्रसेवनेन निष्पाद्य आवपनविशेषः । मधुराहार इति । कर्मधारयः, षष्ठीसमासो वा ।

मेष इति । पचादिषु पाठमनपेक्ष्यैतदुदाहृतम्, तथा च `इगुपधज्ञाप्री' इत्यत्रोक्तम्---देवसेवमेषादयः पचादिषु द्रष्टव्या इति । न हि पाठे सति द्रष्टव्यत्ववचनमुपपद्यते । अथ वा---प्रत्युदाहरणदिगियं दर्शिता, इदं तु प्रत्युदाहरणम्---बिभर्त्यसौ भर्त्तेति ।

चकार इत्यादि । चकारोऽयं भिन्नक्रमः---`संज्ञायां च' इति, तेनासंज्ञायामपि घञ् भवति । यद्येवम्, मा भूत्संज्ञायामिति, मा च भूच्चकारः `अकर्त्तरि कारके' इत्येवास्तु ? सत्यम्; बाहुल्येन संज्ञायां भवति, क्वचिदेवासंज्ञायामिति सूचयितुं संज्ञाग्रहणं कृतम् । दाय इति । दीयमानं सर्वमुच्यत इति नेयं संज्ञा, एवं लाभ इत्यत्रापि, उभयत्र कर्मणि घञ् । कारकग्रहणमित्यादि । पर्युदासे हि नञिवयुक्तन्यायेन कर्तुरन्यस्मिंस्तत्सदृसे कारक एव प्रतीतिर्भवति, यथा---अब्राह्मण इति क्षत्रियादौ । तस्मात्पर्युदासे कारकग्रहणं न कर्त्तव्यम् । प्रसज्यप्रतिषेधे तु वाक्यभेदेन संज्ञायां घञ् भवति, कर्त्तरि तु न भवतीत्येषोऽर्थो भवति । तत्र प्रथमे वाक्येऽर्थनिर्देशाभावाद् `अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति' इति स्वार्थ एव स्यात् । ननु च विहितः स्वार्थे पूर्वेणैव ? नेत्याह; धात्वर्थस्य हि सिद्धताख्ये धर्मे घञादयो भवन्तीत्युक्तम्, इह तु साध्यरूपे शुद्धे प्रकृत्यर्थेस्यात् । ननु च कर्त्तरि प्रतिषेधसामर्थ्यादनिर्दिष्टार्थोऽपि घञ् धात्वर्थसम्बन्धिनि कारक एव विज्ञास्यते ? नैतदस्ति; असति हि प्रतिषेधे `कर्त्तरि कृत्' इति वचनान्नायमनिर्दिष्टाथः स्याद् । अतः प्रसज्यप्रतिषेधार्थं काकग्रहणम् । पर्यदासे तु न कर्त्तव्यम् । यद्येवम्, स एवाश्रयिष्यते, किं कारकग्रहणेन ? तत्राह---तत्क्रियत इति । किं पुनः कारणं प्रसज्यप्रतिषेधे प्रत्यत्नलभ्यः समासः ? असामर्थ्यात्तत्र हि नञः क्रियया सन्बन्धः, कर्त्रि न भवतीति न कर्तृशब्देन । आदेच उपदेशेऽशितीति । अत्र यदि `अशिति' इति पर्युदासः स्यात्, तदा शितोऽन्यत्र तृजादौ प्रत्ययो परत आत्वेन भवितव्यम् । ततश्च सुग्लः, सुम्ल इत्यत्र `आतश्चोपसर्गे' इति को न स्यात्, प्राक् प्रत्ययोत्पत्तेरनाकारान्तत्वात्। प्रतिषेधेत्वनैमित्तिकमात्वम्, शिति तु प्रतिषेध इति सिद्धमिष्टम् ।।

परिमाणाख्याया सर्वेभ्यः ।। 3.3.20 ।।

परिमाणाख्यायामिति । भावसाधनः परिमाणशब्दः, आख्यानमाख्या = उक्तिः, परिच्छित्तेरुक्तौ सत्यामित्यर्थः । कस्य पुनः परिच्छित्तिः ? प्रत्ययार्थस्य भावस्य कर्तृवजितस्य कारकस्य च । परिमाणाख्यायां गम्यमानायामिति वृत्तेरप्ययमेवार्थः । तण्डुलनिचाय इति । निचीयते राशीक्रियते इति निचायः=राशिः, तण्डुलानां निचाय इति षष्ठीसमासः । अत्र राश्येकत्वेन परिच्छित्तिर्गम्यते । अत्रैरचि प्राप्ते घञ् । प्रायेण तु निश्चाय इति पाठः, तत्राप्यर्थः स एव, `ग्रहवृदृनिश्चिगमश्च' इत्यपि प्राप्ते घञ् शूर्पनष्पावाविति । निष्पूयते शोद्ध्यते तुषाद्यपनयनेन यस्तण्डुलादिः । शूर्पेण निष्पावः शूर्पनिष्पाव इति `कर्तृकरणे कृता बहुलम्' इति समासः । अत्र शूर्पसङ्ख्यया परिच्छित्तिः । यद्यप्यत्र `निरभ्योः पूल्वोः' इति घञ् सिध्यति, तथापि सर्वापवादार्थसर्वग्रहणोपादानादनेनैव घञ् भवितुमर्हतीत्यस्योपन्यासः । काराविति । `कॄ विक्षेपे' कर्मणि घञ्, विक्षिप्तो धान्यादिः= कारः, अत्रापि सङ्ख्यया परिच्छित्तिः । ननु च धातोरिति सामान्याधिकारादन्तरेणापि सर्वग्रहणं धातुमात्राद् घञ् भविष्यति, नार्थः सर्वग्रहणेन ? तत्राह---सर्वग्रहणमिति । किं पुनः कारणमपो बाधनं यत्नसाध्यमित्यत आह---पुरस्तादिति निश्चय इति । अत्र न केनचिदियत्ता गम्यते । ननु च परिमाणशब्दस्य प्रस्थादिषु रूढत्वात्प्रस्थस्तण्डुलनिश्चाय इत्यादावेव युक्तं भवितुम्, न तु द्वौ शूर्पनिष्पावावित्यत्र ? इत्यत आह---आख्याग्रहणं रूढिनिरासार्थमिति । प्रस्थादिषु जिघृक्षितेषु परिमाण इत्येव वक्तव्यं किमाख्याग्रहणेन ? आख्याग्रहणात्तु मात्रचो लोपो विज्ञायते परिमाणमात्रस्याख्यायामुक्तौ सत्यामिति । तेन परिमाणशब्दः क्रियाशब्द उपजायते---परिमितिः=परिमाणम् परिच्छित्तिरिति, सङ्ख्ययापि परिच्छित्तिर्भवति । एवञ्चोन्मानादावपि यथाभिधानं घञ् भवति । यदि तर्हि सर्वग्रहणात्परमप्ययं घञमं बाधते, स्त्रीप्रत्ययानपि बाधेत, तत्राह---घञनुक्रमणमजपोर्विषय इति । एतच्च `सर्वेभ्यः' इति पञ्चमीनिर्देशाल्लभ्यते । पञ्चम्यन्तो हि सर्वशब्दो धातुशब्देन समानाधिकरणो भवति, तेन प्रकृत्याश्रय एवापवादो बाध्यते, नार्थाश्रयः । तिलोच्छित्तिरिति । कर्मणि भावे वा क्तिन् । ऊर्ध्वीकृतो राशिः ।

णिलुक्चेति । णिलोपे सति तस्य स्थानिवद्भावाद् घञाश्रया वृद्धिर्न स्यादिति लुग्विधीयते, तस्य परनिमित्तकत्वात्क्विलुगुपधात्वेति प्रतिषेधाद्वा स्थानिवत्त्वाभावाज्जारशब्दः सिध्यति । जरयन्तीति । `जनीजृष्क्नसुरञ्जोऽमन्ताश्च' इति मित्त्वाद् ह्रस्वत्वम् । जारः= प्रच्छन्नपतिः ।।

इङश्च ।। 3.3.21 ।।

उपाध्याय इति । उपेत्यस्यादधीयत इति अपादाने घञ् । अध्याय इत्यत्र कर्मणि घञ् ।

अपादाने स्त्रियामिति । `घञनुक्रमणमजपोर्विषये' इति वचनात् स्त्रियामप्राप्तो घञ् विधीयते । उपाध्याया, उपाध्यायीति । या स्वयमध्यापयति तस्यामेतद्रूपम् । पुंयोगे तु नित्यमेव ङीष् भवति । अत्र च `उपाध्यायमातुलाभ्यां वा' इति वचनात्पक्षे आनुगागमः---उपाध्यायी, उपाध्यायानी ।

`शृवायुवर्णनिवृतेध्विति । शृ' इत्यविभक्तिको निर्देशः । शारो वायुरिति । करणे घञ्। शारो वर्ण इति । चित्रीकरणमत्र धात्वर्थः---चित्रीक्रियतेऽनेनाश्रय इति, अत्रापि करणे घञ् । वर्णान्तरसंपृक्तश्चेद्वर्णः शारः । निव्रियते आव्रियतेऽनेन शरीरमिति निवृतमावरणमुच्यते, `कृत्यल्युटो बहुलम्' इति करणे क्तः । नीशार इति । पूर्ववद्दीर्घः । अकृतनीशार इति । अकृतप्रावरण इत्यर्थः । `प्रदक्षिणप्रसव्यगामिनां शाराणाम्' इति वार्त्तिककारप्रयोगादक्षेष्वपि शार इति भवति ।।

समि युद्रुदुवः ।। 3.3.23 ।।

संयावः=पिष्टविकारोऽपूपविशेषः, सम्पूयते मिश्रीक्रियते गुडजीरकादिभिरिति कृत्वा ।।अवोदोर्नियः ।। 3.3.26 ।।

अधो नयनमवनायः, ऊर्ध्वं नयनमुन्नायः, उन्नयस्तु उत्प्रेक्षा ।।

निरभ्योः पूल्वोः ।। 3.3.28 ।।

निष्पाव=कोशी धान्यविशेषः, निष्पूयते शूर्पादिभिरिति कृत्वा ।।

उन्योर्ग्रः ।। 3.3.29 ।।

उद्गारः=अतिप्रवृद्धः शब्दः; निगारोः=भक्षणम् ।।

कॄ धान्ये ।। 3.3.30 ।।

धान्यमिह प्रकृत्यर्थो वा स्यात्प्रत्ययार्थस्य वा कारकस्योपाधिः ? प्रकृत्यर्थस्तावन्नोपपद्यते, धान्यस्य द्रव्यत्वात्, धातोश्च क्रियावाचित्वात् । प्रत्ययार्थोपाधित्वे तु प्रत्ययेनाभिहितात्वादुत्कारो धान्यस्येति धान्यशब्दस्य प्रयोगो न प्राप्नोति । अथापि विस्पष्टप्रतिपत्त्यर्थं प्रयोगः स्यात् । एवमपि प्रत्ययार्थेऽन्तर्भूतत्वाद्धन्ये षष्ठी न स्यात्, दृतिहरिः पशुरितिवत्सामानाधिकरण्यमेव तु स्यात् । तस्मान्नायं प्रत्ययार्थस्योपाधिः; नापि प्रकृत्यर्थः; किन्तु प्रत्ययार्थस्य विषयत्वेन विशेषणमित्याह---धान्यविषयश्चेदिति । उपपदत्वमपि न न भवति, व्याख्यानात् । अनभिधानादिति । शब्दशक्तिस्वाभाव्यात् । उत्करनिकारशब्दाभ्यां धान्यविषयो विक्षेप एवाभिधीयते, न हिंसा । सापि धान्यस्य कीदृशीति चिन्त्यम् ।।

यज्ञे समि स्तुवः ।। 3.3.31 ।।

समेत्य स्तुवन्ति यस्मिन्देश इति । अधिकरणे ल्युटोऽपवादो घञिति दर्शयति । संस्तवः=परिचयः ।।

प्रे स्त्रोऽयज्ञे ।। 3.3.32 ।।

`यज्ञे' इति प्रकृतत्वाद् `अयज्ञे' इति पदच्छेदः । शङ्खादिषु प्रस्तारः=विस्तारः ।

बर्हिष्प्रस्तर इति । प्रस्तरः=मुष्टिविशेषः । बर्हिर्विकारः प्रस्तरो बर्हिष्प्रस्तरः, `ॠदोरप्' इत्यप्, `इदुदुपधस्य च' इति षत्वम् ।।

व्यन्यदन्तयोर्भवति, अतः सुष्ठूक्तम्---`अपत्यार्थो नास्त्येव' इति ।।

रेवत्यादिभ्यष्ठक् ।। 4.1.146 ।।

ढगादीनामपवाद इति । तत्र रेवतीशब्दो ङीषन्तः, अश्व, मणि, द्वारशब्दोपपदात्पालयतेः कर्मण्यणि ङीप्, तेषु ढक्प्राप्तः । `वञ्चु प्रलम्भने', अस्माद्वृकोपपदात् `कर्त्तर्युपमाने' इति णिनिः, अस्मादणप्राप्तः वृककर्णदण्डोपपदाद् ग्रहेः `कर्मण्यण्', कुक्कुटस्येवाक्षिणी यस्य स कुक्कुटाक्षः, एष्विञ् प्राप्तः ।।

गोत्रस्त्रियाः कुत्सने ण च ।। 4.1.147 ।।

पारिभाषिकस्य गोत्रस्य ग्रहणमित्याह---अपत्यं पौत्रेति । लौकिकस्य त्वपत्यमात्रस्य ग्रहणं न भवति, यदि स्यात् `तत्स्त्रियाः' इत्येव ब्रूयात्, तच्छब्देन प्रकृतस्यापत्यस्य परामर्शादेव तदर्थलाभात् । गार्ग इति । गार्गीशब्दो `यञश्च' इति ङीबन्तः, तस्य `भस्याऽढे तद्धिते' इति पुंवद्भावेन पुंशब्दस्यातिदेशात्गार्ग्यशब्दाद्गोत्रस्त्र्यभिधायिनः प्रत्ययः, `यस्येति च', `आपत्यस्य च तद्धितेऽनाति' इत्यल्लोपयलौपौ । ग्लौचुकायन इति । ग्लुचुकस्यापत्यम् `प्राचामवृद्धात्फिन्बहुलम्' इति फिन्, `इतो मनुष्यजातेः' इति ङीष्, तस्य पुंवद्भावेन निवृत्तिः, ततः प्रत्ययः, णस्य णित्करणभत्र वृद्ध्यर्थम्, गार्ग्यादौ प्रकृतेरेव वृद्धत्वात् । इह तु वतण्डस्यापत्यं गोत्रं स्त्री, `वतण्डाच्च लुक् स्त्रियाम्' वतण्डी, तस्या अपत्यं वातण्डो जाल्म इति पुंवद्भावेन ङीनि निवृत्ते `लुक्' स्त्रियाम्' इत्यस्य `गोत्रेऽलुगचि' इति प्रतिषेधाद्वातण्ड्यशब्दादेव प्रत्ययः । इह च गार्ग्या अपत्यं स्त्री गार्गा, सा भार्या यस्य स गार्गाभार्य इति `जातेश्च' इत्येव पुंवद्भावप्रतिषेधसिद्धिः, `गोत्रं च चरणैः सह' इत्यपत्यमात्रं गृह्यते, तेन वृद्धिनिमित्तस्य चेति पुंवद्भावप्रतिषेधो न प्रयोजनम् । किञ्च---गार्ग्या अपत्यं स्त्रीत्यत्रार्थे नास्ति प्रत्ययः, `अस्त्रियाम्' इति युवसंज्ञाया निषेधाद्गोत्रसंज्ञैवावतिष्ठते, तत्र `एको गोत्रे' इति नियमान्नैव गोत्रप्रत्ययान्तादपरो गोत्रप्रत्ययः सम्भवति, तेन नास्ति गार्गा, नतरां गार्गाभार्यः ।

अपर आह---अस्ति गार्गा, कथम् ? गार्ग्या अपत्यं या स्त्री न सा युवतिर्नापि गोत्रम्; न हि सा गर्गस्यापत्यं पौत्रप्रभृतेश्चापत्यस्य सोत्रसंज्ञा विधीयते, तदभावाद् `एतो गोत्रे' इति नियमाभावः, ततश्च णस्य भावादस्ति गार्गेति ।

ये तु नास्ति गार्गेत्याहुः, तेन मन्यन्ते---मातृवंशः पितृवंशश्च द्वावपि वंशौ प्रतीयमपत्यं भवति; अपातहेतुत्वात् । ततश्च गार्ग्या अपत्यं यत्र स्त्री सा गर्गस्यापत्यं भवत्येव, `पौत्रप्रभृतिग्रहणं च व्यवहितापत्योपलक्षण, तेन गर्गापेक्षया तस्या गोत्रत्वाद् `एको गोत्रे' इति नियमात्प्रत्ययान्तराभाव इति । वृत्तौ तु क्वचित्पठ्यते---गोत्राद्यूनीति यूनि प्रत्ययो भवतीति । तदप्यस्मिन्नेव पक्षे घटते, तदाह---गार्ग्या अपत्यं पुमान्युवा भवति गार्गेयो माणवक इति । मातामहादेरुपलक्षणार्थोऽयं प्रयोग इति नास्ति कुत्सा ।।

वृद्धाट्ठक् सौवीरेषु बहुलम् ।। 4.1.148 ।।

अत्र `वृद्धिर्यस्याचामादिस्तद्वृद्धम्' इति वृद्धं गृह्यते, न त्वपत्यमन्तर्हितं वृद्धमिति शास्त्रान्तरपरिभाषितम् । उत्तरसूत्रे हि वक्ष्यति---फिञो ग्रहणं न फिनः, वृद्धाधिकारादिति । सौवीरेष्विति प्रकृतिविशेषणमिति । `गोत्रस्त्रियाः' इत्यतो गोत्रग्रहणानुवृत्तेर्गोत्रप्रत्ययान्ता या प्रकृतिस्तस्या विशेषणमित्यर्थः । वृद्धात्सौवीरगोत्रादिति । इदमपि पारिभाषिकस्यैव वृद्धस्य ग्रहणे घटते, अन्यथा सौवीरेषु यद्वृद्धं तस्मादिति वक्तव्यम् । भागवित्तायन इति । `यञिञोश्च' इति फक् । तृणबिन्दोरपत्यमिति औत्सर्गिकोऽण्तार्णबिन्दवः, ततष्ठक् । पूर्वठग्ग्रहणं णेन सम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति पुनरिह ग्रहणम् ।

भागपूर्वपदौ वित्तिरिति । वित्त्यन्त इत्यर्थः । भागवित्तिशब्द इति यावत् । गोत्राट्ठग्बहुलं तत इति । `गोत्रस्त्रियाः' इत्यतो गोत्रग्रहणानुवृत्त्या गोत्रवचनात्प्रातिपदिकाद्बहुलं यष्ठगुच्यते स ततस्तेभ्य एव भागवित्तिप्रभृतिभ्यस्त्रिभ्य एव भवति, नान्येभ्य इति परिगणनश्लोकार्थः ।

ननु गोत्रग्रहणमनुवर्त्तते, यच्च सौवीरसगोत्रवृत्तिप्रातिपदिकं तद्वृद्धमेव, तत्किमर्थं वृद्धग्रहणम् ? अत आह---वृद्धग्रहणं स्त्रीनिवृत्यर्थमिति । तद्धि गोत्रग्रहणं स्त्रिया विशेषणम्, अतस्तदनुवृत्तौ स्त्रीग्रहणमप्यनुवर्त्तेत, वृद्धग्रहणसामर्थ्यात्तु गोत्रग्रहणमेवानुवर्तते, न स्त्रीग्रहणमिति व्याचक्षते । अपत्यमन्तर्हितं वृद्धमित्यस्य तु वृद्धस्य ग्रहणेऽसमञ्जसोऽयं ग्रन्थः स्यात् । औपगविरिति ।

ननु च परिगणनादेवात्र न भविष्यति ? तन्न; न हि सूत्रकारोऽर्वाचीनपरिगणनाश्रयेणातिप्रसङ्गनिवारणं मन्यते, वाग्रहण एव कर्त्तव्ये यद्बहुलग्रहणं कृतं तस्य प्रयोजनमाह---बहुलग्रहणमित्यादि । वैचित्र्यमेव दर्शयति---गोत्रस्त्रिया इत्यारभ्येति । तत्रान्त्यः सौवीरगोत्र एवेति । अयमेवार्थो यत्नसाध्यः ।।

फेश्छ च ।। 4.1.149 ।।

यमुन्दश्चेत्यादि । अत्र वार्ष्यायणीति शब्दरूपापेक्षाया नपुंसकनिर्देशः । फिञ इति । फिञन्ता इत्यर्थः । स्मृता इति । एते त्रयः फिञन्ताः प्रकृतयः स्मृता इत्यर्थः । सौवीरेषु च कुत्सायामिति । पुनश्चकारो वृत्तभङ्गभयान्न पठितः । बहुलग्रहणात्सिद्धोऽयमर्थः पूर्वं वृत्तिकृता दर्शितः, इदानीं तु श्लोकवार्त्तिककारेणेत्यपौनरुक्त्यम् । सुयामशब्दोऽपि तिकादिः । वृषस्यापत्यं वार्ष्यायणिः । अयमपि तिकादिरेव, `दगुकोसलकर्मारच्छागवृषाणां युड् वादिष्टस्य' इति वचनाद् आयनादेशे कृते युडागमः ।।

फाण्टाहृतिमिमताभ्यां णफिञौ ।। 4.1.150 ।।

तेन यथासंख्यामिह न भवतीति । एवं च कृत्वा णस्य णित्करणमर्थवद्भवति, तद्धि मिमतशब्दे वृद्ध्यर्थम् । यथासंख्ये तु फाण्टाहृतेर्वृद्धत्वाण्णित्करणमनर्थकं स्यात् । इह तु फाण्टाहृताभार्य इति गार्गाभार्य इतिवत्पुंवद्भावप्रतिषेधादिकं द्रष्टव्यम् । यथा तु वार्त्तिकं तथा

यथासंख्यमत्रेष्यते, यथाह---`फाण्टाहृतेर्णस्य णित्करणानर्वस्यं वृद्धत्वात्', `प्रातिपदिकस्य पुंवद्भावप्रतिषेधार्यं तु', `उक्तं वा' इति ।।

कुर्वादिभ्यो ण्यः ।। 4.1.151 ।।

ननु च `कुरुनादिभ्यो ण्यः' इत्येव कुरुशब्दाण्णयः सिद्धः, किमर्थमिह पठ्यते ? अत आह---कुरुशब्दादपरोऽपीति । सत्यमपरोऽपि ण्यप्रत्ययो भविष्यति । स तु त्रत्त्रियादित्यनेनार्थभेदमाह । तद्राजसंज्ञक इत्यजेन रूपभेदमाह । तिकादिषु पाठादिति । कुरुकौरव्यशब्दौ द्वावपि पठ्येते ।

कारिणस्तु रथकारशब्दादिति । कारिणः=शिल्पिनः । रथकारजातिस्तु शिल्पिवृत्तिर्न भवतीति मन्यते ।

तस्य पुंवद्भावो न भवतीति । `भस्याऽढे तद्धिते' इति विधीयमानः, यदि हि स्यात् `नस्तद्धिते' इति टिलोपः स्यात् । कस्मान्न भवतीत्याह---स्त्रीप्रत्ययनिर्देशसामर्थ्यादिति । पुंलिङ्गस्यापि पाठे लिङ्गविशिष्टपरिभाषया केशिनीशब्दादपि सिद्धः प्रत्ययः, पुंल्लिङ्गात्त्वनभिधानान्न भविष्यतीति भावः । वामरथस्य कण्वादिवत्स्वरवर्जमिति गणवाक्यं व्याचष्टे---वामरथशब्द इत्यादि । तस्येति प्रकरणाण्ण्यप्रत्ययान्तस्येति विज्ञेयम् । कण्वादिबदिति । केवलानां तेषां कस्यचित्कार्यस्याविधानाद्यञन्तानां कण्वादीनां यत्कार्यं तस्यातिदेशः । लुगादिकमिति । कण्वादिषु यञन्तेषु दृष्टमात्रस्य कार्यस्यातिदेशः, न तु कण्वादित्वप्रत्युक्तस्य, अत एव स्वरवर्जमित्याह । तेन लुगादिकमप्यतिदिश्यते, न तु `कण्वादिभ्यो गोत्रे' इत्येव प्रत्ययविधिः । वामरथा इति । `यञञोश्च' इति बहुषु लुक् । यञश्च `प्राचांष्फ तद्धितः', यूनि `यञिञोश्च' इति फक्; शैषिकेष्वर्थेषु छे प्राप्ते `कण्वादिभ्यो गोत्रे' `सङ्घाङ्कलक्षणेषु' इति चाण् भवति । सम्राजः क्षत्त्रिय इति । सम्राजोऽपत्यं साम्राज्यो भवति, क्षत्त्रियश्चेत्; साम्राजोऽन्यः ।।

सेनान्तलक्षणकारिभ्यश्च ।। 4.1.152 ।।

लक्षणेति स्वरूपग्रहणमित्याह---लक्षणशब्दादिति । कारीत्यर्थग्रहणमित्याह---कारिवचनेभ्यश्चेति । साधु कुर्वन्तीति कारिणः=शिल्पिनः । नापित्य इति । प्राचां मते ण्य उदाहृतः । उदीचां तु मते परत्वाद् `उदीचां वृद्धात्' इति फिञेव भवति---नापितायनिरिति ।।

उदीचामिञ् ।। 4.1.153 ।।

ताक्ष्ण इति । `षपूर्वहन्धऋतराज्ञामणि' इत्यल्लोपः । ताक्षण्य इति । `ये चाभावकर्मणोः' इति प्रकृतिभावः । इह `सेनान्तलक्षणकारिभ्यो वा' इति वक्तव्यम्, नार्थोऽनेनेञ्वचनेन, नापि शिवादिषु तक्षन्शब्दस्य पाठेन, ण्ये हि विकल्पिते यो यतः प्राप्नोति सततो भवतीति लक्ष्णः `प्राग्दीव्यतोऽण्', अन्येभ्यश्च `अत इञ्' भविष्यति ? नैवं शक्यम्; एवं हि जातसेनादिभ्य ऋष्यादिलक्षणोऽण् प्राप्नोति ।।

तिकादिभ्यः फिञ् ।। 4.1.154 ।।

क्षत्त्रियवचन इति । यः `कुरुनादिभ्यो ण्यः' इति व्युत्पादितः । औरशशब्देनेति । उरसा शेते उरशः क्षत्रियः, पृषोदरादित्वाद्रूपम्, तस्यापत्यम् `जनपदशब्दात्क्षत्रियात्' इत्यञ् ।

किं पुनरेवं प्रयत्नेन क्षत्त्रियवचनस्य ग्रहणं व्याख्यायते ? इत्यत्राह---तथा चेति । उदाहृतमिति । पूर्वैरपि वृत्तिकारैरित्यर्थः ।

तिक्नोतेरिगुपधात्कः, तिकः । किं तवास्तीति प्रवर्त्तते कितवः, पृषोदरादिः । सम्पूर्वाज्जानातेः `आतश्चोपसर्गे' इति कः, स्त्रियां टाप्, संज्ञा । बालैर्बद्धा शिखास्य स बालशिखः । द्वौ शब्दावित्यन्ये, बलतेर्णिजन्तादच् बालः, तस्य बालायनिः । शिखाशब्देन तद्वान् लक्ष्यते, शैखायनिः । उरशशब्दो व्युत्पादितः । `शटकुत्सायाम्' पचाद्यच्, ततो गर्गादित्वाद्यञ्---शाट्यः; ततो यूनि फिञ् । सिन्धुशब्दाद् `द्व्यञ्मगध' इत्यण्, सैन्धवः, अत्रापि यूनि फिञ् । यममुनत्तीतियमुन्दः, शकन्ध्वादि । प्रशस्तं रूपमस्यास्ति `रूपादाहतप्रशंसयोर्यप्', रूप्यः । ग्रामे भवो ग्राम्यः । नील वर्णे, इगुपधात्कः नीलः । `अम् रोगे', औणआदिक इत्रः, अमित्रः । गौकाक्ष्यो गर्गादियञन्तः । `कृग्रोरुः', कुरुः । देवस्येव रथोऽस्य देवरथः । तिलेतिलः, तितिलः, पृषोदरादिः, ततो मत्वर्थीय इन्, तितिलिनोऽपत्यमौत्सर्गिकोऽण्, `नस्तद्धिते' इति टिलोपः, तैतिलः । औरशशब्दो व्युत्पादितः । `कुरुनादिभ्यो ण्यः', कौरव्यः । भूरि अस्यास्ति भूरिको व्रीह्यादिः, तस्यैव पक्षे कपिलादित्वाल्लत्वं भूलिकः, ताभ्यामत इञ्, भौरिकिः, भौलिकिः । `चुप मन्दायां गतौ' ण्यन्ताल्लटः शत्रादेशः, तस्यापत्यं चौपयतः, एवं चैतयतः । `चिट परप्रेष्ये', ण्यन्ताल्लटः शत्रादेशः, तस्यापत्यं चैटयतः । `शीकृ सेचने', णिजादि पूर्ववत्, शैकयतः । क्षितमाचष्टे क्षितयन्, तस्यापत्यं क्षैतयतः । ध्वजोऽस्यास्ति ध्वजवान्, तस्यापत्यं ध्वाजवतः । द्वौ शब्दावित्यन्ये, `ध्वज गतौ' ण्यन्तात्पचाद्यच्, ध्वाजः; वनोतेस्तःष वतः । `चदि आह्लादने', ततो रमस् चन्द्रमाः, तस्यापत्यं चान्द्रमसायनिर्बुधः । शोभतेऽसौ शुभः, इगुपधात्कः । गमेर्गन्, गङ्गा । वृञ एण्यः, वरेण्यः । सर्वधातुभ्यो मनिन्, यानं यामा, शोभनं यामास्य सुयाम् । आरदो नाम जनपदः, ततोऽपत्ये `जनपदशब्दात्' इत्यञ्---आरदः । वह्यं करणम्, वह्यमेव वह्यका, निपातनादित्वाभावः । खलाय हिता खल्या, `खलयव' इति यत् । `वृषु सेचने' इगुपधात्कः---वृषः । लोमानि कामयति लोमका । उदकमिच्छत्यात्मन उदन्यः, `अशनायोदन्यधनाय' इत्युदकस्योदन्भावः, ततः पचाद्यच् । यज्ञयोगाद्यज्ञः । एते तिकादयः ।।

कौसल्यकार्मार्याभ्यां च ।। 4.1.155 ।।

कोसलशब्दाद् `वृद्धेत्कोसलाजादाञ् ञ्यङ्', कर्मारशब्दात्कारिलक्षणो ण्यः, एतयोरिह ग्रहणमिति शङ्कामपाकरोति---परमप्रकृतेरेवेति । कथं तर्हि विकृतं प्रकृतिरूपं श्रूयते ? तत्राह---प्रत्ययसंयोगेन त्विति । न चेयं स्वमनीषिकेत्याह---तथा चेति । युड्वादिष्टस्येति । पूर्वान्तकरणे दांगव्यायनिः, ओर्गुणो न स्यात्, अतः परादिकरणम् । आदिष्टेस्येति । कृतायनादेशस्येत्यर्थः । एतस्मिन्ननुच्यमानेऽनवकाशत्वाद्युटि कृतेऽनादित्वादायनादेशो न स्यात् ।।

अणो द्वयचः ।। 4.1.156 ।।

कार्त्रायणिरिति । कर्तुरपत्यमित्यण्, कार्त्रः, ततो यूनि फिञ्, तस्याब्राह्मणगोत्रादिति लुग्न भवति, विधानसामर्थ्यात् । अपर आह--- कर्तुश्छात्त्रः कार्त्रः,

`तस्यापत्यम्' इत्यादावगोत्रे चरितर्थं वचनमिति । अपर आह---अपत्यग्रहणमावर्तते, तत्रैकेनाण् विशेष्यते, अपरेण प्रत्ययार्थो निदिश्यते, ततश्चापत्यस्यैवाणो ग्रहणादस्त्येव वचनसामर्थ्यमिति ।।

उदीचां वृद्धादगोत्रात् ।। 4.1.157 ।।

कारिशब्दादपीति । कारिलक्षणस्योदीचामिञोऽवकाशः---तान्तुवायिः, फिञोऽवकाशः---आम्रगुप्तायनिः; नापितादुभयप्रसङ्गे फिञ् भवति । याज्ञदतिरिति । `वा नामदेयस्य वृद्धसंज्ञा वक्तव्या' । पक्षे याज्ञदत्तायनिरिति भवत्येव ।।

वाकिनादीनां कुक् च ।। 4.1.158 ।।

यदिह वृद्धगोत्रमिति । वाकिन-गारेध-काक--इत्येते त्रयः । वचनं वाकः सोऽस्यास्ति वाकिनः, बर्हिणवदुपपाद्यः । अगारे एधते गारेधः, पृषोदरादित्वादादिलोपः, शकन्ध्वादित्वात्पररूपम् । कायतेः काकः, `अन्येषामपि' इति कः । कर्कटस्यापत्यं कार्कट्यः, गर्गादिः, कुर्वादिर्वा । `लंघयतेर्लङ्का, अस्मादेव निपातनाद् घस्य कादेशः । वर्मचर्मशब्दौ व्रीह्यादी ।

इञाद्यपवाद इति । वर्मिचर्मिणोरण् प्राप्तः, लङ्काशब्दात् `द्व्यचः' इति ढक् प्राप्तः, यञन्ताद् `यञिञोश्च' इति फक्; सेषभ्य इञ् प्राप्तः, `वर्मिचर्मिणोर्नलोपश्च' इति कुकि कृते प्रातिपदिकस्यानकारान्तत्वान्नलोपो न प्राप्नोतीति विधीयते । यदि पुनरयं कुक् परादिः क्रियते, आयनादेशो न स्यात्; फस्यानादित्वात् । यदा न लिङ्गविशिष्टपरिभाषया वर्मिणी-चर्मिणीशब्दाभ्यां प्रत्ययो भवति, तदा `भस्याऽढे तद्धिते' इति पुंवद्भावो न स्यात् ।।

पुत्रान्तादन्यतरस्याम् ।। 4.1.159 ।।

पूर्वेणऐव प्रत्ययः सिद्ध इति । तेनासाविह विधीयते । कथं तर्हि पञ्चम्या निर्देश इत्याह---पुत्रान्तादित्यादि ।।

प्राचामवृद्धात्फिन्बहुलम् ।। 4.1.160 ।।

विकल्पार्था इति । विकल्पप्रयोजनम् । तत्राऽऽचार्योपादानं मतान्तरे प्रत्ययस्याभावं द्योतयति, बहुलग्रहणं तु क्वचित्प्रवृत्त्यादिकम्, अन्यतरस्यांशब्दस्तु विकल्पमेव, तेषामेकेनैव सिद्ध्यतीति प्रकरणाद्विकल्प इति गम्यते । किमर्थं तर्हि सर्वेषां ग्रहणम् ? तत्राह---तत्रेति । बहुलग्रहणं वैचित्र्यार्थमिति । पारिशेष्यादन्यस्य ग्रहणं विकल्पार्थमित्युक्तं भवति । वैचित्र्यमेव दर्शयति---क्वचिदिति ।।

मनोर्जातावञ्यतौ षुक्च ।। 4.1.161 ।।

तथा चेति । अपत्यार्थे तु सति `यञञोश्च' इति बहुषु लुक् प्रसज्येत; लौकिकस्य गोत्रस्य तत्र ग्रहणात् ।

अपत्ये कुत्सित इति । णत्वविधानार्थमिदम्, अणः सिद्धत्वात् । न च `न दण्डमाणवान्तेवासिषु' इति णत्वसिद्धिः, अर्थविशेषस्यानिश्चायाद् । अनधीतवेदत्वान्मूढत्वम् । विहिताकरणात्प्रतिषिद्धसेवनाच्च कुत्सितत्वम् ।।

अपत्यं पौत्रप्रभृति गोत्रम् ।। 4.1.162 ।।

तद्गोत्रसंज्ञं भवतीति । अपत्यमात्रस्य लोके गोत्रत्वादपत्यविशेषे गोत्रशब्दस्य नियमात्परिभाषेयं युक्ता, न संज्ञेति चेत् ? न; लिङ्गवती परिभाषा भवति, यथा---`इको गुणवृद्धी' इति, विध्यन्तरशेषभूता वा, यथा---`विप्रतिषेधे परं कार्यम्' इति, न चेयं तथा; किञ्च वृद्ध्यादयोऽपि सर्वार्थप्रत्यायनयोग्याः संज्ञिविशेषे शक्त्यवच्छेदेन नियम्यन्ते । अथ च ताः संज्ञास्तथेयमपि भविष्यति । उक्तं च---

व्यवहाराय नियमः संज्ञानां संज्ञिनि क्वचित् ।<br>
नित्य एव तु सम्बन्धो डित्थादिषु गवादिवत् ।।<br>
वृद्ध्यादीनां च शास्त्रेऽस्मिन् शक्त्यवच्छेदलक्षणः ।<br>
अकृत्रिमो हि सम्बन्धो विशेषणविशेष्यवत् ।। इति ।

यदि पौत्रप्रभृतेरपत्यस्य गोत्रसंज्ञा क्रियते, गर्गस्यापि प्राप्नोति, सोऽपि कञ्चित्प्रति पौत्रो भवत्येव, तत्र को दोषः ? `गोत्राद्यून्यस्त्रियाम्' इति यूनि प्रत्ययप्रसङ्गः, गार्ग्यादेव तु यूनीष्यते ? नैष दोषः; इहापत्यग्रहणं न कर्तव्यम्, पौत्रस्यापत्यत्वात्तत्प्रभृतेरपत्यस्यैव ग्रहणं सिद्धम्, तत् क्रियते---अपत्यरूपेण प्रतिभासामानस्य यथा स्यात्, वस्तुतोऽपत्यस्य मा भूदित्येवमर्थम् । अतोऽपत्यरूपेण प्रतिभासमानस्य गर्गस्य न भविष्यति । ननु चासत्यप्यपत्यग्रहणे पौत्रप्रभृतिरूपेण प्रतिभासमानस्य संज्ञाया विज्ञानात्तेन रूपेणाप्रतिभासमानस्य मर्गस्य न भविष्यतीति किमपत्यग्रहणेन ! यद्येवम्, औपगवस्यापि न स्यात्, सोऽपि ह्यपत्यरूपेण प्रतिभासते, न तु पौत्रप्रभृतिरूपेण, अपत्यमात्रे प्रत्ययविधानाद् गार्ग्यादेरेव तु स्याद्---यत्र गोत्र एव प्रत्ययः । कुतश्चायमर्थो लभ्यते---पौत्रप्रभृतिरूपेण प्रतिभासमानस्येति ? तद्ग्रहणसामर्थ्यादिति चेत्, सर्वस्यापि यत्किञ्चित्प्रतिवस्तुतः पौत्रप्रभृतित्वाव्यभिचारात् पौत्रप्रभृतिग्रहणं न कर्त्तव्यं भवति । तद्ग्रहणसामर्थ्यादयमर्थो लभ्यत इति ? तन्न; संज्ञिनिर्देशार्थत्वादचेतनव्यावृत्त्यर्थत्वाच्च । `गोत्रम्' इत्येतावति ह्युक्ते कस्य संज्ञा स्यात्, रथादीनां च वस्तुतोऽपि पौत्रप्रभृतित्वं नास्ति । अतो वस्तुतः पौत्रप्रभृतेर्गर्गस्य मा भूत्, अपत्यरूपेण प्रतिभासमानस्य यथा स्यादित्येवमर्थं त्वपत्यग्रहणं कर्तव्यम् । सम्बन्धिशब्दत्वाच्च पौत्रप्रभृत्यपत्यशब्दयोर्यं प्रति पौत्रप्रभृतित्वमपत्यत्वं च तमेव प्रति गोत्रसंज्ञा विज्ञायते । तेनाङ्गिरसः पौत्रे गर्गस्यानन्तरे न भवति `गर्गादिभ्यो यञ्' । तदेतत्सर्वमुक्तम् ।

सम्बन्धिशब्दत्वादित्यादि । यस्य यदपत्यमिति । प्रतिभासत इति भावः । तदयमत्र सूत्रार्थः---वस्तुतः पौत्रप्रभृतिरपत्यरूपेणं प्रतिभासमानोऽर्थो यं प्रत्यपत्यरूपेण प्रतिभासते यं च प्रति वस्तुतः पौत्रप्रभृतिः, तं प्रति गोत्रसंज्ञ इति ।

अपत्यमिति व्यपदेशायेति । संज्ञिन इति शेषः । अपत्यरूपेण प्रतिभासमानस्य संज्ञिनो व्यपदेशो यथा स्यादित्येवमर्थमित्यर्थः । इह कस्मान्न भवति---गर्गापत्यस्य तृतीयादेरपत्यमिति, अत्र हि गर्गापत्यशब्देन गर्गं प्रत्यपत्यरूपेण प्रतिभासमानस्य वस्तुतः पौत्रप्रभृतेर्गर्गं प्रति गोत्रसंज्ञायां सत्यां गर्गस्य चतुर्थे जीवद्वंश्ये `गोत्राद्यूनि' इति गर्गापत्यशब्दात्प्रत्ययः प्राप्नोति ? नैष दोषः; संज्ञाप्रकरण एवास्मिन्कर्तव्येऽपत्यप्रत्ययेषु विधीयमानेषु मध्ये संज्ञाकरणं प्रत्ययवाच्यस्यापत्यस्य परिग्रहार्थम् । यदिदं `तस्यापत्यम्' इत्यारभ्य प्रत्ययार्थत्वेन निर्दिष्टमपत्यं तद्गोत्रसंज्ञमिति, तेनापत्यशब्देन प्रतिभासमानस्यापत्यस्य संज्ञा न भविष्यति । ननु च `ते तद्राजाः' इत्यत्र तच्छब्देनाजादीनामेव परिग्रहो यथा स्यात्पूर्वेषां मा भूदिति मध्ये संज्ञाकरणं स्यात् । यद्येतावत्प्रयोजनं स्याद्, `अञादयस्तद्राजाः' इत्येव ब्रूयात्, तस्मादुक्तमेव साक्षात्प्रयोजनमस्मिन् प्रकरणे संज्ञाकरणस्य । स्थिते त्वेवमुक्तमपि प्रयोजनं भवत्येव, अत एव तत्र वक्ष्यति---गोत्रयुवसंज्ञा काण्डेन व्यवहितत्वादिति ।।

जीवति तु वंश्ये युवा ।। 4.1.163 ।।

अभिजनप्रबन्धो वंश इति । अभिजनाः=पित्रादयः, अभिजायन्ते येभ्यः पुत्रादय इति कृत्वा । प्रबन्धः=सन्तानः । तत्र भवो वंश्य इति । दिगादित्वाद्यत् । पौत्रप्रभृत्यपत्यमिति षष्ठीसमासः, यद्यत्रापि पूर्ववत् `पौत्रप्रभृति' इत्येतत्सामानाधिकरण्येनापत्यं विशेषयेत्, तृतीयस्यापि जीवद्वंश्यस्य युवसंज्ञा स्यात्; तत्र को दोषः ? युवसंज्ञया गोत्रसंज्ञाया बाधितत्वाद्गर्गादिभ्यो यञ् स्यात्, न कश्चिदपत्यप्रत्ययः । किं कारणम् ? गोत्रादेव यूनीति नियमात्, नानन्तरान्न मूलप्रकृतेः । तस्माद्वाक्येनैवाभिधानं प्राप्नोति---गर्गस्यापत्यं गार्गेरपत्यमिति । एतेनोपगोस्तृतीयो जीवद्वंश्यो व्याख्यातः, तस्माद्वैयधिकरण्येन विशेषणमित्याह---पौत्रप्रभृतीति । षष्ठी विपरिणम्य इति । अत्र च व्याख्यानमेव शरणम् ।

तुशब्दोऽवधारणार्थ इति । अनेकार्थत्वान्निपातानां भिन्नक्रमो युवशब्दानन्तरं द्रष्टव्य इत्याह---युवैव भवति, न गोत्रमिति । असत्यवधारणे एकसंज्ञाधिकारादन्यत्र संज्ञायां समावेशाभ्युपगमात्कृत्यप्रत्ययसंज्ञानामिव गोत्रयुवसंज्ञयोः समावेशः स्यात् । अस्तु, को दोषः ? यस्कस्यापत्यं गोत्रम् `शिवादिभ्योऽण्' तदन्ताद्यूनि `अणो द्व्यचः' इति फिञ्, वृद्धौ, यस्येति लोपे कृते यास्कायनिरिति । बहुषु `यस्कादिभ्यो गोत्रे' इति फिञो लुक् प्रसज्येत; एकदेशविकृतस्यानन्यत्वात् । यस्कादिभ्योऽनन्तरस्य गोत्रप्रत्ययस्थ लुगुच्यते, न चात्रानन्तरः फिञ् । शिवाद्यणो यस्येति लोपः, तस्य पूर्वस्मादपि विधौ स्थानिवद्भावाद्यस्कादिभ्योऽनन्तरस्य विहितस्येति वा विज्ञास्यते । इह च कण्वस्यापत्यं काण्व्यः, तस्यापत्यं युवा काण्व्यायनः, तस्यच्छात्त्राः काण्वायनीया इति, `कण्वादिभ्यो गोत्रे' इत्यण् न भवति, कण्वादिभ्यः परो योऽनन्तरो यो वा तेभ्यो गोत्रे विहितस्तदन्तादित्याश्रयणात् । इह च औपगवस्यापत्यमौपगविरिति `गोत्राद्यूनि' इति प्रतिपदविधानात्, `एको गोत्रे' इति नियमो बाधिष्यते । यदि बाध्यते, औपगवेर्यूनोऽपत्यमिति चतुर्थस्य यूनो गोत्रत्वात्पञ्चमे यूनि फक् प्राप्नोति ? नैष दोषः; पञ्चमे यूनि विवक्षिते उत्पन्नस्येञः यूनि `लुक्' इति लुकि कृते औपगवशब्दादणन्तात्पुनरपीञेव भविष्यति । इह तर्हि दाक्षेरपत्यं दाक्षायणस्यापत्यमित्यर्थविवक्षायाम् `फक्फिञोरन्यतरस्याम्' इति फको लुगभावपक्षे तदन्तादिञ् प्राप्नोति ? किञ्च औपगवेरपत्यमित्यत्रापि लुप्तेऽपीञि प्रत्ययलक्षणेन फक्प्राप्नोति ? एवं तर्हि `गोत्राद्यूनि' इत्यत्र एकग्रहणनुवर्तिष्यते, तेनानेकः प्रत्ययो न भविष्यति । यस्तर्हि `गोत्रेऽलुगचि' इत्युलक् सोऽत्तरीणां यूनां छात्त्र इत्यादौ प्राप्नोति, यूनोऽपि गोत्रत्वात् ? प्राप्नोतु, तं बाधित्वा परत्वाद्यूनि लुग्भविष्यति ? नैवं शक्यम्, फक्फिञोर्हि दोषः स्यात्---शालङ्केरपत्यं शालङ्किः, पैलादिषु पाठादिञ् शलङ्कादेशश्च, ततः शालङ्केरपत्यं युवा `यञिञोश्च' इति फक्, `पैलादिभ्यश्च' इति लुक्, ततः शालङ्केर्यूनश्छात्त्रा इति प्राग्दीव्यतीयार्थविवक्षायाम् `गोत्रेऽलुगचि' इति पैलादिषु लुकः प्रतिषेधे सति `यूनिलुक्' इति लुकि नित्ये प्राप्ते `फक्फिञोरन्यतरस्याम्' इति पक्षे फकः श्रवणप्रसङ्गः । असत्यां तु यूनो गोत्रसंज्ञायाम् `गोत्रेऽलुगचि' इत्यस्याप्रवृत्तौ पैलादिषु लुग्भवत्येव । `फक्फिञोरन्यतरस्याम्' इत्ययं तु विकल्पोः यूनि `लुक्' इत्यस्यानन्तरस्य, न तु पैलादिषु लुको व्यवहितस्यान्तरङ्गस्य, तत `इञश्च' इत्यण्---शालङ्का इति भवति । तथा पीलाया अपत्यम्, `पीलाया वा' इत्याण्, पैलः, तस्यापत्यं युवा, `अणो द्व्यचः' इति फिञ्, तस्य `पैलादिभ्यश्च' इति लुक्, ततः पैलस्य यूनश्छात्त्राः पैलीया इति ।।

भ्रातरि च ज्यायसि ।। 4.1.164 ।।

कनीयान् भ्रातेति । भ्रातृज्यायः---शब्दयोः सम्बन्धिशब्दत्वादयमर्थो लभ्यते । अकारणत्वादिति । यः साक्षात्परम्परया वा कारणं भवति, स लोके `वंश्य' इत्युच्यते । गार्ग्ये जीवतीति । ज्यायसि भ्रातरि जीवतीत्यर्थः । एवं वात्स्यायनादावपि द्रष्टव्यम् ।।

वान्यस्मिन् सपिण्डे स्थविरतरे जीवति ।। 4.1.165 ।।

सप्तमपुरुषावधय इति । आत्मनः प्रभृति पित्रादिषु पुत्रादिषु वा गण्यमानेषु सप्तमपुरुषोऽवधिर्येषां ते तथोक्ताः । प्रायेण तु पूरणप्रत्ययो न पठ्यते, सप्तपुरुषावधय इत्येव पठ्यते, न तत्र समीचीनमर्थं पश्यामः । समानः पिण्डो येषामिति सपिण्डाः, निपातनात्सभावः । स्मर्यन्त इति । तद्यथा---`सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते' इति । सप्तमेऽतीते विनिवर्तत इत्यर्थः । उभयत्रेति । जनेन मरणे चेत्यर्थः ।

एवमादिकायां क्रियायामिति । आदिशब्देन `दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते' इत्यादिका क्रिया गृह्यते । जीवदेवेति । वस्तुव्याख्यानमेतत् । सूत्रे तु जीवतीत्याख्यातपदम्, तच्चेदपत्यं जीवतीति, प्रथमार्थे वा शत्रन्तात्सप्तमी व्याख्येया । तरब्निर्देश इत्यादि । असति तस्मिन्स्थविरशब्दाद्द्वयः प्रकर्षमात्रं गम्येत, तरपा तु स्थानप्रकर्षो द्योत्यते, ततस्तदु पादानसामर्थ्यात्, यथा गोतरः, अश्वतर इत्यादावप्रवृत्तिनिमित्तभूतस्यापि वाहदोहादेः प्रकृत्यर्थसम्बन्धिनः प्रकर्षेतरब् भवति, तथात्रापि । स्थानम्=पदम्, पितृत्वादिकम् ।

स्थानवयोन्यूने इति । स्थानेन वयसा च न्यूने इत्यर्थः । ननु च ज्यायसीत्यनुवृत्तेरेवोभयोः प्रकर्षो लभ्यते, `प्रशस्यस्य श्रः', `ज्य च', `वृद्धस्य च'

इत्युभयोर्ज्यादेशविधानात् ? तन्न; नहि सकृत्प्रयुक्तः शब्दोऽनेकार्थमभिधातुं समर्तः । एवमपि तरब्निर्देशो न कर्तव्यः, ज्यायसीत्यनुवृत्तेरेव स्थानप्रकर्षलाभात् ? एतदपि नास्ति; स्थविर इति विशेषणान्तरोपादाने सति ज्यायसीत्यस्यनुवृत्तेरेव दुर्ज्ञानत्वात् । जीवतीति किमिति । श्रुतं प्रकृतं चोभयमधिकृत्य प्रश्नः । अत एवोभयोः प्रयोजनं दर्शयति---मृते मृतो वेति । तत्र मृत इति स्वपितरि, मृतो वेति पौत्रप्रभृतेरपत्यभूतोऽर्तः ।।

वृद्धस्य च पूजायाम् ।। 4.1.166 ।।

अपत्यमन्तर्हितमित्यादि । एतच्चापत्यग्रहणेन वृद्धस्य विशेषणाद् इह परिभाषितस्य च शब्दात्मकस्यापत्यत्वासम्भवात् विज्ञायते । पूजायां गम्यमानायामिति । का पुनरत्र पूजा ? यद्युवत्वमेव । यद्यपि युवशब्दोऽनपेक्षितप्रवृत्तिनिमित्तमेव संज्ञा, तथापि प्रायेणाल्पवयसो जीवद्वंश्यत्वं सम्भवतीति तदध्यारोपे सति तत्सहचरितं वयोऽपि प्रत्यायितं भवतीति पूजा भवति । संज्ञासामर्थ्यादिति । गोत्रस्य सतो युवसंज्ञा विधीयते, गोत्रसंज्ञा चेत्प्रवृत्ता `एको गोत्रे' इति नियमः प्राप्नोति, ततश्च परमप्रकृतेरेवोत्पन्नेन प्रत्ययेनाभिहितत्वादप्राप्तोऽपि प्रत्ययोऽस्माद्वचनादभवतीत्यर्थः । इह पूर्वत्र सामानाधिकरण्येन संज्ञाविधानात्प्रक्रमाभेदाय तथैव संज्ञा विधातुं युक्ता, कोऽयं वृद्धस्येति षष्ठीनिर्देशः इत्यत्राह---वृद्धस्येति । षष्ठीनिर्देश इति । इतिकरणो हेतौ, वार्त्तिककारीयं चेदं सूत्रम् । वृत्तिकारेण तु सूत्रेषु प्रक्षिप्तम् । एतेनोत्तरसूत्रं व्याख्यातम् ।।

यूनश्च कुत्सायाम् ।। 4.1.167 ।।

निवृत्तिप्रधानो विकल्प इति । न पुनः प्रवृत्तिप्रधान इति; पूर्वमेव प्रवृत्तत्वात् । यदाह---यूनश्चेति । न ह्यप्रवृत्तायां तस्यामेष निर्देश उपपद्यते । ननु च निवृत्तिरप्यनिर्वृत्ता या न शक्यते कर्तुम्, यो हि भुक्तवन्तं ब्रूयान्मा भुङ्क्था इति किं तेन कृतं स्यात् । तस्माद् `यूनश्च' इति निर्देशो युवसंज्ञाविषयो ल7णार्थः । जीवद्वंश्यस्य चतुर्थादेरिति, न तु युवसंज्ञाशिष्टस्य निर्देश इति वक्तव्यम् । एवं च प्रवृत्तिविकल्पोऽप्युपपद्यते, सा त प्रवृत्तिरसत्यपि सूत्रे लभ्यत इति मत्वा निवृत्तिप्रधान इत्युक्तम् । युवसंज्ञायां प्रतिषिद्धायामिति । तस्या अभावपक्ष इत्यर्थः । गार्ग्यो जाल्म इति । का पुनरत्र कुत्सा ? गोत्रत्वारोपिणामेव, अजीवद्वंश्या हि गोत्रसंज्ञकाः, ते प्रायेण चरमवयसो भवन्तीति तदारोपे भवति कुत्सा ।।

जनपदशब्दात्क्षत्त्रियादञ् ।। 4.1.168 ।।

जनपदशब्दोयः क्षत्त्रियवाचीति । नन्वेते पञ्चालादयः शब्दाः क्षत्त्रियशब्दा एव, तत्सम्बन्धात्तु `तस्य निवासः' इति तद्धिते कृते `जनपदे लुप्' इति च लुपि जनपदे वर्तन्ते, तत्कथमवरकालया जनपदशब्दतया नित्यक्षत्त्रियशब्दता लक्ष्यते ? कः पुनराह---क्षत्त्रियसम्बन्धादेव ते जनपदे वर्तन्त इति, सूत्रकारस्तावत् `लुब्योगाप्रख्यानात्' इति वदन् क्षत्त्रियेष्विव जनपदेऽपि स्वाभाविका पञ्चालादिशब्दस्य प्रवृत्तिरित्याह---पाञ्चाल इति । यदपि पञ्चालादयः शब्दा जनपदे बहुवचनान्ताः, क्षत्त्रिये त्वेकवचनान्ताः, तथापि प्रातिपदिकस्य विशेषणं जनपदत्वम्, न सुबन्तस्येत्येकवचनान्तादपि प्रत्ययो भवत्येव । ऐक्ष्वाक इति । इक्ष्वाकुशब्दस्य दाण्डिनायनादिसूत्रे टिलोपो निपातितः ।

द्रौह्यव इति । क्षत्त्रियवचन एवायं न जनपदशब्दः । ब्राह्मणस्य पञ्चालस्येति । बाह्वादिप्रभृतिषु येषां दर्शनमित्युक्तत्वात्कथमत्र प्रसङ्ग इति चिन्त्यम् । क्षत्त्रियसमानशब्दादिति । समानः शब्दो यस्य यमानशब्दः, क्षत्त्रियेण यस्य समानशब्दस्तस्माज्जनपदशब्दात् तस्येति षष्ठीसमर्थाद्राजन्यभिधेयेऽपत्यवत्प्रत्ययो भवति । अवृद्धादपीति प्राप्तस्य वुञोऽपवादः । क्वचितु वृत्तावेवाय ग्रन्थः पठ्यते । मागध इति । `द्व्यञ्मगध' इत्यण् ।।

वृद्धेत्कोसलाजादाञ्ञ्यङ् ।। 4.1.171 ।।

ङ्यण्वक्तव्य इति । डकारष्टिलोषार्थः, णकारो वृद्धिनिमित्तस्येति पुंवद्भाव प्रतिषेधार्थः । अन्यस्मादिति । गुणवचनाद्युधिष्ठिरपितृवचनाच्च । पुरीरण्वक्तव्यः पौरव इति क्वचित्पठ्यते, तत्र पुरुशब्दस्याजनपदशब्दत्वात्प्राग्दीव्यतीयेऽणि सिद्धे तद्राजसंज्ञार्थं वचनम् । जनपदवाचित्वे `द्व्यञ्मगध' इत्येव सिद्धम् ।।

कुरुनादिभ्यो ण्यः ।। 4.1.172 ।।

आदिशब्दो नकारेणैव सम्बध्यते, न कुरुशब्देन; तदादेर्जनपदस्याभावात्, तदाह---कुरुशब्दान्नकारादिभ्यश्चेति । अमञोरपवाद इति । कुरुशब्दाद् `द्व्यञ्मगध' इत्यणोऽपवादः, नादिभ्यस्त्वञः । नैषध्य इति । कथं `नैषधोऽर्हति चेदघम्' इति ? स्वच्छन्दवाच ऋषयः । कथं `स नैषधस्यार्थपतेः सुतायाम्' इति ? निराङ्कुशाः कवयः । शेषविवक्षायां वोभयत्राण्समर्थनीयः ।।

साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ।। 4.1.173 ।।

सल्वा क्षत्त्रियेति पाठः, तन्नामिकेति वचनात्, इदं हि तन्नामिकाणः प्राप्त्यर्थमुक्तम् । न च साल्वाशब्दात्तस्य प्राप्तिः, वृद्धत्वात, सलेर्वप्रत्ययः । अणपीष्यत इति । साल्वावयवे अपदातौ साल्वादिति निर्देशात्, न च निपातितोऽण् ढकोऽपवादः, `साल्वेयगान्धारिभ्या च' इति निर्देशात् । तेभ्यः क्षत्त्रियवृत्तिभ्य इति । `जनपदशब्दात्क्षत्त्रियात्' इत्यनुवृत्तेरेतल्लभ्यते ।

`उदुम्बरास्तिलखलाः' इति श्लोकः प्रदर्शनार्थः । तेन बुस, अजमीढ, आजकन्द--इत्येतेभ्यो।ञपि भवति; तथा च भाष्य उदाहृतम्---बौसिः, आजमीढिः, आजकन्दिरिति । साल्वावयवसंज्ञिता इति । साल्वावयव---इत्येवं शब्दिता इत्यर्थः ।।

ते तद्राजाः ।। 4.1.174 ।।

तथा चैवोदाहृतमिति । तत्र `तद्राजस्य बहुषु तेनैवास्त्रियाम्' मित्यत्र कार्याश्रयमुदाहृतम्, इह तु प्रकरणे रूपाश्रयम् ।।

कम्बोजाल्लुक् ।। 4.1.175 ।।

चोलः, शक इति । `द्व्यञ्मगध' इत्यस्याणः । केरल इत्यत्राञः ।।
स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ।। 4.1.176 ।।
अवन्ती, कुन्तीति । लुकि कृते `इतो मनुष्यजातेः' इति ङीष । कुरूरिति । `ऊङुतः' ।।
अतश्च ।। 4.1.177 ।।
तकारो विस्पष्टार्थ इति । असति हि तस्मिन् `अस्य' इति निर्देशः स्यात्, ततश्च सन्देहः स्यात्---किमयं वर्णनिर्देशः ? आहोस्विदिदम इति ? इदमश्च निर्देशेऽनन्तरस्येञो लुक् प्रसज्येत, तकारे सत्येष दोषो न भवति, तपरनिर्देशस्य भूयसा वर्णेष्वेव प्रसिद्धत्वात् `तपरस्तत्कालस्य ' इति संज्ञाकरणाच्च । कथं `माद्रीसुतौ पुष्पफले समृद्धे' इति ? स्वच्छन्दवाच ऋषयः, मद्रीसुतावित्येव वा पाठ्यम् ।
अवन्त्यादिभ्यो लुग्वचनादिति । यद्यत्र तदन्तविधिः स्यादवन्त्यादिभ्यो लुग्वचनमनर्थकं स्याद्; अनेनैव सिद्धत्वात् । तदन्तविधौ त्वसति अकारमात्रस्य ग्रहणेन सिध्यतीत्यवन्त्यादिभ्यो लुग्वचनमर्थवद् भवति ।।
न प्राच्यभर्गादियौधेयादिभ्यः ।। 4.1.178 ।।
पाच्चालीत्यादि । पञ्चालादयः शरवत्याः प्राञ्चो जनपदाः । भर्गादिग्रहणमप्रागर्थम् । भृञो गः, भर्गाः । कृञ उः, करुः, तमोषति=द्वेष्टि, मूलविभूजादित्वात्कः, करूषाः । चिनोतेः कयः आदेश्च कः, बहुलवचनादित्संज्ञाभावः, केकयः । कशेर्मिरः, कश्मीरः । साल्वशब्दो निरुक्तः । शोभनानि स्थलान्यस्य सुस्थलः । उरसा शेते उरशः । `कुरुनादिभ्यो ण्यः' कौरव्यः । यौधेयीत्यादि । युधाया अपत्यम्, शुभ्राया अपत्यम्, `द्व्यचः' इति ढक् । शुभ्राशब्दात् `शुभ्रादिभ्यश्च' इति, ततः स्वार्थे `पर्श्वादियौधेयादिभ्यः' इत्यञ् । यद्यञो लुक् स्याड्ढग्लक्षणे ङीपि सति उतादत्तनिवृत्तिस्वरः स्यात्, लुकि तु प्रतिषिद्धे `शाङ्गर्रवाद्यञः' इति ङीनि सत्याद्युदात्तं भवति ।
कस्य पुनरिति । अस्य वक्ष्यमाणोऽभिप्रायः, तमेव प्रकाशयति---कथं पुनरिति । परिहरति---एतदेवेति पर्शुरिति । पर्शुः क्षत्त्रियो जनपदेन समानशब्दः, तस्यापत्यं सङ्घः, स्त्रीत्वविशिष्टः, `द्व्यञ्मगध' इत्यण्, तस्य `अतश्च' इति लुक्, पुनः पर्श्वादिलक्षणः स्वार्थिकोऽण्, तस्यापि लुक् । एवं रक्षा इति । रक्षसः क्षत्त्रियस्यापत्यम्, स्त्रीत्वविशिष्टः सङ्घः, पूर्ववदण्, द्वयस्यापि लुक्, `अत्वसन्तस्य' इति दीर्घः । आसुरीति । जनपदलक्षणस्याञो लुकि पर्श्वादिलक्षणस्याणो लुक्, जातिलक्षणो ङीष् । ज्ञापकत्वमेव द्रढयति---तथा चोक्तमिति । वार्त्तिककारेणैदुक्तम् । यौधेयादिषु त्रयो निरुक्ताः; ज्यायासहितो बाणो यस्याः सा ज्याब्राणा, तस्या अपत्यं ज्याबाणेयः । ज्यावानेय इत्यन्ये पठन्ति, तत्र ज्यावानो यस्या ज्यावाना । `घृ क्षरणे' `धृ धारणे' आभ्यां क्तिजन्ताभ्याम् `इतश्चानिञः' इति ढक्, घार्त्तेयः, धार्त्तेयः । त्रयो गर्त्ता येषां ते त्रिगर्त्ताः । `भृञोऽतच्', भरतः । वशेः कर्मणि किः, उशिः, उशयः, उष्टा नरा यस्य स उशीनरः, `अन्येषामपि दृश्यते' इति दीर्घः ।।
इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां चतुर्थाध्यायस्य प्रथमः पादः
------------------*********************------------------

## 4.2

अथ चतुर्थाध्याये द्वितीयः पादः ---4
पदमञ्जरी
तेन रक्तं रागात् ।। 4.2.1 ।।
रञ्जिरयमस्त्येवाभिष्वङ्गे----भोजने रक्त इति; अस्ति वर्णविशेषे---रक्ता गौः, लोहितेत्यर्थः; अस्ति शुक्लस्य वर्णान्तरापादने---रक्तः पट इति । तत्राद्ययोरर्थयोर्ग्रहणे, रूपेण कान्तायां रक्तः, कोपेन रक्तं मुखमित्यत्रापि प्राप्नोतीति मन्यमानस्तृतीयमर्थमाश्रित्याह---शुक्लस्येत्यादि ।
एतच्चाभिधानस्वाभाव्याल्लभ्यते । रज्यतेऽनेन राग इति । `घञी च भावकरणयोः' इति नलोपः । भावसाधनस्तु रागशब्दो न भवति, न हि रञ्जनक्रियैव रञ्जनक्रियायाः करणं भवति । रागविशेषवाचिन इति । स्वरूपग्रहणं तु न भवति; उत्तरत्र लाक्षादीनां रागग्रहणेन विशेषणात् ।
रागादिति किमिति । अनभिधानादेव कर्तृवाचिनो न भविष्यति, `दैवदत्तं वस्त्रम्' इति ह्युक्ते स्वस्वामिभावस्यैव सम्प्रत्ययादिति प्रश्नः । लक्षणैकशरणो नैतत्प्रतिपत्तुमर्हतीत्युक्तम् ।
कथमिति । न ह्यत्र वर्णान्तरमाहितमिति प्रश्नः उपमानादिति । रूपसादृश्यनिमित्तात् ।।
लाक्षारोटनाट्ठक् ।। 4.2.2 ।।
शकलकर्दमयोर्वार्त्तिके दर्शनात्सूत्रे प्रक्षेपः ।
नील्या इति । ओषधिविशेषो नीलि, अम्बाधनार्थवचनम्, नीलशब्दस्तु गुणशब्दत्वादेव नीलीरक्ते वस्त्रे सिध्यति ।
पीतादिति । रागविशेषिवाची पीतशब्दः । इदमपि वचनमण्बाधनार्थमेव । स्वार्थिककन्प्रत्ययान्तस्तु पीतकशब्द गुणवचनो वस्त्रे लभ्यते ।।
नक्षत्रेण युक्तः कालः ।। 4.2.3 ।।

इह पारमर्षाः कालं क्रियात्मानमिच्छन्ति, यथोक्तम्---
आदित्य---ग्रह---नक्षत्र---परिस्पन्दमथापरे ।
भिन्नमावृतिभेदेन कालं कालविदो विदुः ।। इति ।
वैशेषिकास्तु द्रव्यमाकाशकल्पम्, उक्तं च---
व्यापारव्यतिरेकेण कालमेके प्रचक्षते ।
नित्यमेकं विभु द्रव्यं परिमाणं क्रियावताम् ।। इति ।
द्वयोरपि दर्शनयोर्नक्षत्रेण कालस्य योगो न सम्भवति, किं कारणम् ? अप्राप्तिपूर्विका प्राप्तिः=योगः, कालविशेषावधारणार्थो हि लोके पौषादिशब्दप्रयोगः, एवंविध एव च योगः कालविशेषावधारणहेतुर्भवति । द्रव्यपक्षे तावद् द्वयोरपि नक्षत्रकालयोर्नित्यत्वात्कालस्य च सर्वगतत्वान्न कदाचिदयोगः । क्रियापक्षेऽपि नक्षत्रगतायाः क्रियायाः कालख्यायाः समवायलक्षणो योगोऽव्यभिचारादविशेषणम् । सूर्यादिगतायास्त्वसम्भवादविशेषणम् । यदि तु यथाकथञ्चिद्योगः, तदा व्यभिचाराभावः । न हि सोऽस्त्यहोरात्रो यः पुष्येण न युक्तः । तस्मात् `नक्षत्रेण युक्तः कालः' इत्यनुपपन्नो निर्देशः ।
कथं तर्हि निर्देशः कर्त्तव्यः, नक्षत्रादेर्युक्तान्ताद्युक्ते काले प्रत्ययविधानं युक्तलोपश्च, पुष्येण युक्तश्चन्द्रमां पुष्ययुक्तः, पुष्ययुक्तेन युक्तः काल इति पुष्ययुक्तशब्दाच्चन्द्रमसि वर्त्तमानात्प्रत्ययः, युक्तशब्दस्य च लोपः, पौषी रात्रिः, पौषमहः, एवं सर्वत्र । तत्र युक्तवद्भावे दोषः, मधायुक्तशब्दात्प्रत्यये क्रियमाणे तस्य लुपि मघा इति स्त्रीत्वबहुत्वे न सिद्ध्यतः, युक्तस्यैव तु चन्द्रमसो लिङ्गवचनप्रसङ्गः, अतो नक्षत्रवाचिन एव प्रत्यययोर्योगः सम्भवतीति मत्वा पृच्छति---कथं पुनरिति । न चन्द्रमसैव योगे पुष्यादीनां नक्षत्रता; ज्योतिर्मात्रवचनत्वान्नक्षत्र शब्दस्य । ये तु पुष्यादीनामावस्थिकी नक्षत्रता चन्द्रमसा योगे भवतीत्याहुः, तेषामयं प्रश्नोऽनुपपन्नः । पुष्यादिसमीपस्थ इति । मुख्यार्थासम्भवे गौणस्याश्रयणमिति भावः । तत्र मघादयः शब्दा अपरित्यक्तस्वलिङ्गसङ्ख्या एव चन्द्रमसि वर्त्तन्ते, यथा---मञ्चादयः, मञ्चान् स्त्रियः पश्येति । तेन युक्तवद्भावविषयेऽपि दोषाभावः । पुष्यसमीपस्थेन चन्द्रमसा युक्त इत्यर्थ इति । यद्यपि चन्द्रमसा कालस्य योगो नित्यः, चन्द्रमसो नित्यत्वात्; पुष्यसमीपेन तु कादाचित्कः, पुष्यसमीपतायाः कादाचित्कत्वात् । पौषीति `सूर्यतिष्य' इत्यादिना यलोपः ।।
लुबविशेषे ।। 4.2.4 ।।
यद्यविशेषे लुब् भवति, इहापि प्राप्नोति---पौषी रात्रिः, पौषमहरिति, अत्राप्यद्य ह्यो वेति विशेषो न गम्यते । अथ रात्रिरहरिति । विशेषा वसायात्तदाश्रयः प्रतिषेधो भवति, इहापि तर्हि न स्याद्---अद्य पुष्यो ह्यः कृत्तिका इति, अद्यत्वादिविशेषावसायात्; `पुष्ये पायसमश्नीयात्' इत्यादावेव तु स्याद् यत्र नमनागपि विशेषावसायः ? अत आह---नचेदित्यादि । रात्र्यादिरित्यादिशब्देन मुहूर्त्तादेः परिग्रहः । विशेषोऽभिधीयते इति । प्रत्ययान्तेन । एतदेव स्पष्टयति--यावानिति । कियाँश्च कालो नक्षत्रेण युज्यते ? इत्याह---अहोरात्र इति । षष्टिनाडिकात्मक इत्यर्थः तावन्तं हि कालमेकस्य नक्षत्रस्य समीपे चन्द्रमा वर्त्तते । तदेतदेवं यावान्कालो नक्षत्रेण युज्यते तस्य सर्वस्य प्रत्ययान्तेनाभिधानमविशेषः, तदेकदेशस्याभिधानं विशेषः । एतच्च प्रत्ययान्तेऽनुप्रवेशादन्तरङ्गत्वाच्च लभ्यते । प्रसज्यप्रतिषेधश्चायम्, तेन पौषोऽहोरात्र इत्यत्र समुदायेनापि प्रतीयमानोऽवयवद्वयात्मकः प्रतीयत इति तदाश्रयः प्रतिषेधो भवति, इह पुष्येण युक्ता पौर्णमासी पौषी, मघाभिर्युक्ता माघीत्यादौ लुप् प्राप्नोति ? ज्ञापकात्सिद्धम्, यदयम् `विभाषा फल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः' इति निर्दिशति, तज्ज्ञापयति---पौर्णमास्यां लुब्न भवतीति । श्रवणाशब्दात्तु भवति---`श्रवणाकार्त्तकी' इति निर्देशादेव । कथं तर्हि श्रावण्यां पौर्णमास्यामिति ? अबाधकान्यपि निपातनानि भवन्ति ।।
संज्ञायां श्रवणश्वत्थाभ्याम् ।। 4.2.5 ।।
विशेषार्थोऽयमारम्भ इति । न तु संज्ञायां नियमार्थः; विधिसम्भवे नियमायोगात्, `श्रवणाकार्त्तिकी' इत्यसंज्ञायामपि लुपो दर्शनाच्च ।
लुपि युक्तवद्भावः कस्मान्न भवतीति । श्रवणा रात्रिरित्यत्र । निपातनादिति । ङीप्त्वत्र प्रत्ययलक्षणेन भवति; `अण् योऽकारः' इति विज्ञानात् ।।
द्वन्द्वाच्छः ।। 4.2.6 ।।
नक्षत्रग्रहणमनुवृत्तं षष्ठ्यन्ततया विपरिणम्यते, तच्च द्वन्द्वस्य विशेषणमित्याह---नक्षत्रद्वन्द्वादिति । राधानुराधीया रात्रिरिति । एकदेशद्वारेण रात्र्यादेर्नक्षत्रद्वययोगः । अद्य राधानुराधीयमिति । अद्येत्यस्यालिङ्गत्वेऽपि तद्विशेषणस्य नपुंसकत्वम्, लोकाश्रयत्वाल्लिङ्गस्य, लुपं परत्वाद्बाधते । छ इति । ननु युगपत्प्राप्तयोर्विप्रतिषेधः, न च लुप्छयोर्युगपत्प्रसङ्गः, प्रत्ययादर्शनस्य हि लुपसंज्ञा, तस्य कथं प्रत्ययेन सह प्रसङ्गः ? तस्मादयमत्रार्थः---`मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरान्' इति, एवमयं लुबण एव भवति, नास्य छस्य । तेनायं छो लुपो विषये श्रूयते, एतदेव लुपं परत्वाद्बाधते च्छ इति बाधकत्वम् । परत्वादिति । यतोऽयं परस्तेन लुबस्य न भवति, तेन तद्विषयेऽप्यसौ श्रूयत इति ।।
दृष्टं साम ।। 4.2.7 ।।
यस्य साम्नो विशिष्टकार्यविषये विनियोगो येन ज्ञातस्तेन दृष्टमित्युच्यते ।।
कलेर्ढक् ।। 4.2.8 ।।
सर्वत्रेति । न केवलमग्नेः `सास्य देवता' इत्यस्मिन्नेवार्थे ढक्, नापि केवलं दृष्टं सामेत्यत्रैवार्थे कलेर्ढग्; अपि तु सर्वेष्वे व प्राग्दीव्यतीयेष्वित्यर्थः ।
संग्रहश्लोके जति च द्विरण् डिद्वा विधीयते इति पाठः । जातेऽर्थे योऽण् विधीयते स वा डिद्भवतीत्यर्थः ।

न विद्याया इति । विद्यावाचिन ईकग् न भवतीत्यर्थः ।
गोत्रादङ्कवदिति । अङ्के यो दृष्टः प्रत्ययः स सर्वोऽतिदिश्यते, न त्वङ्क एवाहत्य विहितः, तेन `सङ्घाङ्कलक्षणेषु' इत्यस्याणः `गोत्रचरणाद् वुञ्' इत्यस्य च वुञोऽतिदेशः ।।
वामदेवाद् ड्यड्ड्यौ ।। 4.2.9 ।।
डिस्कारणं किमर्थमिति । यस्येति लोपेनैव सिद्धि मत्वा प्रश्नः । अनयोर्ग्रहणं मा भूदिति । अथ `क्रियमाणेऽपि डित्करणे कस्मादेवानयोर्ग्रहणं न भवति ? तत्राह---अननुबन्धकेति । `अननुबन्धकस्य ग्रहणे न सानुबन्धकस्य' इति यग्रहणे ड्यड्यतोर्ग्रहणं न भवति, एकानुबन्धकपरिभाषया तु यद्ग्रहणे ड्यतो ग्रहणाभावः । अवामदेव्यमिति । अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमेव भवति ।
संग्रहश्लोके अतदर्थे इत्यनेन `ययतोश्चातदर्थे' इत्येतत्सूत्रं लक्ष्यते । नञ्स्वर इति । नञाश्रयः स्वरो नञ्स्वरः, उत्तरपदान्तोदात्तत्वं तस्मिन्विधीयमाने इत्यर्थः ।।
परिवृतो रथः ।। 4.2.10 ।।
चार्मण इति । `अन्' इति प्रकृतिभावः । परिवृतो रथ इति । तदेकान्तग्रहणम्, येन परिवृतो रथस्तदेकान्तश्चेद्भवतीति वक्तव्यम् । तेन चर्मवस्त्रादावेव भवति, इतरथा छात्त्रादावपि प्रसङ्ग इत्याह---समन्ताद्वेष्टित इत्यादि । वृणोतिर्वेष्टने परिः सर्वतो भावे । यस्य न कश्चिदवयव इति ।
बाहुल्याभिप्रायमेतत्, न हि चक्रनेमिप्रभृतयश्चर्मणा पिधीयन्ते नाप्यन्तरावयवाः । ननु तत्कारी चायं यदाह---छात्त्रैः परिवृत इति । तद्द्वेषी च, यदाह---समन्ताद्वेष्टित इत्यादि । नायं तत्कारी, औपचारिकोऽयं प्रयोगः, परिवृतः इव परिवृतः ।।
पाण्डुकम्बलादिनिः ।। 4.2.11 ।।
मत्वर्थीयेनैव सिद्ध इति । यो हे येन परिवृतः स तस्यास्ति । अणो निवृत्त्यर्थमिति । यद्येतन्नारभ्येत, परिवृतो रथ इति विवक्षायां पूर्वेणाण् प्रसज्येत ।।
द्वैपवैयाघ्रादञ् ।। 4.2.12 ।।
द्वीपिव्याघ्रयोरिति । `विरूपाणामपि समानार्थानाम्' एकशेषः प्राप्नोति, तत्रावान्तरजातिभेदेन भिन्नार्थत्वान्न भविष्यतीति समाधातव्यम् । चर्मणैव रथस्य परिवरणं सम्भवति, न विकारमात्रेणेति `चर्मणी' इत्युक्तम् । द्वीषिव्याघ्रशब्दाभ्याम् प्राणिरजतादिभ्योऽञ्' इत्यञ्प्रत्ययः, द्वीपिनष्टिलोपः ।।
कौमारापूर्ववचने ।। 4.2.13 ।।
अपूर्ववचन इति । अपूर्वशब्दो भावप्रधानः । अपूर्वत्वस्य वचनमपूर्ववचनम्, तस्मिन्नपूर्ववचने । कस्य पुनरपूर्वत्वोक्तावित्याह---पाणिग्रहणस्येति । एतच्च निपातनसामर्थ्याल्लभ्यते । उभयतः । आद्यादित्वात्तसिः । स्त्रीपुंसयोरुभयोरप्येतन्निपातनमिष्यते, उभयोश्च पक्षयोरपूर्वत्वं स्त्रिया एव, न पुंस इत्यर्थः । तत्र कौमारेति स्त्रीपुंससाधारणप्रातिपदिकमात्रनिर्देशादवसीयते---उभयोरपि निपातनमिति । स्त्रिया एवापूर्वत्वमित्येतत्तु निपातनबलाल्लभ्यते । अपूर्वपतिमिति । यस्याः पाणिर्न केनचिद्गृहीतपूर्वः साऽपूर्वपतिः, न विद्यते पूर्वः पतिरिति कृत्वा, तामुपपन्नः=प्राप्तः, भार्यात्वेन स्वीकृतवानित्यर्थः । स तु पूर्वकृतोद्वाहो भवतु मा वा भूत् । अपूर्वपतिरिति । अयमपि बहुव्रीहिः, अत्रापि पुरुषः पूर्ववत् ।
कोमारेत्यादि । कौमारेति निपात्यतेऽपूर्वचने । किमत्र निपात्यते ? कुमार्या अण् विधीयते । कदा ? अपूर्वत्वं यदा तस्याः । यदा कुमार्या अपूर्वत्वं न पुंसस्तदेत्यर्थः । कुमार्या भवतीति वेति । अनेन योगः प्रत्याख्यायते; यः कुमारीमुपपन्नस्तस्यामसौ भवति, तदायत्तत्वाद्धर्माचरणादेः, ततश्च `तत्र भवः' इत्यवाण सिद्धः । यद्यपि वाण्याद्यपि कुमार्यां भवति तथापि सत्यभिधाने `तत्र भावः' इति भवत्येव । सूत्रारम्भेऽपि हि नासौ दण्डवारितः, एवं तावत्कौमार इति सिद्धम् । स्त्रियामपि सिद्धम्, कथम् ? कौमारस्य स्त्री कौमारी, प्रत्यासत्त्या च यस्यामसाभवन् कौमारव्यपदेशं लभते सैवाभिधीयते न स्त्र्यन्तरम्, एतच्च सूत्रारम्भेऽप्यङ्गीकर्तव्यम् ।।
तत्रोद्धृतममत्रेभ्यः ।। 4.2.14 ।।
अत्रोद्धरतिरुद्धरणपूर्वके निधाने वर्तते, तेन सप्तमीसमर्थाद् विभक्तिर्नोपपद्यतदे । भुक्तोच्छिष्टमिति । शिष्टमेवोच्छिष्टम्, यथा वच्छिनष्टि न सर्वं जुहोतीति भुक्तशिष्टमित्यर्थः । यस्योद्धरणमिति प्रासिद्धिरिति । कृत्यल्युटो बहुलम्' इति भूते कर्मणि ल्युट् । शरावेषूद्धृत इति । उद्धृत्यनेहित इत्यर्थः ।।
स्थण्डिलाच्छयितरि व्रते । 4.2.15 ।।
शास्त्रित इति । संजातशास्त्र इत्यर्थः । यद्वा---तृतीयासमर्थाद्विधानेऽर्थे `प्रातिपदिकाद्धत्वर्थे' इति णिच्, कर्मणि क्तः, शास्त्रेण विहित इत्यर्थः । स्थण्डिले शयितुं व्रतमस्येति । तुमुनत्र वक्तव्यः; व्रतस्याक्रियारूपत्वात् ।।
संस्कृतम्भक्षाः ।। 4.2.16 ।।
संस्कृतमित्येतत् कर्मसामान्ये व्युत्पाद्यते, तेन नपुंसकलिङ्गमेकवचनं च, भक्षा इत्येतत्तु अपूपाद्यभ्यवहार्यविशेषे व्युत्पाद्यते, तेन पुलिङ्गं बहुवचनं च । तत्र वाक्यार्थगम्यस्यार्थस्य पदसंस्कारेऽनुपयोगात्संस्कृतमित्येनद्भवति, अत एव विरम्य सम्बन्धं दर्शयति---यत्तत्संस्कृतम्भक्षास्ते चेद् भवन्तीति, अणौ यत्कर्म णौ चेत् स कर्तेतिवत्, तच्छब्दस्य प्रतिनिर्दिश्यमानलिङ्गता । खरविशदमिति । खरम्= कठिनम्, विशदम्= विभक्तम् । भक्षशब्देनोच्यत इति । यद्यप्यब्भक्षो वायुभक्ष इति भक्षयतेरन्यत्रापि प्रयोगः, भक्षशब्दस्तु तत्रैव प्रसिद्ध इति भावः ।।
शूलोखाद्यत् ।। 4.2.17 ।।

शूलोखादिति । समाहारद्वन्द्वः, उखा=पात्रविशेषः । यस्तु स्वाङ्गवाच्युखाशब्दस्तस्येह ग्रहणं न भवति; स्वाङ्गे संस्कर्तव्यस्याभावात् । कथमुख्योऽग्निरिति । न ह्यसौ भक्षः, भवार्थे दिगादित्वाद् द्रष्टव्यः ।।

दध्नष्ठक् ।। 4.2.18 ।।

इह तु दधि केवलमाधारभूतमिति । यथा शूरे संस्क्रियमाणस्यमांसस्य शूलम् । यद्यप्यत्र दध्यपि संस्कारकम्, तथापि न तद्विवक्षितम्, किन्तु तदाधारस्य द्रव्यान्तरेण यः संस्कारः स एव विवक्षित इति भावः ।।

उदश्वितोऽन्यतरस्याम् ।। 4.2.19 ।।

औदश्वित्क इति । `इसुसुक्तान्तात्कः' ।।

क्षीराड्ढञ् ।। 4.2.20 ।।

अत्र संस्कृतमित्येव सम्बध्यते, न भक्षा इति; तेन यवाग्वामपि भवति । क्षैरेयीति । `टिड्ढाणञ्' इत्यादिना ङीप् ।।

सास्मिन्पौर्णमासीति संज्ञायाम् ।। 4.2.21 ।।

ततश्चेद्विवक्षेति । ततः प्रत्ययान्ताल्लोकस्य विवक्षा भवति चेद् एवं प्रत्ययो भवति, नान्यथेत्यर्थः । संज्ञायामिति समुदायोपाधिरिति । एतदेव स्पष्टयति---प्रत्ययान्तेन चेदिति । पौषी पौर्णमासीति । `लुबविशेषे' इति पौर्णमास्यां लुब्न भवतीति पूर्वमेवोक्तम् । भृतकमासे चेति । भृता एव भृतकाः, कर्मकरास्तेषां यो मासः कर्मकरणादारभ्य त्रिशद्रात्रलक्षणः स यदा पौष्या पौर्णमास्या तद्वान् भवति । वस्तुतश्च न माघादिव्यपदेशभाक् तत्रेत्यर्थः ।

तुल्यमेव फलमिति । किं पुनस्तदित्याह---प्रयोगानुसारणमिति । ण्यर्थाल्ल्यट् । संज्ञाशब्देन तुल्यतामिति । तुल्यफलतामित्यर्थः । इति कणस्य ज्ञापयितुमिति । किं पुनरिदं ज्ञापकसाध्यम् ? तत्राह---न ह्ययमिति । ज्ञापनस्य प्रयोजनं दर्शयति--संज्ञार्थत्वे त्विति । संज्ञाब्देन तुल्यफलत्वे इत्यर्थः । प्रवृत्तिभेदेन चायमर्थो ज्ञाप्यत इति । संज्ञायामिति द्वितीयाप्रवृत्तिः, इह शाल्त्रे `संज्ञायाम्' इत्यस्यार्थे इतिशब्दो वेदितव्य इति परिभाषा सम्पद्यते । पूर्णमासादणिति । पूर्णो मासोऽस्यां तथाविति बहुव्रीहौ प्रज्ञादेराकृतिगणत्वादस्मादेव वा निपातनादण् । मा इति चन्द्रमा उच्यत इति । चन्द्रमश्शब्दैकदेशप्रयोगः, सत्याभामा भामेतिवत् ।।

आग्रहायण्यश्वत्थाट्ठक् ।। 4.2.22 ।।

अग्रे हायनमस्या इत्याग्रहायणी, प्रज्ञादेराकृतिगणत्वादण्, `पूर्वपदात्संज्ञायाम्' इति णत्वम् । अश्वत्थेन युक्ता पौर्णमासी अश्वत्थ इति । निपातनात्पौर्णमास्यामपि लुप् ।।

सास्य देवता ।। 4.2.24 ।।

यागसम्प्रदानं देवतेति । यद्यपि देवशब्दो मनुष्यादिवज्जातिवचनः, स्वार्थिकश्च तल्; तथापि समुदायशक्त्या देवताशब्दो यागे दर्श पूर्णमासौ यद्यत्सम्प्रदानत्वेन चोदितं तत्र सर्वत्र वर्तते, न स जातिविशेष इत्यर्थः । देयस्य पुरोडाशादेः स्वामिनीति । दिवेरैश्वर्यकर्मणो देवताशब्दव्युत्पत्ति दर्शयति, एवं च कृत्वा `वायृवृतुपित्रुषसो यत्',`कालेभ्यो भववत्' इति वचनमुपपद्यते, न ह्यृतुषु पितृषु उषसि वा जातिरस्ति । तथा पितृदेवत्यम्, देवदेवत्यमिति प्रयोगोऽप्येवमेवोपपद्यते ।

कथमिति । पुरोडाशादिकस्य देयस्याभावादिन्द्रस्य सम्प्रदानत्वं नास्तीति प्रश्नः । मन्त्रस्तुत्यामपीत्यादि । नानेनौपचारिकत्वं प्रयोगस्योच्यते, अपि तु मुख्य एव प्रयोगः, यागसम्प्रदाने सार्वलौकिकः प्रयोगः, अयं तु नैरुक्तानामित्येतावान्विशेषः । उपचरन्तीति ब्रुवते, प्रयुञ्जत इत्यर्थः ।

कथमित्यादि । पूर्वोक्तं प्रकारद्वयमत्र नास्तीति प्रश्नः । उपेमानादिति । काषायौ गर्दभस्य कर्णावितिवद् गौणोऽयं प्रयोग इत्यर्थः । सेति प्रकृत इति । प्रकृतं हि साग्रहणं संज्ञया सम्बद्धमिति तदनुवृत्तौ संज्ञाया अप्यनुवृत्तिः स्यात् ।।

कस्येत् ।। 4.2.25 ।।

किमो विभक्तौ कादेशं कृत्वा कस्येति निर्दिष्टमित्याशङ्कामपनयति---कशब्द इति । एवं च कृत्वा कायानुब्रूहीति सम्प्रैषः । कस्मै अनुब्रूहीति, `न कस्मै देवाय हविषा विधेम' इति तु छान्दसः स्मैभावः, यदिन्द्राग्नी अवमस्यामित्यादिवत् । कायमिति । इत्वे कृते यस्येति लोपः प्राप्तः परत्वादादिवृद्ध्या बाध्यते, श्रीर्देवतास्य श्रायमितिवत् । `सोमाट्ट्यण्' इत्यत्र कग्रहणे च क्रियमाणे यद्यपि यस्येति लोपात्परत्वाद् वृद्धिर्भवति, कृतायामपि वृद्धौ यस्येति लोपः स्यादेव ।।

अपोनप्त्रपान्नप्तृभ्यां घः ।। 4.2.27 ।।

अपोनपात् अपांनपादिति देवतानामधेये इति । पृषोदरादित्वादनयोः साधुत्वम् । तयोस्तु प्रत्ययसन्नियोगेनेति । एवं च अपोनपाते अनुब्रूहि, अपांनपातेऽनुब्रूहि, अपोनपात्तं यज, अपां नपातं यजेति सम्प्रैषः । वेदे तु अपोनप्त्रे स्वाहेति छान्दसः प्रयोगः ।।

छ च ।। 4.2.28 ।।

योगविभाग इत्यादि । पूर्वसूत्र एव छग्रहणे सति घच्छौ द्वौ प्रत्ययौ, प्रकृती अपि द्वे इति स्यात्सङ्ख्यातानुदेशः । शतरुद्रीयमिति । शतशब्दोऽनन्तवचनः, शतं रुद्रा देवताऽस्येति घच्छौ, तयोविधानसामर्थ्याद् `द्विगोर्लुगनपत्ये' लुग्न भवति ।।

महेन्द्राद्घाणो च ।। 4.2.29 ।।

सौमीति । टित्त्वान्ङीप्, `हलस्तद्धितस्य' इति यलोपः ।।

वाय्वृतुपित्रुषसो यत् ।। 4.2.31 ।।
वायव्यमिति । `ओर्गुणः', `वान्तो यि प्रत्यये' पित्र्यमिति । `रीङृतः' इति रीङ्, यस्येति लोपः ।।
द्यावापृथिवीशुनासीरमरुत्त्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च ।। 4.2.32 ।।
अणो ण्यस्य चापवाद इति । वास्तोष्पतिशब्दात्पत्युत्तरपदस्य ण्यस्यापवादः, शेषेभ्योऽणः । द्यावापृथिव्याविति । `दिवो द्यावा', `दिवसश्च पृथिव्याम्' इति द्यावादेशः । शुनासीराविति । `देवता द्वन्द्वे च' इत्यानङादेशः । शुनो वायुः, सीर आदित्य इति । अन्ये तु एकमेव शुनसीरमिन्द्रस्य, गुणममन्यन्त, यथाहश्वलायनः---`इन्द्रो वा शुनासीरः' इति । मन्त्रलिङ्गञ्च भवति---इन्द्रं वयं शुनासीरमस्मिन्यज्ञे हवामहे' इति । मरुतोऽस्य सन्ति मरुत्वानिन्द्रः । अग्नीषोमीयमिति । `ईदग्नेः सोमवरुणयोः' वास्तोः पतिर्वास्तोष्पतिः, अस्मादेव निर्देशात्साधुः । गृहमेधशब्दमकारान्तं बह्वृचा मन्यन्ते । `मरुद्भ्यो गृहमेधेभ्य उत्तरा' इत्याश्वलायनः । `गृहमेधास आगता' इति च मन्त्रलिङ्गम् । `मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनम्' इति तु तैत्तिरीयकम् । तत्र देकारान्तो नकारान्तो वेति विप्रतिपन्नाः ।।
अग्नेर्ढक् ।। 4.2.33 ।।
कलेर्ढगित्यत्रोक्तमेवार्थं स्मरयति---प्राग्दीव्यतीयेष्विति ।।
कालेभ्यो भववत् ।। 4.2.34 ।।
कालविशेषवाचिभ्य इति । स्वरूपग्रहणं तु न भवति; बहुवचननिर्देशात् । वत्कारणमित्यादि । असति वत्करणे `कालेभ्यो भवः' इत्युच्यमाने यदि तावदेवं सम्बन्धः, कालेभ्यो भवे ये प्रत्यया विधास्यन्ते ते `सास्य देवता' इत्यत्रार्थे भवन्तीति देवताप्रकृतिरविशेषिता स्यात्, ततश्च `कालट्ठञ्' इति ठञिन्द्रादेरपि प्राप्नोति । अथ पुनरेवं सम्बन्धः---भवे ये प्रत्यया विधास्यन्ते ते भवन्ति कालेभ्यो देवताभ्य इति ? एवमपि भवप्रत्यया न विशेषिताः स्युः, ततश्च `दिगादिभ्यो यत्' इति यत् प्रत्ययोऽपि भवे विहितः कालवाचिभ्योऽस्मिन्नर्थे प्राप्नोति । अथाप्येवं सम्बन्धः---कालेभ्यो भवे ये प्रत्ययास्ते भवन्ति, कालेभ्य एव देवतार्थे इति तत्र सकृत् श्रुतस्य तस्य कालशब्दस्यैवमुभयसम्बन्ध एव तावद् दुर्लभः । अथापि लभ्येत, एवमपि यः कश्चित्कालाद्भवे प्रत्ययो यतः कुतश्चिद्देवतायाः स्याद् ऋतुभ्योऽण् मुहूर्त्तादेरपि प्राप्नोति । वतिनिर्देशे तु सति सादृश्यपरिग्रहो भवति, तेन याभ्यः प्रकृतिभ्यो येन विशेषणेन भवेऽर्थे विधास्यन्ते ये प्रत्ययाः, इहापि ताभ्य एव प्रकृतिभ्यस्तेनैव विशेषणेन त एव प्रत्यया भवन्तीति न किञ्चिदनिष्टम् ।।
महाराजप्रोष्ठपदाट्ठञ् ।। 4.2.35 ।।
महाराजो वैश्रवणः, प्रोष्ठपदशब्दात्पूर्वेण नक्षत्राणि प्राप्ते वचनम्, नवयज्ञ आग्रयणम् । पूर्णमासादणिति । अस्मिन्वर्तत इत्येव । पौर्णमासीति । पूर्णो मासोऽस्या तिथौ वर्तत इति विग्रहः, एषेव च व्युत्पत्तिः `सास्मिन्पौर्णमासी' इत्यत्रापि दर्शिता ।।
पितृव्यमातुलमातामहपितामहाः ।। 4.2.36 ।।
पितृमातृभ्यामिति । स्वरूपपदार्थकत्वेनाभ्यर्हितत्वे विशेषाभावाल्लघ्वक्षरस्य पूर्वनिपातः, अयोनिसम्बन्धवाचित्वादनङोऽभावश्च । डामहजिति । कथं तर्ह्याकारेऽवग्रहः---माता + महः, पिता + मह इति ? तसमान्महप्रत्ययः पितृमातृभ्यां निपातितस्तयोश्चानङादेश इति केचित् । वृत्तिकारस्तु संहितापाठस्यैव नित्यत्वात् `नलक्षणेन पदकारा अनुवर्त्त्याः' इति न्यायेनावग्रहो मा कारीति मन्यते । मातरि षिच्छेति । षित्त्वमुपसङ्ख्येयमित्यर्थः । न पुनः षकारोऽनुबन्धः कर्तव्य इति देशाभावात्---मातामहा इत्यपि मन्त्रे दृश्यते ।
अवेर्दुग्ध इति । दुग्धं क्षीरम् । सोढादीनाम् `आदेशप्रत्यययोः' इति षत्वं न भवति, सकारोच्चारणसामर्थ्यात् ।
निष्फलस्तिल इति । सस्यावस्थायां फलरहित उच्यते, धान्यावस्थायां प्रयोजनशून्य इत्यन्ये ।।
तस्य समूहः ।। 4.2.37 ।।
सर्वस्यैव विषयस्यापवादैरवष्टब्धत्वात्पृच्छति---किमिहोदाहरणमिति । काकशुकवकशब्दा आद्युदात्ताः `प्राणिनां कुपूर्वाणाम्' इत्यनेन, अस्यार्थः---व्यधिकरणे षष्ठ्यौ, अथादिः प्राक् शकटेरित्यत आदिरित्यनुवृत्तं षष्ठीबहुवचनान्तं विपरिणम्यते, प्राणिवाचिनां ये आदिभूताः कवर्गात्पूर्वे अचस्तेषामुदात्तो भवतीति । तत्र शौकमित्यनुदाहरणम् ; खण्डिकादिषु पाठात् । वकशब्दस्तूदाहार्यः ।।
भिक्षादिभ्योऽण् ।। 4.2.38 ।।
अणग्रहणं बाधकबाधनार्थमिति । भिक्षाशब्दोऽयम् `गुरोश्च हलः' इत्यकारप्रत्ययान्तत्वादन्तोदात्तः, ततः `अनुदात्तादेः' इत्यञ् अणो बाधकः प्राप्नोति, तस्य बाधनार्थमणग्रहणम् । ननु च यद्यत्राञ्, स्यात्पुनर्वचनमनर्थकं स्यात् ? नानर्थकम्; परत्वादचि तत्तल्लक्षणष्ठक् प्राप्नोति, तद्बाधनार्थमत्र पुनर्वचनं स्यादित्यञ् स्यादेव, पुनरणग्रहणादणेव भवति । गार्भिणमिति । `भस्याऽढे तद्धिते' इति पुंवद्भावेन ङीपो निवृत्तिः, ततोऽणि `इमण्यनपत्ये' इति प्रकृतिभावात् `नस्तद्धिते' इति टिलोपाभावः । तस्य ग्रहणसामर्थ्यात्पुंवद्भावो न भवतीति । यदि स्यात्, `सिद्धत्वात्प्रत्ययविधौ' इति वचनादनुत्पन्न एव तद्धिते पुंवद्भावेन भवितव्यम् । युवशब्दश्च' कनिन्युवृष' इति कनिन्प्रत्ययान्तत्वादाद्युदात्त इत्यौत्सगिक एवाण् सिद्ध इति तस्येह पाठोऽनर्थकः स्यात् । यौवतमिति । यथा तु वात्तिकं तथा पुंवद्भाव इष्यते । आह हि---`भिक्षादिषु युवतिग्रहणानर्थक्यं पुंवद्भावस्य सिद्धत्वात् प्रत्ययविधौ' इति ।।
गोत्रोक्षोष्ट्रोरभ्रराजाराजन्यराजपुत्रवत्समनुष्याजाद् वुञ् ।। 4.2.39 ।।
अपत्याधिकारादन्यत्रेति । यद्येवम्, राजन्यमनुष्ययोरुपादानमनर्थकम्, गोत्र इत्येवसिद्धम् । न तावपत्यप्रत्ययान्तौ; जातेः प्रत्ययार्थत्वात् । उक्तं हि---

पापमिति स्वरुपग्रहणम्, शिल्पिनीति चार्थग्रहणम् व्याख्यानात् ।।

गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे ।। 6 - 2 - 69 ।।

गोत्रान्तेवासिनोरर्थग्रहणम्, इतरयोः स्वरुपगरहणम्। अपत्याधकारादन्यत्र लीकिकं गोत्रमित्यनेन लौकिकमपत्यमात्रं गोत्रं गृह्यते । जङ्घादानगहं ददानीति । जङ्घादानं करवाणीत्यर्थः , ओदनपाकं पचतीतिवत् । अत्र शाद्वादा वात्स्यानाभव पादप्रक्षालनं क्रियते, तत्रावात्स्यः सन्वात्स्योऽहणिति ब्रूतं, तल्लाभाय जङ्घावात्स्य इति क्षिप्यते । वत्सश्बदो सौश्रुतः । भार्याप्रधानतयेति । शाकपार्थिवादित्वादुत्तरपदलोपी समास कइति दर्शयति । वशाब्राह्मकृतेय इति वशा - वन्ध्या भार्या, सौश्रु तवत्समासः । दक्षेण प्रोक्तं दाक्षम्, तदधीते दाक्षः, दाक्षेश्छात्त्रो वा दाक्षः । चारशब्दो नडादिः, चारायणेन प्रोक्तमधीते तस्य वा शिष्यश्चारायणीयः । एवं पाणिनीयः । कुमार्यादिलाभकामा इति । तत्प्रोक्ते ग्रन्थे श्रद्वायामसत्यामपि ये कुमार्यादिलाभकामास्तत्र प्रवर्तन्ते त एवं क्षिप्यन्ते । पूर्ववत्समासः । माणवब्राह्मणयोरपत्यवाचित्वेन प्रसिद्ध्यभावात्पृथग्ग्रहणम् । अपर आकह - तस्येदम् इत्यणन्तयोर्ग्रहण्, निपातनाञ्च माणवे णत्वमिति ।

भयब्राह्मण इति । यो ब्राह्मण एव सन् राजदण्डादिभयेन ब्राह्मणाचारं करोति, न श्रद्धया, स एवं क्षिप्यते । कर्तृकरणे कृता बहुलम् कइति बहुलवचनादकृतापि समासः । दासीश्रोत्रियो दासीब्राह्मणवत् ।।

अङ्गानि मैरेये ।। 6 - 2 - 70 ।।

अङ्गम् - आरम्भकम्, बहुवचनं स्वरुपविधिनिरासार्थम् । सुराव्यतिरिक्तं मद्यम् - दैरेयम् । तदङ्गवाचिनीति । दैरेयशब्द इति प्रकृतम्, कइह तु तच्छब्देन तदर्थः परामृश्यते । पौषासव इति । आसवः - मद्यविशेषः, यत् पौष्पैण मधुना द्रव्यान्तरेण चारभ्यते तस्य पौषमङ्गं भवति । पुष्पासव कइति तु युक्तः पाठः ।।

भक्ताख्यास्तदर्थेषु ।। 6 - 2 - 71 ।।

बहुवचननिर्देशादेव स्वरुपविधिनिरासे सिद्धे आख्याग्रहणं भक्तविशेषवाचिनां भक्षादीनां गर्हणार्थम् अन्यथा पर्यायाणामन्नादीनामेव ग्रहणं स्यात् । भिक्षाकंण्दयः षष्ठीसमासाः येषां प्रकृतिविकारभावे चतुर्थीसमास इति पक्षः । अन्येषां चतुर्थीसमासाः ।।

गोविडालसिहसैन्धवेषूपमाने ।। 6 - 2 - 72 ।।

गौविडालसिहसैन्धवेषूपमाने ।। उपमानशब्दस्य सह गवादिभिः प्रत्येकं सम्बन्धादेकवचनम् । उपमानार्थोऽपीति । यो यत्रोदाहरणे उपमानार्थः समाभवति स तत्र योजयितव्यः । यथाप्रसिद्धं चेति । यस्योदाहरणस्य च यथा लोके प्रसिद्धिः स तथा योजयितव्यः । तत्र दिङ्मात्रं दर्शयति - गवाकृत्येत्यादि । आकृतिः - संस्थानम् , संनिवेशितम् - व्यवस्थापितम् । ेवमन्यत्रापि यत्किञ्चित् सादृश्यं योजनियम् ।।

अके जीविकार्थे ।। 6 - 2 - 73 ।।

जीविकावाजिनीति । प्रवृत्तिनिमित्तकथनमेतत्, जीविकारुपप्रवृत्तिनिमित्त इत्यर्थः । पर्यवसानभूमिस्तु तध्वान्, तदाह - दन्तलेखनादिभिर्यषामिति । रमणीयकतेति । अत्रापि नित्यं क्रीडाजीविकयोः इति समासः, क्रीडायामेव हि तृजन्तं सम्भवति, न पुनर्जीविकायामिति तत्रार्थः ।।

प्राचां क्रीडायाम् ।। 6 - 2 - 74 ।।

प्राचां क्रीडायामिति श्रुतयोरेवान्वयसम्भवान्मतेनेत्यध्याहारो न युक्त इति चमत्वाऽऽह - प्राग्देश्वतिनां या क्रीडेति ।।

अणि नियुक्ते ।। 6 - 2 - 75 ।।

नियुक्त इति युजियोगे इत्यस्यैतद्रूपमित्याह - नियुक्तोऽधिकृत इति । स च कस्मिश्चत्कर्तव्ये तत्परो न भवतीति । कार्यान्तरेऽपि नियोगसम्भावात् ।।

शिल्पिनि चाकृञः ।। 6 - 2 - 66 ।।

युक्ते च इत्येव सिद्धे कृञः प्रतिषेधार्थ वचनतम् । तन्तुवाय इति ह्वावामश्च इत्यण्, अतो युक् । अयस्कार इति अतः कृकगम इत्यादिना विसर्जनीयस्य सत्वम् ।।

गौतन्तियवं पाले ।। 6 - 2 - 78 ।।तनु विस्तारे , क्तिच्, तन्तिः - वत्सानां बन्धनरज्जुः ।।

उपमानं शब्दार्थप्रकृतावेव ।। 6 - 2 - 80 ।।

उष्ट्रक्रोशीत्यादौ कर्तर्युपमाने इति णिनिः । उपमानगर्हणमित्यादि । अन्यथा योगाविभागेन नियमाश्रयणसामर्थ्याद्विशिष्टविषयो नियम इत्येतावद् गम्यत, न त्विष्टो विषयविभाग इति भावः ।

शब्दार्थप्रकृताविति किमिति । सूत्रारम्भः किमर्थ इत्यर्थः । वृकवञ्चीति । कृत्सवर एव भवति । प्रकृतिरेवेत्यादि । असति प्रकृतिगरहणे शब्दार्थात्परो यो णिनिस्तदन्त उत्तरपदे इति विज्ञायेत्, ततश्च यत्रापि धातूपसर्गसमुदायात् शब्दार्थात्परो णिनिः, तत्रापि स्यात् कृदुग्रहणे गतिकारकपूर्वस्यापि ग्रहणाण्णिन्यन्तमेवोत्तरपदमिति कृत्वा । प्रकृतिग्रहणे तु न भवति ।

योऽत्र धातुर्नासौ शब्दार्थः, यश्च शब्दार्थो धातूपसर्गसमुदायो न ततो णिनिर्विहित इति, सिद्धे विधिरारभ्यमाणोन्तरेथणाप्येवकारं नियमाय भवति, नार्थ एवकारेण तत्राह - एवकारकरणमित्यादि । असति हि तस्मिन्विपरीतो नियमः स्यात् - शब्दार्थप्रकृतौ यदि भवति उपमान एवेति । एवं च प्रकृतिर्नियम्येत, नोपमानम् । तस्मादुपमानावधारणार्थमेवकारः क्रियते । किम पुनः कारणमुपमानावधारणमाश्रीयते अत आह - शब्दार्थप्रकृताविति । तुशब्दो हेतौ, उपमाननियमे हि शब्दार्थप्रकृतेरनियतत्वात्तत्राप्यविशेषेण सर्वस्याद्युदात्तत्वं

लभ्यते, नान्यथा । किञ्च - प्रिकृत्यवधारणेऽस्यानियतत्वाद् वृकवञ्चीत्यादावाद्युदात्तत्वप्रसङ्गः ।।
युक्तारोह्यादयश्च ।। 6 - 2 - 81 ।।
पूर्वोत्तरपदनियमार्थमिति । यत्र युक्तादीन्येव पूर्वपदानि, कआरोहायादीन्यव चोत्तरपदानि -- तत्रैव यथा स्यादित्यर्थः । आगतमत्स्यादिषु च बहुव्रीहिः, कर्मधारयो वा ।
एकशितिपादिति । संख्यासुपूर्वस्य इति पादशब्दाकारस्य लोपः, संख्यासुपूर्वस्य समासस्य योऽन्ते पादशब्दरतस्य लोपो भवतीति तत्रार्थः । ननु चेह इण्भकापाशल्यतिमर्च्चिभ्यः कन् इति कन्नन्त एकशब्द आद्युदात्तः, ततश्च बहुव्रीहौ प्रकृत्य इत्येव सिद्धमाद्युदात्तत्वम् तत्राह - एकः शिति पादोऽस्येति त्रिपदौ बहुव्रीहिरिति । ततः किमित्याह - तत्रेति । यद्युत्तरपदे परत एकशितिशब्दस्तत्पुरुषः, ततो।पि किम् इत्याह - तस्येति । तस्य तत्पुरुषसंज्ञकस्यैकशितिशब्दस्य समासान्तोदात्तत्वं प्राप्तम् । ननु समासस्वरापवादो बहुव्रीहिस्वः तत्राहनिमित्तिस्वरबलीयस्त्वादिति । समासस्वरस्येति शेषः । निमित्तमुत्तरपदं द्विगोस्त्रिपदो बहुव्रीहिस्तस्य यः स्वरः , तस्मात्समासस्वरस्य बलीयस्त्वादित्यर्थः । बलीयस्त्वंतु सतिशिष्टत्वात् । सतिशिष्टत्वं तु बहुव्रीहौ सति पश्चात्तत्पुरुषे कृते प्राप्नोतीति ।
एवमपीत्यादि । स्पष्टार्थम् । निमित्तिस्वर बलीयस्त्वस्यापीत्यादि । तथा च समर्थसूत्रे वार्त्तिकम् - एकशितिपात्स्वरवचनं तु ज्ञापकं निमित्तिस्वरबलीयस्त्वस्य इति । उभयमन्तरेणाप्यनुपपद्यमानमेकशितिपाद्ग्रहणमुभयमपि कज्ञापयति ।।
दीर्घकाशतुषभ्राष्ट्रवटं जे ।। 6 - 2 - 82 ।।
कुटीज इति । सप्तम्यां जनेर्डः ।।
अन्त्यात्पूर्वं बह्वचः ।। 6 - 2 - 83 ।।
आमलकीज इति । दीर्घान्तेऽपि बह्वचि परत्वादयमेव स्वरो भवति ।।
ग्रमेऽनिवसन्तः ।। 6 - 2 - 84 ।।
निपूर्वाद्वसेरौणादिकोऽधिकरणे झच् , निवसग्त्यस्मिन्निति निवसन्तः । देवग्राम इति । प्राचीनपरिक्षिप्तदेशेऽयं ग्रामशब्दः । यद्येवम्, निवसन्तवाची भवति तत्राह - देवस्वामिक कइति । ततश्चायं न देवापेक्षया ग्रामो निवसन्त इति भावः । दाक्ष्यादयो निवसन्ति यस्मिन्नित्यादि । अन्ये निवसन्तु, तत्र मा वा यसन्, ते तावदवात्सुरित्येतावता तेपामिति व्यपदिश्यत इत्यर्थः ।।
घोषादिषु च ।। 6 - 2 - 85 ।।

यान्यत्रेति । घोषकुटादीनि । अपरे पुनरिति । थेषां घोषकुटादिष्वपि शब्देषु तावद्भवति, न निवासनामधेयेषु ।।
छात्त्र्यादयः शालायाम् ।। 6 - 2 - 86 ।।
यदा शालान्त थइत्यादि । विभाषा सेनासुरा इत्यादिना शालान्तस्य तत्पुरुषस्य विभाषा नपुंसकत्वमुक्तम् । तत्रास्यावकाशो यो नपुंसकलिङगो न भवति - छात्त्रिशाला, गोशरितिः तत्पुरुषे शालायाम् इत्यस्यावकाशो यश्छात्त्र्यादिपूर्वपदो न भवति - वाराह्मणशालम्, क्षत्त्रियशालमिति, यश्छात्त्र्यादिपूर्वपदो नपुंसकलिङ्गश्च, तत्रैकदेशबिकृतस्यानन्यत्वादयमपि प्राप्नोति, तत्पुरुषे शालायाम् इत्ययं च तत्र पूर्वविप्रतिषेधादयमेव भवति ।।
प्रस्थेऽवृद्धमकर्क्यादीनमा ।। 6 - 2 - 87 ।।
मालीदीनां च इति वचनादवृद्धमिति पदच्छेदः । कर्क्यादिप्रतिषेधस्तु नामधेयार्थः स्यात् - वुा नामधेयस्य वृद्धसंज्ञा वक्तव्या इति ।।
अर्मे चावर्णं द्वय्च्त्र्यच् ।। 6 - 2 - 90 ।।
वृहदर्ममिति । स्वरविधौ व्यञ्जनमविद्यमानवत् इत्येतदत्र नाश्रीयते अनित्यत्वात् । नहार्ममिति । आत्वे कृतेऽवर्णान्तत्वादस्ति प्राप्तिः । नवाममिति । नवशब्दः प्रत्यग्रवचनोऽकारान्तः ।।
न भूताधिकसञ्जीवमद्राश्मकज्जलम् ।।ल 6 - 2 - 91 ।।
मद्राश्मग्रहणं सङ्घातविगृहीतार्थमिति । मद्रशब्दस्य केवलस्य मद्राश्मशब्दस्य च सङ्घातस्य प्रतिषेधार्थमित्यर्थः ।
मद्राश्मार्ममिति । अनोऽश्मायः सरसां जातिसंज्ञयोः इति समासान्ते सत्यवर्णान्मेतद्भवति, तदेवम् - मद्रार्मम्, मद्राश्मार्ममिति देव एवोदाहरणे । प्रायेण तु अश्मार्ममिति तृतीयमप्युदाहरणं पठ्यते, तदयुक्तम्, अश्मशब्दस्य नकारान्तत्वात् । न च लोपे कृतेऽवर्णान्तत्वम्, स्वरविधौ नलोपस्थासिद्धत्वात् । तथा च वक्ष्यति - पञ्चार्मम्, दशार्ममित्यत्र अर्मे चावर्णं द्व्यच्त्र्यच् इत्यं स्वरो न भवतीति । ।
अपर आह मद्राश्मग्रहणं सङ्घातविगृहीतार्थम् इत्यस्य भाष्येऽदर्शनादनार्षो वृत्तौ पाठ इति ।
दिवोदासावेति । दिवश्च दासे इति षष्ठ्या अलुक् ।।
अन्तः ।। 6 - 2 - 92 ।।
अत्रापि प्रकरणे पूर्वपदविशषया प्रथमा षष्ठ्यर्थे द्रष्टव्या ।।
सर्व गुणकार्त्स्न्ये ।। 6 - 2 - 93 ।।
यत्र गुणान्तरस्याभावस्तत्र गुणकार्त्स्न्यं भवति । सर्वश्वेत इति । पूर्वकालैक इत्यादिना कर्मधारयः । अत्र शुक्लेन गुणेन सर्वावयवानां वायप्तिर्गम्यते ।

आश्रयव्याप्त्या परमत्वमिति । यद्यप्यौज्ज्वल्यादिनापि परमत्वं सम्भवति, अत्र त्वेवंविधं परमत्वं विवक्षितमित्यर्थः । सर्वसौवर्ण इति । विकारविषयमत्र कार्त्स्न्यम् । कार्त्स्न्ये इति किमिति । गुणवाचिन्युत्तरपदे न स्रवशब्दस्य कार्त्सस्न्यं व्यभिचरतीति प्रश्नः । सर्वेषां श्वेततरः सर्वश्वेत इति । गुणिकार्त्स्न्ये सर्वशब्दः, न गुणकार्त्स्न्ये । सर्वषामिति च गुणसम्बन्धे षष्ठी, पटस्य शौक्ल्यमितिवद् । गुणवाचिन एव च प्रत्ययः, सर्वेषां पटानां द्रव्यान्तराधारो यः श्वेतगुणस्तदपेक्षया सातिशयः श्वेतो गुण इत्यर्थः ।

गुणात्तरेणेति । गुणाद्युस्तरप्रत्ययस्तदन्तेनेत्यर्थः । वचनमेवेदम्, तेन पूरणगुण कइति प्रतिषेधं बाधित्वा समासश्च भवति, तरब्लोपश्च ।।

संज्ञायां गिरिनिकाययोः ।। 6 - 2 - 94 ।।

अञ्जनागिरिरिति । वनगिर्योः संज्ञायाम् इति दिर्घत्वम् ।।

कुमार्या वयसि ।। 6 - 2 - 95 ।।

वृद्धकुमारीति । विशेषणसमासः । जरत्कुमारीति । जरतीशब्दस्य पूर्वकालैक इत्येनेन, अत्रोभयत्र पुंवत्कर्मधारय इत्यादिना पुंपद्भावः ।

ननु च कुमारीशब्दः प्रथमे वयसि वर्तते, तथा च वयसि प्रथमे इति ङीबत्र विहितः, तस्य कथं चरमवयोवाचिभ्यां वृद्धाचरतीशब्दाभ्यां सामानाधिकरण्यम् अत आह - कुमारीशब्द इत्यादि । कुमार्यां हि द्वयं दृष्टम् - प्रथमं वयः , पुंसा सहासम्प्रयोगश्च तत्र प्रथमार्थप्रहाणेन द्वितीयमर्थमसम्प्रयोगमात्रमुपाददानस्य सम्भवति सामानधिकरण्यमित्यर्थः । तच्चेति । वृद्धादिशब्दान्तराभिधेयमित्यर्थः । कुमारत्वमेवेति । यदेतत्कुमारीशब्दस्य प्रवृत्तिनिमित्तं न तद्वयो गृह्यत इत्यर्थः । एतच्च वयोग्रखहणसामर्थ्याल्लभ्यते अन्यथा कुमारीशब्दप्रयोगो नियमतः प्रथमवयो गम्यते इत्यनर्थकं तत्स्यात् ।

परमकुमारीत्यत्र कुमारत्वमेव प्रतीयते, न वयोऽन्तरमिति भवति प्रत्युदाहरणम् ।।

उदकेऽकेवले ।। 6 - 2 - 96 ।।

असन्देहार्थम् केवल उदके इत्यवचनाद् अकेवले इति पदच्छेदः । मश्रम् - द्रव्यान्तरसंयुक्तम् ।।

द्वीगौ क्रतौ ।। 6 - 2 - 97 ।।

गर्गत्रिरात्रादयः षष्ठीसमासाः । तिसृणां रात्रीणां समाहारस्त्रिरात्रः, अहः सर्व इत्यादिनाच समासान्तः । अतिरात्र इति । रात्रिमतिक्रान्त इति प्रादिसमासः ।।

सभायां नपुंसके ।। 6 - 2 - 98 ।।

गोपालसभादौ अशाला च इति नपुंसकत्वम् ।

रमणीयसभमिति । अत्राभिधेयवशान्नपुंसकत्वम्, न प्रतिपदोक्तम् ।।

अरिष्टगौडपूर्वे च ।। 6 - 2 - 100 ।।

पूर्वग्रहणं किमिति । अरिष्टगौडयोरिति वक्तव्यम् इति प्रश्नः । इहापि यथा स्यादिति । पूर्वग्रहणे हि सति वहुव्रीहिर्लभ्यते - अरिष्टगौहौ पूर्वौ यस्मिन्समास इति । तेनारिष्टाश्रितपुरम्, गौडभृत्यपुरमित्यत्रापि पूर्वपदमान्तोदात्तं भवति । असति तु पूर्वग्रहणे श्रितः भृत्यशब्दाभ्यां व्यवहितत्वादपूर्वपदत्वादरिष्टगौडयोस्तावन्न स्यात् समुदाययोश्च सूत्रेऽनुपात्तत्वात् ।।

न हास्तिनफलकमार्देयाः ।। 6 - 2 - 101 ।।

मार्देय इति । ढेलोपोऽकद्र्वाः इत्युकारलोपः ।।

दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु ।। 6 - 2 - 103 ।। चानराटे स्वरुपग्रहणम्, इतरेषु अर्थग्रहणम्। पूर्वेषुकामशमीति । दिक्संख्ये संज्ञायाम् इति समासः । पूर्वपञ्चाला इति । समुदाये हि वृत्तोः शब्दा अवयवेष्वपि वर्तन्ते तइति पञ्चालैकदेशे पञ्चालशब्दः, ततः पूर्वापरप्रथम इत्यादिना कर्मधारयः । शब्दग्रहणमित्यादि । दिशि दृष्टः शब्दो दिक्शब्द इत्युत्तरपदेलोपो समासः तेन कालवाचिनोऽपि ग्रहणात् पूर्वयायतमित्यादावपि भवति ।।

आचार्योपसर्जनश्चान्तेवासिनि ।। 6 - 2 - 104 ।।

आचार्योपसर्जनग्रहणमन्तेवासिनो विशेषणम्, सप्तम्यर्थे प्रथमा । आचार्योपसर्जनान्तेवासिवाचिनीति । आचार्य उपसर्जनं यस्य स आचार्योपसर्जनः स चासावन्तेवासी च आचार्योपसर्जनान्तेवामी, तद्वाचिनि। पूर्वपाणिनीया इति । पूर्ववत्समासः, पाणिनेश्छात्त्राः पाणिनीयाः , अत्रान्तेवासिनः प्रधानम्, आचार्यस्तूपसर्जनम्

। काशकृत्स्निशब्दात् अतश्च इत्यण् । पूर्वपाणिनीयं शास्त्रमिति । पाणिनीयं शास्त्रं पूर्वम, चिरन्तनमित्यर्थः ।

उत्तरपदवृद्धौ सर्वं च ।। 6 - 2 - 105 ।।

वृद्धौ इत्येतावतैव तद्वदुत्तरपदपरिग्रहे सिद्धे उत्तरपदग्रहणात्तदधिकारो लक्ष्यते ।।

बहुव्रीहौ विश्वं संज्ञायाम् ।। विशेः क्वनि विश्वशब्द आद्युदात्तः । विश्वामित्त्र इत्यादि । अस्यावकाशः - विश्वदेवः , विश्वयशाः , संज्ञायां मित्त्राजिनयोः इत्यस्यावकाशः - कुलमित्त्रः, कुलाजिनः, विश्वामित्त्रः, विश्वाजिन इत्यत्रोभयप्रसङ्े संज्ञायां मित्त्राजिनयोः इत्येतद्भवति विप्रतिषेधेन ।।

उदराश्वेषुषु ।। 6 - 2 - 107 ।।

अयमपि पूर्वपदप्रकृतिस्वरस्यापवादः । वृकशब्दः प्रणिनां च कुपूर्वाणाम् इत्याद्युदात्तः, वृकास्येवोदरं यस्य वृकीदरः । दाम ुदरे यस्य दामोदरः, दामशब्दो

मनिन्प्रत्ययान्तः । हरतेः सर्वधातुभ्य इन् इतीन्, हरिदश्वो यस्य हर्यश्वः । यौवनशब्दोऽव्युत्पन्नं प्रतिपदिकम्, लघावन्तेद्वयोश्च वह्वषो गुरुः इत्याद्युदात्तः । यूनो भावो यौवनमिति युवाद्यणन्तत्वे प्रत्ययस्वरेणान्तोदात्तत्वात् पूर्पपदप्रकृतिस्वरेणैव सिद्धम् । सुवर्णपुङ्खेशुरिति । शोभनो वर्णो येषां ते सुवर्णाः, नञ्सुभ्याम् इत्यन्तोदात्तत्वम्, सुवर्णाः, पुङ्खायोषां ते सुवर्णपुङ्खाः, पूर्वपदप्रकृतिस्वरेण मध्योदात्तत्वम्, पननरिषुशब्देन बहुव्रीहिः । महेषुरिति । महच्छब्दोऽन्तोदात्त इति महान्व्रीह्यपराह्ण इत्यत्रोक्तम् । तस्मात्तत्पूर्वपदप्रकृतिस्वरेणैव सिद्धे सति तस्यान्यार्थ आरम्भः अपवादत्वादनेनैवान्तोदात्तत्वं युक्तमित्यस्योपन्यासः ।।

क्षेपे ।। 6 - 2 - 108 ।।

कुण्डशब्दः नब्विषयस्यानिसन्तस्य इत्याद्युदात्तः । घटशब्दः पचाद्यजन्तः । महेषुवदस्योपन्यासः । कटुशब्दात्संज्ञायां कन् । स्पन्दितशब्दो निष्ठान्तः । निहन्यतेऽनेनेति निघातः ततोऽन्योऽनिघातः , अतोऽव्ययपूर्वपदप्रकृतिस्वरत्वम्, चरिचलिपतिवदिनां वा द्वित्वमच्याक्चाभ्यासस्य - चलाचलः ।

अनुदर इत्यादि । अस्यावकाशः - कुण्डोदर इत्यादि, नञ्सुभ्याम् इत्यस्यावकः शः - अयशः, सुयशः, एवं स्थिते विप्रतिषेधः ।।

नदी बन्धुनि ।। 6 - 2 0 109 ।।

बन्धुनि इति शब्दरुपापेक्षया नपुंसकनिर्देशः, गर्गवत्स शब्दाभ्यां गर्गादियञन्तभ्याम् यञश्च इति ङीप् , गार्गीवात्सीशब्दौ ञित्स्वरेणाद्युदात्तौ । ब्रह्मशब्दो बृहेर्मनिन्प्रत्यये निपातितः ।।

निष्ठोपसर्गपूर्वमन्यतरस्याम् ।। 6 - 2 - 110 ।।

प्रक्षालितपाद इति । क्षल शौचकर्मणि चुरादिः, धावु गातिशुद्ध्योः, च्छ्वोः, शूठ् इत्युठ्, एत्येधत्युठसु इति वृद्धिः, प्रक्षालितप्रधौतशब्दौ गतिस्वरेणाद्युदात्तौ । मुखं स्वाङ्गमित्येतद्भवतीति । विकल्पितमुत्तरपदान्तोदात्तत्वम्, तेन स्वाङ्गवाचिनि मुखशब्दे स्वरत्रयं भवति - अनेन पूर्वपदान्तोदात्तत्वम्, मुखं स्वाङ्गम् इत्येतत्, उभाभ्यां मुक्ते पूर्वपदप्रकृतिभावेन गतिरनन्तरः इत्याद्युदात्तत्वं च । न चेदिति । स्वाङ्वा चीति सम्बध्यते, यदि मुखशब्दः स्वाङ्गवाची न भवतीत्येर्थः ।

प्रसेचकशब्दः कुदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः, शुष्कशब्दः शुष्कधुष्टौ इत्याद्युदात्तः ।।

उत्तरपदादिः ।। 6 - 2 - 111 ।।

उत्तरपदग्रहथखणमसमस्तं लुप्तषष्ठीकम् । अत्रापि प्रकरण उत्तरपदनिर्देशे षष्ठ्यर्थे प्रथमा ।।

कर्णो वर्तणलक्षणात् ।। 6 - 2 - 112 ।।

दात्राकर्णः शङकूकर्ण इति । दात्रं कर्णे यस्य, शङकुः कर्णे यस्यति विग्रहः, सप्तम्याः पूर्वनिपाते गड्वादिभ्यः परवचनम् इति पनिपातः । कर्णे लक्षणस्याविष्टेत्यादिना दीर्घत्वम् । लक्ष्यते येन तल्लक्षणम्, ततश्च स्थूलकर्ण इत्यत्रापि प्राप्नोति, स्थौल्योनापि हि लक्षणीयत्वादत आह - पशूनां विभागज्ञापनार्थमित्यादि । एतच्च सामान्योक्तावपि वर्णग्रहणाल्लभ्यते अन्यथा वर्णेनापि लक्ष्यमाणत्वांत्तदमर्थकं स्यात् । श्विता वर्णे पचाद्यच् , कूट दाहे, इगुपधलक्षणः कः, शुभ शुम्भ शोभार्थे, अनुदात्तेतश्च हलादेः, इति युच् - शोभनः । प्रत्युदाहरणे सर्वत्र पूर्वपदप्रकृतिस्वर एव भवति । अण्ठकरणादीनां समाहारद्वन्द्वे नपुंसकह्नस्वत्वम् ।।

कण्ठपृष्ठग्रीवाजङ्घं च ।। 6 - 2 - 114 ।।

सुग्रीव इति । अत्र परत्वात् नञ्सुभ्याम् इत्यन्तोदात्तत्वेनभाव्यम्, अस्य तु दशग्रीवादिरवकाशः यदि तु नेष्यते, चकारस्यैव विधेः समुञ्चयार्थ इति व्याख्यातव्यम् । नाडीजङ्घ इति । नाड्याकारे जङ्घे यस्य नाडीजङ्घः ।।

नजो जरमरमित्त्रमृताः ।। 6 - 2 -116 ।।

जरणं जरः, ऋदोरप् । मरणं मरः, अरु देव निपातनादप् । ऋिमिदा स्नेहने - अस्मात् क्त्रः, मित्त्रम् ।।

सोर्मनसी अलोमोषसी ।। 6 - 2 - 117 ।।

मँश्च मनसी । सुप्रथिमेति । पृथोर्भावः, पृथ्वादिब्य इमनिच्, र ऋतो हलादेर्लघोः इति रादेशः । पीयत इति पचः पिबतेरिञ्च इत्यसुन् । अशोर्देवने युट् च इत्यसुन् , युडागमः , यशः । स्त्रुरिभ्यां तुट् स्रोतः । सुस्रत्, सुध्वद् इति । स्रंसुध्वंसुभ्यां क्विप्, वसुस्रंसु इत्यादिना दत्वम्, तस्यासिद्धत्वादत्रासन्तत्वम् । राज - तक्षशब्दौ कनिन्युवृशषि इत्यादिना कनिप्रत्ययान्तौ । लुनातेर्मनिन - लोम, उष दाहे, मिथुनेऽसिः इति वर्तमाने उषः कित् ।

अनिनस्मन्ग्रहणानीति । अन्, इन्, अस्, मन् - इत्येतानि गृह्यन्ते येषु सूत्रेषु तानि तथोक्तानि, तत्र तदन्तविधिं प्रयोजयन्तीति वचनादनर्थकानामप्यनिन्प्रभृतीनां ग्रहणं भवतीत्युक्तं भवति । तेन सुप्रथिमा, सुस्रत्, सुध्वदित्यादिकमप्यदाहरणमुपपद्यत इति भावः ।

कपि परत्वादिति । सोर्मनसी इत्यस्वावकाशः - सुकमा, सुशर्मा, कपि पूर्वम् इत्यस्यावकाशः - अयवकः, सुयवक इति एकस्थले विप्रतिषेधः ।।

आद्युदात्तं द्व्यच् छन्दसि ।। 6 - 2 - 119 ।।

कुर्भ्रश्च इति वर्तमाने अर्जिदृशिकम्यमिपशिबाधामृजिपसितुग्धुग्दीर्घहकाराश्च । बाधते येन परानिति बाहुः ।।

वीरवीर्य्यौ च ।। 6 - 2 - 120 ।।

वीर विक्रान्तौ चुरादिः, ततः पचाद्यचि - वीरः, अचो यत् - वीर्यम्, वीरेषु वा साधुरिति पारग्घितीयौ यत् । तत्रेत्यादि । कथं पुनरेतज्ज्ञापकम् इत्याह - तत्र हि सतीति । फिषितु बिल्वभक्ष्यवीर्याणि छन्दसि इति छन्दस्यन्तस्वरितत्वं भाषायां वाद्युदात्तत्वं शब्दस्य स्थितम् ।।

कूलतीरतूलमूलशालाक्षसममव्ययीभावे ।। 6 - 2 - 121 ।।

सुषममित्यादौ सुविनिर्दुर्भ्यः सुपिसूतिसमाः इति षत्वम्, तस्यासिद्धत्वात्समशब्द एवायम् । तिष्ठद्गुप्रभृतिष्वेते पठ्यन्त इति । तेनाव्ययीभावसंज्ञा । पर्यादिभ्य इत्यादि । परिप्रत्युपापा इत्यस्यावकाशो यत्र कूलादयौ न सन्ति - परित्रिगर्तमिति, कूलादीनामाद्युदात्तस्यावकाशो यत्र पर्यादयो न भवन्ति - अवकूलम्, तअतिकूलमिति पर्यादिभ्यः परेषु कूलादिषु विप्रतिषेधः ।।

कंसमन्थशूर्पपाय्यकाण्डं द्विगौ ।। 6 - 2 - 122 ।।

द्विकंस इति । द्वाभ्यां कंसाभ्यां क्रीत इति तद्धितार्थे समासः , कंसाट्टिठन् इति टिठन्, तस्य अध्यर्धपूर्व इति लुक् । द्विमन्थ इति । आर्हादगौपुच्छ इत्यादिना ठक्, शेषं पूर्ववत् । द्विशूर्पमिति । शूर्पादञन्यतरस्याम् । द्विपाय्यमिति । पाय्यसान्नाय्य इत्यादिना परिमाणे निपातितः । प्राग्वतेष्ठञ् । द्विकाण्डमिति । देव काण्डे प्रमाणमस्य प्रमाणे द्वयसच् इत्यादिना मात्रजादयः, तेषाम् प्रमाणे लो द्विगोर्नित्यम् इति लुक् ।।

तत्पुरुषे शालायां नपुंसके ।। 6 - 2 - 123 ।।

दृढशालमिति । बहुव्रीहिरयम् । तत्र पूर्वपदप्रकृतिस्वर एव भवति, पूर्वपदं च निष्ठान्तत्वादन्तोदात्तम् । ननु चात्र लक्षणप्रतिपदोक्तपरिभाषयैव भविष्यति सत्यम्, उत्तरार्थं तत्पुरुषग्रहणमवश्यं कर्तव्यं तदिहैव क्रियते, परिभाषाया अनाश्रयणाय ।।

कन्था च ।। 6 - 2 - 124 ।।

शोभवनः शमो यस्य तस्यापत्यं सौशमिः । आङ्पूर्वात् ह्वयतेः आतश्चोपसर्गे इति कः चप सान्तवने औणादिकः पः बहुलवचनादिडभावः - चप्पः ।।

आदिश्चिहणादीनाम् ।।थ 6 - 2 - 125 ।।

चिनोतेः क्विप्, चित्, हन्तेः पचाद्यच्, हनः, चिहणम् - निपातनात्तलोपो णत्वं च । मल मल्ल धारणे, तआभ्यां रप्रत्ययः, निपात्नाल्लस्य डत्वम् - मडरः, मद्दुरः । विगततुलस्येदं वैतुलम् । पटदिति कायति - पटत्कः । कै गै रै शब्दे । आतोऽनुपसर्गे कः । बिडमादेत्ते बिडालः । ला आदाने सोपसर्गादप्यस्मादेव निपातनात्कः, तस्यापत्यं बैडालिः, तस्येव कर्णावस्य बैडालिकर्णः । अपहे तु इकारान्तं पठन्ति - बैडालिकणिरिति । कुक्कु रटतीति, कुक्कुटः, निपातनाद्रशब्दस्य लोपः, चिनोतेः क्विप् , चित्, कणतेरच्, कणः, चिता कणः, चिक्कणः, निपातनात्तकारस्.य ककारः । तकारमेवान्ये पठन्ति । चिहणादयश्चैते गौत्रनामधेयाति स्मर्यन्ते ।

आदिरिति वर्तमान इति । पूर्वं ह्यादिग्रहणमुत्तरपदाभिसम्बद्धमिह पूर्वपदानां चिहणादीनामाद्युदात्तत्वमिष्यते, अतस्तदर्थं पुनरादिग्रहणं कृतम् ।।

चेलखेटकटुककाण्डं गर्हायाम् ।। 6 - 2 - 126 ।।

पुत्रचेलमिति । चेलवत्तुच्छमित्यर्थः । खेट इति तृणनाम, तद्वद् दुर्बला उपानत्खेटम्। कटुकम् - अस्वादु, तथा दध्यपि गतस्वादुकत्वात् कटुकम्। काण्डमिति शरनाम, तद् यथा सत्त्वपीडाकरम्, एवं भूतमपि ।।

चीरमुपमानम् ।। 6 - 2 - 127 ।।

वस्त्रचीरमिति । वस्त्रं चीरमिवेति पूर्ववद्व्याघ्रादिसमासः ।।

कूलसूदस्थलकर्षाः संज्ञायाम् ।। 6 - 2 - 129 ।।

भजीसूदमिति । भाजीशब्दो जानपदादि सूत्रेण ङीषन्तः ।।

अकर्मधारये राज्यम् ।। 6 - 2 - 130 ।।

चेलराज्यादिस्वरादिति । आदिशब्देन वर्ग्यादिस्वरपरिग्रहः, चेलरजायादिस्वरस्यावकाशः - भार्याचेलम्, ब्राह्मणराज्यम्, तत्पुरुषे तुल्यार्थ इत्यादिना विहितस्याव्ययस्वरस्यावकाशः - निष्कौशाम्बिः, कुचेलम्, कुराज्यमित्यत्रोभयप्रसङ्गे पूर्वविप्रतिषेधः।।

पुत्रः पुम्भ्यः ।। 6 - 2 - 132 ।।

कुनटस्यापत्यं कौनटिः । दामकमाहिषकशब्दौ संज्ञायां कन् इति कन्नन्तौ ।।

नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः ।। 6 - 2 - 133 ।।

संयुक्ताः स्त्रीसम्बन्धिनः श्यालादय इति । योगरुढिरेषा तेषाम्, यथा सम्बन्धिशब्दः । ज्ञातयो मातापितृसम्बन्धेन बान्धवा इति । पितसम्बन्धिष्वेव तु ज्ञातिशब्दो लोके प्रसिद्धः । आख्याग्रहणमाचार्यादिभिः प्रतेयकमभिसम्बध्यत । भ्रातुष्पुत्र इति । कस्कादिषु पाठात् षत्वम् ।।

चूर्णादीन्यप्राणिषष्ठ्याः ।। 6 - 2 - 134 ।।

चूरी दाहे अस्मात् क्तः चूर्णम्। वा गतिगन्धनयोः, पा रक्षणे - आभ्यां करिशब्द उपपदे आतोऽनुपसर्गे कः, करिवम्, करिपम्। महेरिनण्, बहुलवचनात् शकेरपि भवति - शाकिनम्, शकादिभ्योऽटच्, शकटम्, तद्वहतीति शकटादण् - शाकटम् । द्राक् क्षरति द्राक्षा, पृषोदरादिः । तुस शब्दे ततो बहुलवचनात् क्तः उपधादीर्घत्वं च । कुं दुनोति, कुत्सितं वा दुनोतीति क्विप्, अस्मादेव निपातनात्तुगभावः, पूर्वपदस्य च मुम् कुन्दुं मिमीते कुन्दुमः । दलेः कपन्, दलपः । चमेरसच् चमसः ततो जातिलक्षणो ङीष् - चमसी । कनी दीप्तिकान्तिगतिषु - अस्मात् पचाद्यच्, अस्मादेव निपातनाद् द्वर्वचनम् - चक्कनः । च्कन इत्यन्ये पठन्ति, तत्रापि निपातनादेव रुपसिद्धिः । चोलस्यापत्यम् द्व्यचः इत्यण् - चौलः । एते चूर्णादयः ।

पूर्वाचार्योपचारेणेति । उपचारः प्रयोगः ।।

कुण्डं वनम् ।। 6 - 2 - 136 ।।
कुण्डशब्ददीऽत्रेत्यादि । जनविशेषाभिधायी कुण्डशब्दस्तस्य नान्तरेण सादृश्यम्, ततोऽन्यत्र वने वृत्तिः सम्भवतीति भावः । अन्ये तु वनेऽपि मुख्य एव कुण्डशब्द इत्याहुः । तत्र वनशब्देन विशेषणेन भाजन विशेषवाजी निवर्त्यते, समुदायवाची चात्र वनशब्दः, न तूदकवाची, आह हि - कुण्डाद्युदात्तत्वे तत्समुदायग्रहणमिति, तच्छब्देन पूर्वदार्थः परामृश्यते । उपर आह - वनसमुदाये इति वक्तव्यम्, न तु वने इति
, तेन शरवणसमुदायः शरकुण्डशब्देनोच्यत इति ।।
प्रकृत्या भगालम् ।। 6 - 2 - 137 ।।
भगालमित्यर्थग्रणमित्याह - भगालवाचीति । अत्र च व्याख्यानमेव शरणम् । भगालादयचो दध्योदात्ता इति । लघावन्ते द्वयोश्च बह्वषो गुरुः इति वचनात् ।।
शितेनित्याबह्वज्बबहुव्रीहावभसत् ।। 6 - 2 - 138 ।।
अंसौष्ठशब्दावित्यादि । अम् रोगे, अमेः सन् , असः, उष दाहेः उषिकुषिगात्तिभ्यस्थन्, ओष्ठः । दर्शनीयशब्दोऽनीयर् - प्रत्ययान्तो मध्योदात्तः । शितिशब्दः वर्णानां तणतिनितान्तानाम् इत्याद्युदात्तः ।।
गतिकारकोपपदात् कृत् ।। 6 - 2 - 139 ।।
प्रकारक इत्यादौ कुगतिप्रादयः इति समासः । इध्मप्रव्रश्चानादौ कर्मणि षष्ठ्याः समासः, करणे ल्युट्, इध्मं प्रवृश्च्यते येन सोऽत्र इध्मप्रवश्चनः, शद्लृ शातने, णिच्, शदेरगतौ तः । पलशानि शात्यन्ते येन स दण्डः पराशशतनः । श्मश्रु कल्प्यते येन स क्षुरादिः श्मश्रुकल्पनः । कृपू सामर्थ्ये ण्यन्तः , केवलो वा । ईषत्कर इति । एतदुपपदग्रहणस्य साक्षादुदाहरणम्। सुदुरोस्तु गतित्वादपि सिद्धम्, स्तम्बेरमादौ च कारकत्वात् । उच्चैः कृत्य उच्चैः कारमित्यादिकमप्युपदगरहृणस्यैवोदाहरणम्।
देवदत्तस्येति शेषलक्षणा षष्ठीति । न कर्मलक्षणा, तथा हि सति कारकमेव देवदेत्तः स्यात्, तृजकाभ्यां कर्तेरि च इति समासप्रतिषेधप्रसङ्श्च ।
अथ कृद्ग्रहणं किमर्थम् निर्गतः कौशाम्ब्याः निष्कौशाम्बिरित्यत्र मा भूत् । नैतदस्ति प्रयोजनम्,
यत्क्रियायुक्ताः पारदयस्तं प्रति गत्युपसर्गसंज्ञा भवन्ति, न च कैशाम्बीशब्दं प्रति क्रियायोगः, कारकमपि क्रियाया एव सम्भवति, उपपदमपि धात्वधिकारे सप्तमीनिर्दिष्टं प्रत्ययनिमित्तमुच्चते तदेवं गत्यादिभिस्त्रिभिरपि क्रियावाच्युत्तरपदमाक्षिप्यते, धातुश्च क्रियावाची, धातोश्च द्वये प्रत्ययाः - कृतः तिङश्च, तत्र तिङ्न्ते समासाभावात्कृदन्तमेव सम्भवतीति अनुव्यचलदित्यत्र तु न गतित्वनिबन्धनः समासः किं तर्हि सुबिति योगविभागनिबन्धनः
धातुप्रत्ययसमुदायपरिग्रहार्थं तु, अन्यथा यत्क्रियायुक्तास्तं प्रतीति वचनाद्धातुमेव प्रति गतित्वाद्धातावेवोत्तरपदे स्वरः स्यात् - प्रणीः, उन्नीरिति इह न स्यात् - प्रणयकः ,उन्नायक इति ।
एतदपि नास्ति प्रयोजनम् यत्क्रियायुक्ताः इति नैवं विज्ञायते - यस्य क्रिया यत्क्रिया यत्क्रियायुक्तास्तं प्रतीति, एवं विज्ञायमाने त्वन्वयव्यतिरेकाभ्यां धातोरेव क्रिया वाच्येति तमेव प्रति गत्युपसर्गसंज्ञाप्रसङ्गः, कथं तर्हि विज्ञायते । या क्रिया यत्क्रिया तं क्रियालक्षणमर्थं प्रतिगत्युपसर्गसंज्ञे भवतः, केवलायाश्च क्रियाया वाचकमुत्तरपदं नास्तीति क्रियाविशिष्टसाधनवाचिनि प्रणीः, प्रकारक इत्यादौ क्रियायां सिद्धताभिधायिनि, प्रभवनमित्यादौ च सर्वत्र भविष्यतीति नार्थ एतेन कृद्ग्रहणेन अत आह - कृद्ग्रहणं विस्पष्टार्थमिति । य एवं प्रतिपत्तुमसमर्थस्तं प्रति विस्पष्टार्थं क्रियत इत्यर्थः ।
यदि तर्हि विस्पष्टार्थमपि तावत्कृद्ग्रहणं क्रियते, आमन्ते तर्हि न प्राप्नोति - प्रपचतितराम्, प्रपचतितमामिति, ततश्च समासस्वरं बाधित्वाऽव्ययस्वर एव स्यात् इत्यत आह - प्रपचतितरामित्यादि । अत्र हि प्रशब्दस्य तरबन्तेन समासः, नामन्तेन । कथम् अन्तरङ्गत्वाद्धातुः पूर्वमुपसर्गेण युज्यते, प्रपचित्यस्यामवस्थायां सुबभावात् समासो न कृत इत्येतावत्, ततस्तिङ्, तस्यामप्यवस्थायां सुबभावः, ततस्तरप्, तद्धितान्तत्वात्सुप् , तेन समासः, ततश्चाम्प्रत्ययः, तत आम्श्वरः सतिशिष्टः । कथं पुनस्तरवन्तेन समासः कथं च न स्यात् गतिकारकोपपदानां कृद्भिः सह समासवचनम् इति वचनात् नात्र कृद्भरेव समास इति नियम्यते, कि तर्हि यदि गत्यादीनां समासो भवति तेनतेन लक्षणेन, तदा कृद्भिः प्रक् सुबुत्पत्त्ेरिति ननु चेवमपि तरबन्तेन समासो न लभ्यते, कि कारणम् असुबन्तत्वात् प्रतिपदिकाधिकाराद्धि तत एव किमेत्तिङव्ययधात् इत्याम् भवति, न सुबन्तात् , न च गतिकारकोपपदानामित्येतदस्ति, अकृदन्तत्वात् अत्राहुः - घकालतनेषु इति ज्ञापकात्सुबन्तादेव सर्वे तद्धिताः, ङ्याप्प्रातिपदिकग्रहणं तु वृद्ध्याद्यर्थमेवाधिक्रियते, ततश्चामुत्पत्तये यः सुप् तदन्तेन समास इति । अपर आह - कुगतिप्रादयः इत्यत्रातिङिति वक्ष्यमाणस्य प्रतिकर्षादुत्तरपदमसुबन्तमेव समस्तयते, ततश्च तरबन्तेन समासो लभ्यत इति ।
इत्येक इति । अस्य कृद्ग्रहणं विस्पष्टार्थम्, न चामन्ते दोषप्रसङ्ग इत्येवं केचिद्व्याचक्षते ।
प्रपचिदेश्याद्यर्थं त्वित्यादि । तुशब्दः पक्षं व्यावर्तयति । आदिशब्देन प्रपचतिकल्पम् , प्रपचतिदेशीयम्, प्रपचतिरुपमित्येतेषां ग्रहणम्। प्रपचतिदेश्यादावर्थः प्रयोजनं यस्य तत्तथोक्तम् । एतदुक्तं भवति - न विस्पष्टार्थं कृद्गरहृथणम्, अपि तु प्रपचिति देश्यादौ यत्र सतिशिष्टस्वरान्तरं नास्ति, तत्रायं स्वरो मा भूद्, अव्ययपूर्वपदप्रकृतिस्वर एव यथा स्यादित्येवं सप्रयोजनं दृश्यते इति । इदं तु वक्तव्यम् - प्रपचतितरामित्यादौ तरबन्तेन समासे पश्चादाम् भवन् प्रत्ययग्रहणपरिभाषया पचितितरशब्दस्यैव घान्तत्वात् तत एव स्यात् । तत्र को दोषः सोपसर्गस्य सङ्घातस्यैकपद्याभावाद् आम्प्रपचतितरां देवदेत्तेत्यादौ आम एकान्तरमामन्त्रितमनन्तिके इत्येष विधिर्न स्यात्, शेषनिघातश्च प्रशब्दस्य न स्यात् भिन्नपदत्वात् । तस्मात् प्रशब्दस्यामन्तेन समासोऽङ्गी

कर्तव्यः, न तरबन्तेन । तत्र समासत्वात् समुदायस्य प्रातिपदिकत्वे विभक्तावैकपद्यं भवति । स्वरे तु देषप्रसङ्गात् कृद्ग्रहणमपि त्यक्तव्यमिति भाष्ये स्थितम्, प्रपचतिदेशीयादौ का गतिरिति न विद्मः ।।

उमे वनस्पत्यादिषु युगपत् ।। 6 - 2 - 140 ।।

वनशब्दः नब्विषयस्वानिसन्तस्य इत्याद्युदात्तः पातेर्डतिः पतिः ।

तनुशब्दोऽन्तोदात्त इति । केचितु तस्याप्याद्युदात्तत्वमत्र निपातयन्ति, तथा च तनूनपादुच्यते गर्भ आसुरः इत्याद्युदात्तमधीयते ।

नरा अस्मिन्नित्यादि । शंसेः अकर्तरि च कारके संज्ञायाम् इत्यधिकरणे वा घञ् । अबन्त इति । कृत्यल्युटो बहुलम् इति कर्तरि ऋदोरप् ।

शुनः शेप इति । बहुव्रीहिः । शुनः पुच्छशेपलाङ्गूलेषु इत्येनेन षष्ठ्या अलुक् । उभावाद्युदात्ताविति । श्वन्शब्दः प्रातिपदिकस्वरेण शेपशब्दः स्वाङ्गशिटामदन्तानाम् तइत्यनेन । शिट् इति सर्वादीनां संज्ञा, स्वाङ्गवाचिनां शिटामदन्तानां चांदिरुदात्तो भवतीत्यर्थः । शडि रुजायाम् पचाद्यच् शण्डः, प्रामादित्वादाद्युदात्तः ।

मर्चयतेः इम्भीकापाशल्यतिमर्चिभ्यः कन् इति कन्, तितुत्र तइत्यादिना इट् प्रतिषेधः, कुत्वम् - मर्कशब्द तआद्युदात्तः ।

तुष्णाब्द इति । तृषेर्निष्ठायामस्मादेव निपातनादिडभावः , निष्ठा च द्व्यजनात् इत्याद्युदात्तत्वम् ।

लबि अवस्रन्सने पचाद्यच्, अस्मादेव निपात्नाल्लकारस्य बकारः, बिश्वानि वयांस्यस्य विश्ववयाः, मृडः अन्येभ्योऽपि दृश्यते इति विच् - मरिति ।

भुजिमृङ्भ्यां युक्त्युकौ - मृत्युः ।।

देवताद्वन्द्वे च ।। 6 - 2 - 141 ।।

उदाहरणेषु देवताद्वन्द्वे च इति पूर्वपदस्यानङ् । अत्र त्रय उदात्ता इति । त्रयाणां पपदानामादयः ।।

नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु ।। 6 - 2 - 142 ।।

अग्निशब्दः अङ्गेर्निर्नलोपश्च इति निप्रत्ययान्तः । कृवापाचिमिस्वदिसाध्यशूभ्य उण् , युक्, वायुः ।

उत्तरपदग्रहकणमित्यादि । अन्यथाऽस्मिन्प्रकरणे द्वन्द्वेः सप्तम्या निर्दिष्टः, नोत्तरपदम् तत्र अनुदात्तादौ इति सप्तम्यन्तं द्वन्द्वस्यैव विशेषणं स्यात्, ततश्चन्द्रसूर्यावित्यादौ प्रितषेधः स्यचात् । उत्तरपदग्रहणे तु सति तस्यैव श्रुतस्य अनुदात्तादौ ित्येतद्विशेषणं भवति ।

अनुदात्तादावित्यादि । तअन्यथा विधिप्रतिषेधयोः समानविषयत्वाद्विकल्पः प्रसज्येत । प्रथेः षिवन् सम्प्रसारणं च । शुक्रशब्दोऽयम् ऋज्रेन्द्राग्र इत्यादिना निपातितोऽन्तोदात्तः ।।

अन्तः ।। 6 - 2 - 143 ।।

तत्र समासस्योत्तरपदस्वेति । क्वचित् समासस्यान्त उदात्तो भवति, क्वचिदुत्तरपदस्येत्यर्थः । विषयविभागमुत्तरत्र दर्शयिष्यति ।।

थाथाधञ्क्ताजबित्रकाणाम् ।। 6 - 2 - 144 ।।

आद्युदात्तमुत्तरपदं स्यादिति । यदिदं नोच्येतेति भावः । दूरादागत तइति । तअत्र कर्मणि क्तः , ग्रामादिरभिधेयः, कृता आङो गतिसमासे गतिरनन्तरः इति प्रकृतिभावे चागत इत्याद्युदात्तम्, तेन स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन इति समासः पञ्चम्याः स्तोकादिभ्यः इत्यलुक्, तत्र कारकात्परमागतमित्येतत् कृदुत्तरपदप्रकृतिस्वरेणाद्युद्त्तं स्यात् । विशुष्क इति । शुषेरकर्मकत्वात् कर्तारि क्तः, शुष्कधृष्टौ इत्याद्युदात्तत्वम्, ततो गतिसमासः । आतपशुष्क इति । नायम् सिद्धसुष्क इति सप्तमीसमासः, सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात् तइति पूर्वपदप्रकृतिस्वरप्रसङ्गात् । तस्मात् कर्तृकरणे कृता बहुरम् इति समासः ।

प्रक्षयः, प्रजय इति । एरच् । ननु च कृदुत्तरपदप्रकृतिस्वरेणैवात्रान्तोदात्तोत्वं सिद्धम् अत आह - क्षयो निवास इत्यादि ।

प्रलवः प्रसव इत्यादि । ऋदोरप् ।

प्रलवित्रमिति । अर्त्तिलूधूसूखनसहचर इत्र) ।

गोवृष इति । वृषु मृषु सेवने । सुस्तुतमिति । सुः पूजायाम्, अतिरतिक्रमणे च इति कर्मप्रवचनीयसंज्ञा, स्वती पूजायाम् इति प्रादिसमासः ।।

सूपमानात् क्तः ।। 6 - 2 - 145 ।।

वृकावलुप्तमित्यादि । लूञ् छेदने , च्युङ् प्रुङ् प्लुङ् गतौ, नर्द गर्द शब्दे - सर्वत्र कर्तृकरकणे कृता बहुलम् इति समासः । कवृकैसरिवालुप्तमित्यादिविग्रहः । उपमानादपीत्यादि । अत्रेतिशब्दस्यानन्तरं प्रप्त इत्यस्यानुषङ्गः ।।

संज्ञायामनाचितादीनाम् ।। 6 - 2 - 146 ।।

सम्भूतादयः शब्दा रामायणादीनां संज्ञाः, रामायणशब्दो नपुंसकलिङ्गः, प्रायेण तु पुंल्लिङ्गः पठ्यते। उपहूत िति । ह्वञो निष्ठायां यजादित्वात् सग्प्रसारणम्। परिजग्ध इति । अदो जग्धिरादेशः । प्राप्त्यर्थादभ्वतेरिति । चुरादौ आधृषाद्वा इत्यधिकारे भू प्राप्तवात्मनेपदी इति पठ्यते ।

किं पुनः कारणं प्रयत्नेन कर्मणि क्त तउपपाद्यते अत आह - गातिरनन्तर इत्यत्र हीति । तद्वाधनार्थञ्चेदमिति । प्रकृतोदाहरणाभिप्रयमेतद् , न सूत्राभिप्रायम् । घनुष्खातेति । नित्यं समासेऽनुत्तरपदस्थस्य इति षत्वम् ।

चिञ् चयने ष्ठा गतिनिवृत्तौ, ण्यन्तः केवलश्च, ग्रह उपादाने , वच परिभाषणे, पद गतौ शिलष आलिङ्गने , डुधाञ् धारणपोषाणयोः - सर्वत्र कर्णमि क्तः, एते आचितादयः ।

संहिताऽगवीति गाणसूत्रम्, तद् व्याचष्टे - याद गोरन्यस्वेति ।।

प्रवृद्धादीनां च ।। 6 - 2 - 147 ।।
वृधु वृद्धौ यु मिश्रणे डुधाञ् धारणे रुह बीजजन्मनि शसु हिंसायाम् । खट्वारुढ इति । खट्वा क्षेपे इति समासः । नैतदिह पठितव्यमिति अहीने द्वितीया तइत्यत्रावोचाम । कविभिः शस्तः, तृतीय कर्मणि तइत्यस्यापवादः ।
प्रायोवृत्तिप्रदर्शनार्थ इति । प्रायो बाहुल्येन या वृत्तिर्यानादिष्वर्थेषु तस्याः प्रदर्शनार्थ इत्यर्थः ।
पुनरुत्स्यूतमिति । सीव्यतेः च्छ्वोः शूडनुनासिके इति ऊठ्, पनश्चनसोश्छन्दसि िति गतिसंज्ञायां समासः ।।
कारकादत्तश्रुतयोरेवाशिषि ।। 6 - 2 - 148 ।।
संज्ञायामनाचितादीनाम् इति वहितमन्तो दात्तत्वमनेन नियम्यते, देवा एनं देयासुः इत्येवं प्रार्थितैर्देवैर्दत्तो देवदत्तः, आशिषि लिङ्लोटौ इति वर्तमाने क्तिच् क्तौ च संज्ञायाम् इति क्तः , दो दद्धोः ।
सम्सूतो रामायण इति । कारकात् इत्युनच्यमाने गतिकारकोपपदात् इति त्रितयाधिकाराद्यथैव कारकान्नियमो भवति, तथा गतेरपि स्यात् ।
एवकारकरणं किमिति । सिद्धे विधिरारभ्यमाणोऽन्तरेणाप्येवकारं नियमार्थो भविष्यतीति प्रश्नः । कारकावधारणमित्यादि । असति ह्येवकारं विपरीतो।पि नियमः स्यात् - कारकादेव दत्तश्रुतयोरिति । एवं चाकारकाद् दत्तश्रुतयोर्न स्यात्, इष्यते, च , तथा कारकस्यानियतत्वाद् देवपालित इत्यादावन्तोदात्तप्रसङ्गः । अतः कारकावधारणं यथा स्याद्दत्तश्रुतावधारणं मा भूदित्येवमर्थं करणमित्यर्थः । अयमपि नियम इष्यत इति । एतच्च तन्त्रेण सूत्रद्वयोच्चारणादेकसूत्रेऽपि आशिष्येवेति भिन्नक्रमत्वादेवकारस्य लभ्यते ।।
इत्यम्भूतेन कृतमिति च ।। 6 - 2 - 149 ।।
सप्तप्रलपितमित्यादि । कथं पनरेतान्युदाहरणानि, यावता कृतामित्युच्यते, न च प्रलपितादीनि कृतानि, अभूतप्रादुर्भाव एव हि करोतिर्वर्तते, ततश्च सुप्रकृतं सुप्रभाषितं सुप्रोत्पादितमित्यादिकमेवोदाहर्तव्यम् अत आह - कृतमिति क्रियासामान्ये करोतिर्वर्तत इति । ततश्च यथा क्रियावचनो धातुः क्रियायां क्रियार्थायाम् इत्यादौ विशेषाणामपि ग्रहणं भवति, तद्वदत्रापि । अभूतप्रादुर्भावः - निष्पादनम् ।।
अनो भावकर्मवचनः ।। 6 - 2 - 150 ।।
पयः पानादीनाममुपपदसमासः । राजभोजनादौ षष्ठ्या समासः ।
सर्वषु प्रत्युदाहरणेष्वित्यादि । एतेन गातिकारकोपपदात् इत्यस्यायमपवाद इति दर्शयति ।।
मन्क्तिन्व्याख्यानशयनासनस्थाRनयाजकादिक्रीताः ।।B 6 - 2 - 151 ।।
रथवर्त्मेति । वृत्तेरधिकरणे मनिन्, कर्तरि षष्ठ्या समासः । पाणिनिकृतिरिति । कर्मणि क्तिन्, पूर्ववत्समासः । व्याख्यानशब्दः करणसाधनः, शयनासनस्थानशब्दा अधिकरणसाधनाः। प्रकृतिः, प्रह्रतिरिति । तादौ च निति कृत्यतौ इति पूर्वपदप्रकृतिस्वर एवात्र भवति ।।
सप्तम्याः पुण्यम् ।। 6 - 2 - 152 ।।
उणादीनां त्विति । अतः कृकमिकंस इत्यत्र कमिग्रहणैनैव सिद्धे कंसग्रहणादुणादिषु पाक्षिकव्युत्पत्तिकार्यमिति भावः । पूञो यत्, णुक् ह्रस्वश्च, पुण्यम् । ह्रस्वविधानादगुणत्वम् । यतोऽनावः इत्याद्युदात्तवम् ।।
ऊनार्थकलहं तृतीयायाः ।। 6 - 2 - 153 ।।
उदाहरणेषु पूर्वसदृश इति तृतीयासमासः ।
अत्र केचिदित्यादि । नन्वेवमूनशब्दस्यापि स्वरुपग्रहणं प्रसज्येत, ततश्च तदर्थानामान्येषां ग्रहणं न स्यात् अत आह - ऊनशब्देनैव त्विति । अर्थनिर्देशार्थत्वं तु व्याख्यानादवसेयम् ।।
मिश्रं चानुपसर्गमसन्धौ ।। 6 - 2 - 154 ।।
कथं पुनर्मिश्रशब्दस्य विधीयमानः सम्मिश्रशब्दस्य प्राप्वोति, कथं वा मिश्रशब्देन समान उच्यमानः सोपसर्गेण लभ्यते अत आह - इहेत्यादि ।
प्रत्युदाहरणे सन्धिं दर्शयति - बाह्मकणैरिति । एतदेव स्पष्ययति - एकार्थ्यमापच इति ।
कथं पुनः सन्धिशब्दस्यायमर्थः इत्याह - सन्धिरिति । पणबन्धः - परिभाषणम् - यदि मे भवानेषं कुर्यादहमपि ते इदं करिष्यामीत्येवंरुपः ।
केचित्पुनरिति । गृह्यमाणो विशेषो व्यावृत्तिर्थस्यां प्रत्यासत्तो सा तथोक्ता । ततः किम् इत्याह - तत्रेति । यद्यपि राज्ञोऽपि ब्राह्मणैस्सह प्रत्यासत्तिरस्ति, तथापि सत्यामपि तस्यां परस्परमूर्तिविभागस्वरुपभेदो गृह्यत इति प्रत्युदाहरणोपपत्तिरित्यर्थः ।
उदाहरणेषु नैवमित्याह - उदाहरणेष्विति ।।
नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः ।। 6 - 2 - 155 ।।
सम्पादि - शोभनम् । कार्णवेष्टकिकमिति । सम्पादिनि इति प्राग्वतेष्ठ्य् । छैदिक इति । छैदादिभ्यो नित्यम् इति आर्हादगोपुच्छ इत्यादिना ठक् । वत्सीय इति । प्राक् क्रीताच्छः । सान्तापिक इति । तस्मै प्रभवति सन्तापादिभ्यः इति पाग्वतेष्ठ्ञ् ।
नञ तिति किमिति । प्रतिषेधे प्रायेण नञ एव प्रवृत्तिदर्शनात्प्रश्नः । विगार्दभरथिक तइति । अव्ययपूर्वपदप्रकृतिस्वर एवात्र भवति । गर्दभरथिकादन्य इत्यादि । उदाहरणादस्य विशेषंम प्रदशेयितुम् गुणप्रतिषेधे इति सूत्रावयवं व्याचष्टे - गुण इति । तद्धितार्थः सम्पाद्यादिः, तस्य यत्प्रवृत्तिनिमित्तं सम्पादित्वादि । आदिशब्देन तदर्हत्वादेर्ग्रहणम्, स गुण इत्युच्यते । उक्तं हि - संसर्गभेदकं यद्यत् सव्यापारं प्रतीयते । गुणत्वं परतन्त्रत्वात्तस्य शास्त्र उदाहृतम् ।। इति ।

कथं तस्य गुणस्य प्रतिषेध उच्यते इत्याह - कर्णवेष्टकाभ्यां न सम्पादीति । ववेढेति । अर्हर्थे तृच्, ढत्वधात्वष्टुत्वधलोपषु सहिवहोरोदवर्णस्य इत्योत्वम् ।।

ययतोश्चातदर्थे ।। 6 - 2 - 156 ।।

पाशतृणशब्दाभ्यां समूहे पाशादिभ्यो यः दन्तकर्णशब्दाभ्यां भवार्थे दिगादिभ्यो यत्, शरीरावयवाच्च इति यत् ।

पाद्यमिति । पादार्घाभ्यां च इति यत् । अदेयमिति । अर्हार्थे अचो यत् ईद्याति इतीत्वम्, गुणः । निरनुबन्धकैकानुबन्धयीरिति । एते च परिभाषे - वामदेवाद् ङ्यड्ङ्यौ इत्यत्र ज्ञापिते ।।

अच्कावशक्तौ ।। 6 - 2 - 157 ।।

अविक्षिप इति । वक्ष्यमाणैः कृत्योकेष्णुज्भिः साहचर्यादच्कयोः कृतोरिदं ग्रहणम्, तेन कृद्ग्रहणपरिभाषया विक्षिपशब्दस्य कान्तत्वम् ।

दीक्षितपरिव्राजकौ शास्त्रनिषेधान्न पचतः, न त्वशक्तत्वात्, तेन तत्र व्रतं गम्यते, न त्वशक्तिः ।।

आक्रोशे च ।। 6 - 2 - 158 ।।

अपचोऽयं जाल्म ईति । लोभोऽत्र विवक्षितः, न त्वशाक्तिः ।।

संज्ञायाम् ।। 6 - 2 - 159 ।।

अदेवदत्त इति । यो देवदत्तः सन् तत्कार्यं न करोति, स एवमाक्रुश्यते ।।

कृत्योकेष्णुच्चार्वादयश्व ।। 6 - 2 - 160 ।।

द्व्यनुबन्धकस्यापि ग्रहणमिति । भवतीति वक्ष्यमाणेन सम्बन्धः । अत्रैव हेतुः - इकारादेर्विधानसामर्थ्यादिति । भवतेरुदात्तत्वात्ततः परस्य खिष्णुच इटैवेकारादित्वे सिद्धे इकारादेर्विधानमिह सामान्यग्रहणार्थमे वेति भावः । अचारुरित्यादि ।

चरेर्ञुण् चारुः । साधेरुण् साधुः । युधा चरति यौधिकः । एजेः खश् अङ्गमेजयः, ततोऽन्योऽनङ्गमेजयः । वदेरान्यः । न कस्मादकस्मात् । वृतु वर्तते, वृधु वृद्धौ, ञित्वरा सम्भ्रमे, रुच दीप्तौ धृङ् अवस्थाने - एते शानजान्ताः गृह्यते । संज्ञायां कन् - गृहपतिकः । गृहपतिरित्यन्ये पठन्ति ।।

बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ।। 6 - 2 - 162 ।।

प्रथमेति स्वरुपग्रहणम् । पूरणशब्दस्य स्वरितत्ात्तदधिकारविहितानां प्रत्ययानां ग्रहणम् ।

अनेन प्रथम इति । अत्र तृतीयापूर्वपदप्रकृतिस्वर एव भवति ।

यत्प्रथमा इति । यः प्रथम एषामिति बहुव्रीहिः । अत्रापि पूर्वपगदप्रकृतिस्वर एव भवति ।

इदम्प्रधाना इत्यर्थं इति ।

अनेन प्रधानवचनः प्रथमशब्दो न त्वेकसंख्यावचन इति दर्शयन् गणनाभावमाह - उत्तरपदस्वेत्यादि । सर्वत्रेह समासस्येति प्रकृतम्, उत्तरपदादिः इत्यतः प्रभति उत्तरपदस्य इति च, तत्र चोत्तरपदं कायित्वेनाश्रीयते । तेन यदा कबुत्पद्यते तदा कपि परतो यत्पूर्वं प्रथमेति तदन्तोदात्तं भवति, न तु कबन्तम् । कप्रत्ययो हि समासस्यैवान्तः, नोत्तरपदस्य । यदा च समासार्थादुत्तरपदादकृत एव समासे समासान्त इति पक्षः, तदापि प्रथमपूरणयोः इति विशेष्टरुपग्रहणात्, कपश्च तत्रान्तर्भावादुपात्तयोरेव स्वरः । ननु यदत्रोत्तपरपदं कबन्तं न तदुपात्तम्, यच्चोपात्तं न तदुत्तरपदम्, कपा सहोत्तरपदत्वादिति नात्र कपः स्वरप्रसङ्गः, नापि ततः पूर्वपदस्य सेवरेण भवितव्यम् । तस्मादिस्मिन् पक्षे उत्तरपदग्रहणमुपान्तस्योपलक्षणम्। प्रायोण हि तदुत्तरपदम्, उत्तरपदस्य कार्थित्वात् । कोऽर्थः प्रायोणोत्तरपदभूतयोः प्रथमपूरणयोः कार्तित्वादित्यर्थः ।।

विभाषा छन्दसि ।। 6 - 2 - 164 ।।

द्विस्तना - इत्यन्तोदात्तम् । चतुस्तना - इत्याद्युदात्तम् ।।

संज्ञायां मित्त्राजिनयोः ।। 6 - 2 - 165 ।।

विश्वामित्त्र इति । मित्त्रे चर्षौ इति दीर्घः, परत्वादनेनान्तोदात्तत्वं प्राप्तं प्रतिषिध्यते, ततः बहुव्रीहौ विश्वं संज्ञायाम् इति पूर्वपदान्तोदात्तं भवति ।।

व्यवायिनोऽन्तरम् ।। 6 - 2 - 166 ।।

उदाहरणे व्यवधानवाचिनोऽन्तराशब्दात् तत्करोति इति णिचि पचाद्यच् । प्रत्युदाहरणे त्वन्यवाच्यन्तरशब्दः ।।

मुखं स्वाङ्गमः ।। 6 - 2 - 167 ।।

दीर्घमुखा शालेति । मुखशब्देनात्र द्वारप्रदेशः शालाया उच्यते । ननु च स्वमङ्गं, ततश्च भवितव्यमेवात्रापि अत आह स्वाङ्गमद्रवादिलक्षणं गृह्यत इति ।।

नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः ।। 6 - 2 - 167 ।।

उच्चैर्नीचैः शब्दै स्वरादिष्वन्तोदात्तौ । प्राक्शब्दः अनिगन्तोऽञ्चतौ इत्याद्युदात्तः । प्रत्यङित्यत्र कृदुत्तरपदप्रकृतिस्वरः । गोमहतोरुक्तः स्वरः । स्थूलशब्दः ऋज्रेन्द्र इत्यादौ निपातितः, अन्तोदात्तः । मुषेः क्तिच् - मुष्टिः । कुश्च, प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च इति पृथुः । वदेः सः वत्सः । गोमुष्टिवत्सपूर्वस्यत्यादि । अस्य प्रतिषेधस्यावकाशो यत्र गवाध्युपमानं न भवति - गौर्मुखमित यस्य, मुष्टिर्मुखमिव यस्य, वत्सो मुखमिव यस्येति, सर्वत्र गवाद्युपमेयम्, नोपमानम् विकल्पस्योत्तरस्यावकाशो यत्र गवादिपूर्वपदं न भवति - सिंहमुखः व्याघ्रमुखः, गावादावुपमाने उभयप्रसंगेऽयमेव भवति प्रतिषेधः पूर्वविप्रतिषेधेन ।।

निष्ठोपमानादन्यतरस्याम् ।। 6 - 2 - 169 ।।

हिंसेः पचाद्यच्, पृ़ृषोदरादित्वादाद्यन्तविपर्ययः - सिंहः । व्याजिघ्रतीति व्याघ्रः । आतश्चोपसर्गे इति कः । पाध्राध्माधेट्दृशः इति शो न भवति, जिघ्रतेः संज्ञायां प्रतिषेधः इति वचनात् ।।

जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतिमितप्रतिमन्नाः ।। 6 - 2- 170 ।।

ननूदाहरणेषु प्रत्युदारहणेषु च नि,ठेति निष्ठान्तं पूर्वं प्रयोक्तव्यं स्यात् इत्यत आह - एतष्विति । प्रत्युदारहणे,ित्यादि । तत्र पुत्रशब्दोऽन्तोदात्तः । वसेष्ट्रन् - वस्त्रम् , दस्यैव ल्युट् - वसनम् । कुण्डशब्दः नब्विषयस्यानिसन्तस्य इत्याद्यदात्तः ।।

वा जाते ।। 6 - 2 - 171 ।।

दन्तस्तनशब्दौ स्वाङ्गशिटामदन्तानाम् इत्याद्युदात्तौ । मासशब्दः प्रामादीनां च इत्याद्युदात्तः । संवत्सरशब्दः बंहिष्ठवत्सरतिशत्थान्तानाम् इत्यन्तोदात्तः । अस्यार्थः - बंहिष्टवत्सरतिशत्थ ित्येवमन्तानामन्त उदात्तो भवति - बंहिष्ठः, संवत्सरः, सप्ततिः, अशीतिः, त्रिंशत्, चत्वारिंशत्, गूथम्, पूथम् ।

सुखदुःखशब्दौ खान्तस्याशमादेः इत्यान्तोदात्तौ । अस्यार्थः - खान्तस्य शब्दस्याशकारमकारादेरन्त उदात्तो भवति, नखः, तउखा । अशमादेरिति किम् शिखा, मुखम् । तृपेः स्फायितञ्चि इत्यादिना रक्प्रत्ययः । कृतेश्छ्र च - कृच्छ्रम् । असेर्बहुलवचनाद्रक्, अस्रम् । अम्बिकादयश्च इति अम्बकशब्द इकन्प्रत्ययान्तो निपातितः । प्रतिगता आपोऽत्र प्रतीपम् । कृवापाजिभ्य उण् - कारुः । कृपेः क्युन् - कृपणः । सहेः क्ते सोढः । दश सुखादयः ।।

नञ्सुभ्याम् ।। 6 - 2 - 172 ।।

समासस्यैतदित्यादि । यद्यपि समास उत्तरपदं चेति प्रकृतम्, तथाप्यत्र समासस्येव कार्यित्वामिष्यते । एतच्च कपि पूर्वम् इति वचनादवसीयते । यदि ह्यनेनोत्तरपदस्यान्तोदात्तत्वं स्यात्, ततोऽकुमारीक इत्यादावनेनैव समद्धत्वात् अपि पूर्वम् इति न वाच्यं स्यात् । समासान्ताश्च समासवयवा भवन्तीति । समासान्ता इत्यत्रान्तग्रहणमेतदर्थम् - समासान्ताः समासग्रहणेन यथा गृह्येरन्निति, तेनानृच इत्यादौ कृते समासान्ते तस्यैव समासान्तस्योदात्तत्वं भवति । वहवृच इति । बहोर्नञ्वद् इत्यतिदेशादिदमत्रोदाहृतम् । एतच्च समासान्ताः समासस्यैवावयवाः, नोत्तरपदस्य इत्याश्रित्योक्तम् । न कपि इत्यत्र तु पूर्वं समासान्तेषु पश्चात्तदन्तेन समासः इति वक्ष्यति ।।

कपि पूर्वम् ।। 6 - 2 - 173 ।।

पूर्वेण कप एवादात्तत्वे प्राप्ते ततः पूर्वस्योदात्तचं धीयते ह्रस्वन्तेऽन्त्यात्पूर्वम् कइति वचनादिह दीर्घान्ता एवोदाहृताः । नद्यृतश्च इति कप् ।।

ह्रस्वान्तेऽन्त्यात्पूर्वम् ।। 6 - 2 - 174 ।।

ह्रस्वान्ते इत्यस्य बहुव्रीहेरन्यपदार्थ उत्तरपदं समासो वेत्याह - ह्रस्वोऽन्तो यस्यत्यादि ।

अत्र च कपि परतः इति पृथग्वचनात्तद्रहितमुत्तरपदं समासश्च गृह्यते, पूर्वग्रहणमनर्थकम्, कपि पूर्वमित्यनुवृत्तेः इत्यत आह - पूर्वमिति वर्तमाने इत्यादि । द्वितीये पूर्वग्रहणे सति प्रवृत्तिभेदो भवति, तत्रैकया प्रवृत्त्या ह्रस्वान्तऽन्त्यात्पूर्वस्योदात्तत्वं विधीयते, अपरया तु नियम्यते - ह्रस्वान्तेऽन्स्यादेव पूर्वमुदात्तं भवति, न तु कपि पूर्वमिति। तेन किं सिद्धं भवति तत्राह - तेनेति । नास्त्यस्य ज्ञ इत्यज्ञकः, शोभनो ज्ञोऽस्येति सुज्ञकः । तत्र यद्येष नियमो न स्यात्, ततोऽन्त्यात्पूर्व उदात्तभावी नास्तीति कपि पूर्वम् इत्ययमेव स्वरः स्यात् । अस्मिस्तु नियमे सति न भवति, नञ्सुभ्याम् इति कबन्तस्यैव भवति । यथा च कबन्तस्य भवति तथा तत्रैव प्रितपादितम् । व्यक्तिपक्षाश्रयणे चैतत्पूर्वग्रहणं कृतम् । जातिपक्षाश्रयणे तु यथा हलादिः शेषः इत्यत्र क्वचिदपि वर्तमानो हलादिरनादेः सर्वत्र निवृत्तिं करोति, (तथैव ) ह्रस्वान्तेऽन्त्यात्पूर्वम् इत्यत्रापि ह्रस्वजातेराश्रयणात्सर्वत्र ह्रस्वान्ते तक्रकौण्डिन्यन्यायेन कपि पूर्वम् इत्यस्याप्रवृत्तिः सिध्यति ।।

बहोर्नञ्वदुत्तरपदभूम्नि ।। 6 - 2 - 175 ।।

नञ इव नञ्वत्, अस्मादेव निपातानात्पञ्चमीसमर्थाद्वतिः । यद्वा - सम्बन्धसमामान्ये षष्ठी, तया सर्वे विभक्त्यर्था संगृह्यन्त इति पञ्चम्यर्थेऽपि तत्र तस्येव इति वतिः षष्ठ्यन्तादेव । बहूनां भावो भूमा, बहोर्लोपो भू

च बहोः, उत्तरपदशब्देन तदर्थो गृह्यते, स्वरुपणोत्तरपदस्य बहुत्वासम्भवात् । तदाह - उत्तरपदार्थबहुत्व इति । किमर्थं पुनरतिदेश आश्रीयते, न नञ्सुबहुभ्य उत्तरपदभूम्नि इत्युच्येत, एवमपि ह्युच्यमाने उत्तरपदभूम्नि इत्येतत्सम्भवव्यभिचाराभ्यां बहोरेव विशेषणं भवतिष्यति, योऽपि न गुणादयोऽवयवाः इति प्रतिषेधः, तत्राप्युत्तरपदभूम्नीत्यनुवृत्तेर्बहोरेव भवतिष्यति, न नञ्सुभ्याम् - अगुणः सगुणः इति इदं तर्हि प्रयोजनम् - प्रकरणान्तरेऽपि यो नञाश्रयः स्वरस्तस्याप्यतिदेशो यथा स्यादिति । तद्दर्शयति - नञी जरमरमित्त्रमृता इत्युक्तमित्यादि ।।

न गुणादयोऽवयवाः ।। 6 - 2 - 173 ।।

गुण संख्याने चुरादेरदन्तादेरच् । अशेः सरः . अक्षरः । छन्दो मीयते येन छन्दोमानम् । वचेः सुपूर्वात् क्तः - सूक्तम् । अधीयतेऽस्मादिति अध्यायः , इङश्च इति घञ् । एते गुणादयः ।।

उपसर्गात् स्वाङ्गं ध्रुवमषर्शु ।। 6 - 3 - 177 ।।

स्वाङ्गं प्रति क्रियायोगाभावाद् कउपसर्गग्रहणं प्रद्युपलक्षमम् । सततं यस्येत्यादिना षृष्ठस्य ध्रुवत्वं दर्शयति । तीर्थपृष्ठगूढयूथ इति पृष्ठशब्दो निपातितः । उद्वाहुः क्रोशतीति । अत्र क्रोशनसमय एवोद्वाहुत्वं न सर्वदेत्यध्रुवत्वम् । स्पृशेः श्वण्शुनौ पृ च स्वृशेर्धातोः श्वण्, न् - इत्येतौ प्रत्यौ भवतः, धातोश्च पृ इत्यादेशः । बहुलवचनाच्छकारस्योत्संज्ञा न भवति, यथाक्रमं वृद्धिगुणौ - पार्श्वम्, पर्शुः ।।

परेरमितोभावि मण्डलम् ।। बहुव्रीहिरयमित्यादि । यदा बहुव्रीहिस्तदा परितः कूलमस्येति विग्रहः । प्रादिसमासे तु परिगतं कूलमिति । यदा पुनरव्ययीभावस्तदा परिकूलादिति । अव्ययीभावपक्षेऽपि हीत्यादि । अव्ययीभावेऽप्ययमेव स्वर एषितव्यः न समासस्वरेण सिद्धिरित्यर्त्थः । अमितो भावोऽस्यास्तीत्यमितोभावीति । लौकिके योगे लाघवस्यासार्वत्रिकत्वाद्बहुव्रीहिरेव नाश्रित इत्याह - अमितोभावीति । सुप्यजातौ इति णिनिरिति । यच्चैवंस्वभावमिति । अभितोभवनस्वभावम् ।।

प्रादस्वाङ्गं संज्ञायाम् ।। 6 - 2 - 183 ।।

प्रकोष्ठादिषु प्रादिसमासः बहुव्रीहिर्वा ।।

निरुदकादीनि च ।। 6 - 2 - 184 ।।

एषामित्यादि । यदा प्रदिसमासस्तदा - निर्गतमुदकं निर्गतं वोदकादिति विग्रहः, बहुव्रीहौ -- निर्गतमुदकमस्मादिति । अथाव्ययीभावार्थमप्येषां ग्रहणं कस्मान्न भवति अथ आह -- अव्ययीभावे त्विति । निष्कालिक इति । कालशब्दज्जानपदादिसूत्रेण ङीष्, ततः स्वार्थे कन्, केऽणः इति ह्रस्वः, कालिका, ततः प्रादिसमासः ।

निष्षेष इति । पिषेर्घञ् । कुत्सितस्तरीय इति । दुः कुत्सायां वर्तत इति दर्शयति । अपरे निस्तरीक इति । पठन्तीत्यनुषङ्गः, निष्पूर्वोऽजिनशब्दः । स एवोदुपपूर्वः ।

परेरित्यादि । परेरुत्तरे हस्तादयोऽन्तोदात्ता भवन्ति । परिहस्त इत्यादि । (हरैरिव केशा यस्य हरिकेशः , कपेरिव कपिकेशः )।।

अभेर्मुखम् ।।6 - 2 - 185 ।।

उपसर्गात्स्वाङ्ग ध्रुवमिति सिद्ध इति । मुखं स्वाङ्गम् इति न सिद्ध्यति नाव्ययदिक्शब्द इति प्रतिषेधात् ।।

अपाञ्च ।। 6 - 2 - 186 ।।

अव्ययीभावोऽप्यत्र प्रयोजयतीति । कुतः इत्याह - तत्रापि हीति । यस्मात्तत्रापि परिप्रत्युपापा इति पूर्वपदप्रकृतिस्वरत्वमुक्तम्, तस्मात्सोऽपि प्रयोजयतीत्यर्थः ।

योगाविभाघ उत्तरार्थ इति । उत्तरत्र उपात् इत्यस्यैवानुवृत्तिर्यथा स्यात्, अभेर्मा भूत् ।।

स्फिगपूतवीणाञ्चोऽध्वकुक्षिसीरनाम नाम च ।। 6 - 2 - 187 ।।

नामग्रहणं सीरशब्देनेव सम्बध्यते, न स्फिगादिभिःस्फिगपूतकुक्षीणां पृथग्ग्रहणात् ।

उपसर्गादध्वन इति यदा समासान्त इत्यादि । अत्र कारणमाह -- तस्मिन् हि सतीति । ननु च

चउपसर्गादध्वनः इत्यत्र तु न विकल्पः श्रुतः, नापि प्रकृतः, तत्किमुच्यते - यदा समासान्तो नास्तीति अत आह -- अनित्यस्चेति । यदि नित्यः समासान्तः स्यदध्वग्रहणमिह न कर्तव्यं स्याद्, अच्प्रत्ययस्य चित्त्वादेवान्तोदात्तत्वस्य सिद्धत्वात् कृतं तु, ज्ञापयति -- समासान्तविधिरनित्य इति ।

स्फिगपूतकुक्षीणामित्यादि । यदा ह्येतानि स्वाङ्गवाचीनि ध्रुवाणि च भवन्ति, बहुव्रीहिश्च समासः, तदा उपसर्घात्स्वाङ्गम् इत्येव सिद्धम् ।।

अधेरुपरिस्थम् ।। 6 - 2 - 188 ।।

उपरि तिष्ठतीत्युपरिस्थम्, सुपि स्थः इति कः ।

दन्तस्योपरीत्यादिनोपरिस्थत्वं दर्शयति ।

अधिकरणमिति । अत्र कृदुत्तरपदप्रकृतिस्वरेण ककाराकार उदात्तः ।।

अनोरप्रधानकनीयसी ।। 6 - 2 - 189 ।।

उदारहणे उत्तरपदार्थस्याप्राधान्यं दर्शयति । पूर्वपदार्थप्रधानः प्रादिसमासोऽयमिति । प्रधानार्थे च कनीयोग्रहणमिति । अन्यत्रा प्रधानग्रहणेनैव सिद्धत्वात् । अनुगतो ज्यष्ठ इति । विग्रहविशेषेण प्रधानवाचित्वं ज्येष्टशब्दस्य दर्शयति ।।

पुरुषश्चान्वादिष्ठः ।। 6 - 2 - 190 ।।

अन्वादिष्टः - अप्रधानशिष्टः, यथा भिक्षामठ गां चानयेति गोरानयनम् । कथितानुकथितो वेति । कस्मिंश्चित्प्राक्कथिते योऽन्यः पश्चात्कथ्यते स कथितानुकथितः । अनुगतः - पश्चाद्गतः ।।

अतेरकृत्पदे ।। 6 - 2 - 191 ।।

अकृच्च पदच्च अकृत्पदे ।। आतकारक इति । शोभनः कारकः, स्वती पूजायाम् इति प्रादिसमासः ।

अतेर्धातुलोप इति वक्तव्यमिति । अत्यङ्कुश चइत्यादौ वृत्तिवषयेऽतिशब्दो।तिक्रन्तार्थवृत्तिरिति क्रमेरप्रयोग एव धातुलोपः । अतिगार्ग्य इति । यथान्यासे त्वत्रापि प्राप्नोति गार्ग्यशब्दस्याकृदन्तत्वात् । अतिकारक इति । यथान्यासे त्वत्र न स्यात्, कारकशब्दस्य कृदन्तत्वात् । तस्मादव्याप्त्यतिव्याप्तिपरिहार्थमकृत्पदे इत्यपनीय अतेर्धातुलोपः इति वक्तव्यम् ।

नेरनिधाने ।। 6 - 2 - 192 ।।

निधानमप्रकाशतेति । न निधानमनिधानम् । निर्गतं मूलमस्य निर्गतं वा मूलन्निमूलम् ।

निधानार्थं ब्रवीतीति । अप्रकाशतां ब्रवीतीत्यर्थः । कथं पुनर्निशब्दस्यायमर्थः इत्याह - प्रादयो हीति ।।

प्रतेरंश्वादयस्तत्पुरुषे ।। 6 - 2 - 193 ।।

अंशुशब्दः कुश्च इति वर्तमाने मृगय्वादयश्च इति निपातितः । राजतेः कनिन् राजन् । उष दाहे, ष्ट्रन् --उष्ट्रः । खिट्, ण्वुल् -खेटकः । अजिरशिशिर इति किरच् - अजिरम् । द्रातेराङ्पूर्वाद् आतश्चोपसर्गे इत्यङ्, अस्मादेव निपातनादाङो रगागमझः - आर्द्रा । श्रृणोतेर्ल्युट् - श्रवणम् । कृतिभिदिलतिभ्यः कित्, तिकन् प्रकृतः - कृत्तिका । ऋघेः पचाद्यच् - अर्धः । पुर अग्रगमने इगुपधात्कः पुरम् । एते अंश्वादयः ।।

उकपाद् द्व्यजजिनमरगौरायः ।। 6 - 2 - 194 ।।

गुरी उद्यमने, पचाद्यजन्तात्प्रज्ञाद्यण्, गौरम्। तिष्येण युक्तः कालस्तैषः । लेट् लोट् इति । कण्ड्वादिपठिताब्यां पचाद्यच्, लेटलोटौ । दिहेर्जिह्वा उणादिः । कृषेर्वर्णे इति नक्, टाप् - कृष्णा । कन्याशब्दः अध्न्यादयश्च इति निपातितः । गुघ घनत्वे इगुपधात्कः गुधः । क्लृपिपदिभ्यां घञ् - कल्पः, पादः ।।

सोरवक्षेपणे ।। 6 - 2 - 195 ।।

उदारहणे तु स्वती पूजायाम् इति कर्मप्वचनीयस्य समासः । तेन सुप्रत्यवसिते थाथादिस्वरेण सिद्धिर्नाशङ्क्या । यदि सुशब्दोऽत्र पूजायामेव वर्तते, कथं तर्हि क्षेपो गम्यते इत्याह - वाक्यार्थस्त्विति । कथम् इत्याह - आसूयया तथाभिधानादिति । यः खल्वनर्थं उपस्थिते सुखायाम् आस्ते तं प्रकृत्यैवमुक्ते क्षेपो गम्यते ।।

विभाषोत्पुच्छे।। 6 - 2 - 196 ।।

सेयमुभयत्र विभाषेति । आद्यप्रवृत्तावव्ययपूर्वपदप्रकृतिस्वरेण बाधितत्वात् समासस्यान्तोदात्तत्वमप्राप्तम्, द्वितीयायां तु थाथादिस्वरेण नित्यं प्राप्तमिति कृत्वा ।।

द्वित्रिभ्यां पाद्दन्मूर्द्धसु बहुव्रीहौ ।। द्वित्रिभ्याम् इति दिग्योगलक्षणा पञ्चमी, पाद्दन्मूर्द्धसु इति सत्सप्तमी, बहुव्रीहिः कार्यीति, तदेतदाह - द्वित्रि इत्येताभ्यामिति । द्विपादिति । संख्या सुपूर्वस्य इत्यकारलोपः समासान्तः । दन्निति । वयसि दन्तस्य दतृ।

मूर्द्धन्नित्यादि । न ह्यकृत्समासान्तस्य सम्भवः अत आह - एतदेवेति ।

यदि तर्ह्यकृतसमासान्तस्योपादनम्, एवं सति यदि समासान्तः क्रियते, तदा न प्रापनोति तस्य शब्दान्तरत्वादित्यत आह - यदपीति । इह हि बहुव्रीहिः कार्यित्वेनोपात्तः, न मूर्द्धशब्दः । तदेकदेशत्वाच्चेति । तस्य बहुव्रीहेरेकदेशोऽवयवः समासान्तस्तद्भावस्तत्त्वम्, तस्मादित्यर्थः । तदेकदेशित्वादिति पाठे स व व्रीहिरेकदेशी अवयवी यस्य स तदेकदेशी, तस्य भावस्तत्त्वम्, तस्मादिति स एवार्थः । तदेवं बहुव्रीहेः कार्यित्वात्त्देकदेशत्वाच्च समासान्तस्य यदापि समासान्तः क्रियते, तदाप्ययं विधिर्भवत्येव ।

अपर आह - यदाप्युत्तरपदस्य कार्यित्वं तदापि परत्वादन्तोदात्तत्वे कृते पश्चात्समासान्तः, तत्र टिलोपे सति उदात्तनिवृत्तिस्वरेणैव षप्रत्ययस्य सिद्धमुदात्तत्वमिति । कल्याणमूर्द्धेति । पूर्वपदप्रकृतिस्वर एवात्र भवति । कल्याणशब्दः लघावन्ते इति मध्योदात्तः ।।

सक्थं चाक्रान्तात् ।। 6 - 2 - 198 ।।

बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् इति समासान्ते कृते यः सक्थशब्दः सोऽत्र गृह्यते । क्रशब्दोऽन्तो यस्य स क्रान्तः, ततोऽन्योऽक्रान्त इति । गौरसक्थ इति । गौरशब्दः प्रज्ञाद्यणन्तत्वादन्तोदात्तः । श्लिषेरञ्चोपपधायाः इति श्लक्ष्णशब्दोऽन्तोदात्तः ।

षचश्चित्त्वादिति । एतेन चित्स्वरस्यायमपवादः, प्राप्तविभाषेयमिति दर्शयति ।।

परादिश्छन्दसि बहुलम् ।। 6 - 2 - 199 ।।

परादिरिति । परशब्देनात्र सक्थशब्द एव गृह्यत इति । तस्यैव पूर्वसूत्रे सन्निहितत्वात् । यद्येवम्, परग्रहणमनर्थकम्, प्कृतो हि सक्थशब्दोऽनुवर्तिष्यते नैतदस्तिः बहुव्रीहेरपि प्रकृतिस्यानुवृत्तिः स्यात्, तस्याद्युदात्तत्वं शङ्क्येत, विभाषाग्रहणे प्रकृते बहुलग्रहणस्य प्रयोजनमन्यदपि यथा स्यादिति । ऋजुवाहुरिति । बहुव्रीहिः । वाक्यतिश्चित्पतिरिति । षष्ठीसमासौ । अत्र भाषाविषये पत्यावैश्वर्ये इत्यस्य न भूवाक्चिद्दिधिषु इति प्रतिषेधे समासान्तोदात्तत्वं भवति ।

बहुलग्रहकणसिद्धमर्थं श्लोकेन दर्शयति - परादिश्च परान्तश्चेति । पूर्वपर शब्दाभ्यां पूर्वोत्तरपदयोर्ग्रहणम्। यत एवं परादिप्रभृतिरुदात्तश्छन्दसि दृश्यते, ततो हेतोर्बहुलं स्वरव्यत्यय उक्तः । स्वरव्यत्ययार्थं बहुलग्रहणं कृतमित्यर्थः ।।

इति श्रीहरदत्तमश्रविरचितायां पदमञ्जर्यां षष्ठाध्यायस्य द्वितीयः पादः।

## 6.3

अथ षष्ठाध्याये तृतीयः पादः
पदमञ्जरी

अलगुत्तरपदे ।। 6 - 3 - 1 ।।

अलुगिति चेत्यादि । प्रत्येकं स्वरितत्वप्रतिज्ञानं दशेयति, अस्य पोरयोजनम् - एकस्य निवृत्तावपरस्य निवृत्तिर्मा भूदिति । स्तोकान्मुक्त इति । करणे च

उपसर्गादसमासेऽपि णोपदेशस्य ।। 8.4.14 ।।
ण उपदेशे यस्य स णोपदेशः । प्रनायको देश इति । अत्र गतिक्रियायोगमात्रमेव प्रति प्रस्योपसर्गत्वम्, न नमतिं प्रति ।
असमासेऽपीति किमिति । विशेषानुपादानादेव समासासमासयोर्द्वयोरपि भविष्यतीति प्रश्नः । पूर्वपदाधिकारादिति । सर्वत्रैवात्र प्रकरणे `पूर्वपदात्' इति वर्तते, समासे एव पूर्वपदं भवति, तेन समास एव स्यात् । तदधिकारनिवृत्तिद्योतनार्थमिति । नानेन विस्पष्टार्थमसमासेऽपिग्रहणमिच्युते । तथा हि---यद्यप्यस्वरितत्वात् `पूर्वपदात्' इति निवर्त्तते, तथाप्यसमासेऽपिग्रहणं कर्त्तव्यम्, अन्यथाऽसंज्ञायां समासे न स्यात्; पूर्वपदात्संज्ञायामेवेति नियमादस्य च विधेरसमासे चरितार्थत्वात् । तस्मात्पूर्वपदाधिकारनिवृत्तिद्योतनमुखेन समासासमासयोर्द्वयोरपि यथा स्यादित्यसमासेऽपिग्रहणमित्ययमर्थो द्रष्टव्यः ।
नन्वसिद्धमुपसर्गणत्वम्, तस्यासिद्धत्वान्नियमो न भविष्यति, तेन `पूर्वपदात्' इत्यस्मिन्निवृत्ते न कर्त्तव्यमसमासेऽपिग्रहणम् ? एवं तर्ह्येतज्ज्ञापयति---न योगे योगोऽसिद्धः, अपि तु प्रकरणे प्रकरणमसिद्धमिति । यदा तु `पूर्वपदात्संज्ञायाम्' इति सूत्रं नियमार्थमिति पक्षः, तदैतदुच्यते । यदा तु विध्यर्थ तदा नैतदुपपद्यते ।।
हिनुमीना ।। 8.4.15 ।।
`हि गतौ' स्वादिः, `मीञ् हिंसायाम्' क्रियादिः, दीर्घान्तः ।
हिनुमीनाग्रहणए विकृतस्योपसंख्यानम्, इहापि यथा स्यात्---प्रहिणोति, प्रमिणीतः ? सिद्धं वा स्थानिवत्त्वात्; ईत्वगुणयोः स्थानिवद्भावे सति उपात्तमेव रूपमिति णत्वं भविष्यति । ननु `पूर्वत्रासिद्धे न स्थानिवत्' ? दोष एवायमस्याः परिभाषायाः `तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इति ।
आनि लोट् ।। 8.4.16 ।।
प्रवपाणीति । वपेर्लोट्, `मेर्निः' । `आडुत्तमस्य पिच्च', प्रयाणीति याते रूपम् । प्रवपानीति । प्रकृष्टा वपा येषु तानि प्रवपानि । आनिलोड्ग्रहणमनर्थकम्; अर्थवद्ग्रहणात्, अर्थवत आनिशब्दस्य ग्रहणम्, न चैषोऽर्थवान् । अनुपसर्गाद्वा, यत् क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञे भवतः, न चैतमानिशब्द प्रति क्रियायोगः, तदन्तं तु प्रति भवति । कथं नैवं विज्ञायते---यस्य क्रिया यत्क्रिया, यत्क्रियायुक्ता इति ? कथं तर्हि या क्रिया यत्क्रिया यत्क्रियायुक्ता इति, प्रयोगविषया च क्रिया न क्वचिदसंसृष्टास्तीति समुदायस्याश्रीयत इति आनिशब्दान्तं समुदायं प्रति क्रियायोगः । तत्रायं च सूत्रार्थः---उपसर्गात् परस्यावयवो य आनिशब्दस्तन्नकारस्य णत्वमिति । तदेवं प्रत्याख्यातं लोड्ग्रहणम् ।।
नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ।। 8.4.17 ।।
`गामादाग्रहणेष्वविशेषः' इति वचनात् `मीनातिमिनोतिदीङाम्' इत्यात्वे कृते यन्मारूपम्, यच्च `मा माने' इति, तेषामपि ग्रहणप्रसङ्गः ? इत्या शङ्क्याह---माङ्मेङोर्ग्रहणमिष्यत इति । इष्टिरेवेयम् । प्रणिष्यतीति । `ओतः श्यनि', `उपसर्गात्सुनोति' इत्यादिना षत्वम् । हन्तिप्रभृतयः प्सातिपर्यन्ता अदादयः, `मा माने च' । प्रणिशाम्यतीति । `शमामष्टानां दीर्घः श्यनि' ।
स्यत्यादिषु तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः ।
अड्व्यवायेऽपीति । अन्यथाङ्गस्याड्उच्यते, विकरणान्तं चाङ्गम्, सोऽसौ सङ्घातभक्तोऽशक्यो गदादिग्रहणेन ग्रहीतुमिति न स्यात् । आङा चेति वक्तव्यम्---प्रण्यागददिति । तत्तर्हि वक्तव्यम् ? न वक्तव्यम्, `अटकुप्वाङ्नुम्व्यवाये' इति वर्त्तते, तेन नेर्गदादीनां चाड्व्यवाये च भविष्यति । प्रन्युपगदतीत्यादौ तु `पदव्यवायेऽपि' इति प्रतिषेधादप्रेसङ्गः ।।
शेषे विभाषाऽकखादावषान्त उपदेशे ।। 8.4.18 ।।
`अकखादावषान्ते' इति चोपसर्गसन्निधापितस्य धातोर्विशेषणमित्याह---अकखादिरषान्त उपदेशे यो धातुरिति ।
आदिग्रहणं शक्यमकर्तुम्, `अकखे इति वक्तव्यम्, `यस्मिन्विधिस्तदादावल्ग्रहणे' । अन्तग्रहणं तु कर्त्तव्यम्, असति हि तस्मिन्न ज्ञायते---केन तदादिविधिः, केन वा तदन्तविधिरिति ।
शेषग्रहणं किम् ? गदादिषु मा भूत् । यदि तेष्वपि स्यात्, पूर्वयोगो निर्विषयः स्यात्;तस्माच्छेष इति शक्यमवक्तुम् ।
प्रनिपेक्ष्यतीति । `षढो कः सि' इति कत्वे कृते सम्प्रत्यषान्तो भवति । प्रनिचकारेति । `कुहोश्चुः' इत्यभ्यासस्य चुत्वे कृते सम्प्रत्ययं न ककारादिर्भवति । प्रणिवेष्टेति । `व्रश्च' इत्यादिषत्वे कृते सम्प्रति षान्तो भवति, उपदेशे त्वषान्तत्वाण्णत्वं भवति ।।
अनितेः ।। 8.4.19 ।।
प्राणितीति । `श्वस प्राणने', `अन च', रुदादिभ्यस्सार्वधातुके' इतीट् ।।
अन्तः ।। 8.4.20 ।।
अनितेरन्तस्येति । अनितेः सम्बन्धिनः पदान्तस्य नकारस्येत्यर्थः । हे प्राणिति । क्विबन्तात्सम्बुद्धिः, `न ङिसम्बुद्ध्योः' इति नलोपप्रतिषेधः । अन्यत्र तु पदान्तस्य नकारस्य लोपेन भवितव्यमिति सम्बुद्ध्यन्तमुदाहृतम् । अन्तश्च पदापेक्षो गृह्यत इति । नानित्यपेक्षः; व्यभिचाराभावात् ।
केचित्त्वित्यादि । `अनितेरन्तः' इत्येकमेव योगं पठन्ति, समीपवचनं चान्तशब्दमाश्रयन्तीत्यर्थः । किमर्थम् ? इत्याह---निमित्तसमीपस्येति । ननु च नास्त्येव स विषयो यत्र निमित्तस्य समीपभूतोऽनितेर्नकारः, प्राणितीत्यादावेकादेशे कृते आकारेण व्यवायः, निरणितीत्यत्राकारेण, तत्कथं निमित्तसमीपस्थस्येत्युच्यते ?
अत आह---एकवर्णव्यवहितस्येति । सामर्थ्यादेकवर्णन व्यवधानमाश्रतमित्यर्थः । न च प्राणितीत्यत्रैकादेशस्य पूर्वस्माद्विधौ स्थानिवद्भावाद् वर्णद्वयव्यवायः

शङ्कनीयः; पूर्वत्रासिद्धे स्थानिवत्त्वनिषेधात् । ननु चोक्तम्---`तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इति ? एवं तर्ह्यनित्यः पूर्वस्माद्विधौ स्थानिवद्भावः; `निष्ठायां सेटि' इति सेड्ग्रहणात्, एतच्च स्थानिवत्प्रकरण एव व्याख्यातम् । तैरित्यादि । एकं ह्यन्तग्रहणम्, तच्च सामीप्यार्थं पर्यनितीत्यत्र णत्वव्यावृत्त्या चरितार्थम्, ततश्च हे प्राणित्यत्र पदान्तस्येति प्रतिषेधः प्राप्नोति; तस्मात्तैर्द्वितीयमप्यन्तग्रहणमावृत्त्या तन्त्रेण वाऽऽश्रयितव्यम् ।
ननु च येऽपि योगविभागं कुर्वन्ति, अवयववचनं चान्तशब्दमाश्रयन्ति, तेरपि पूर्वसूत्रे सामीप्यवाच्यन्तशब्दः पठितव्य एव; अन्यथा पर्यनितीत्यत्रापि स्यात् ? अत आह---येषां त्विति । ते नैकवर्णव्यहितस्यापि णत्वमिच्छन्त्येव, तस्मान्नार्थस्तेषां पूर्वसूत्रेऽन्तग्रहणेनेत्यर्थः ।।
उभौ साभ्यासस्य ।। 8.4.21 ।।
प्राणिणिषतीति । सनि `अजादेर्द्वितीयस्य' इति निशब्दस्य द्विवर्चनम् । प्राणिणदिति । ण्यन्ताल्लुङ्, च्लेश्चङ्, णिंलोपः, `द्विर्वचनेऽचि' इति स्थानिवद्भावान्निशब्दस्य द्विर्वचनम् ।
पूर्वत्रासिद्धीयमित्यादि । `पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्मिन्नसति प्रानिसतीतिस्थिते द्विर्वचनं च प्राप्नोति, णत्वं च, तत्र णत्वस्यासिद्धत्वात्पूर्व द्विर्वचने कृतेऽभ्यासणकारेण व्यवायाद्धातुनकारस्य णत्वं न स्यात् । अस्मिंस्तु सति परत्वाण्णत्वे कृते कृतणत्वस्यैव द्विर्वचने अन्तरेणाप्येतद्वचनं प्राणिणिषतीत्यादि सिद्धं भवति । यद्येवम्, किमर्थमिदमारभ्यते ? इत्याह---एतत्त्विति । शक्यार्थे कृत्याः, इतिकरणो हेतौ । तुशब्दोऽवधारणे । यस्मादेतदपवादवचनमेतदर्थं नैव शक्यमाश्रयितुम्, तस्मादेतदारभ्यते । अयमभिप्रायः---अस्य वचनस्यानित्यत्वज्ञापनार्थमिदमारभ्यत इति । तेन---`औजढदित्यत्र ढत्वादीनामसिद्धत्वात् हत् इत्येतद् द्विरुच्यते'---इत्युपपन्नं भवति ।
अथ `उभौ' इति किमर्थम्, यावताभ्यासनकारस्य पूर्वेणैव णत्वं सिध्यति, आरम्भसामर्थ्याद्धातुनकारस्य व्यवायेऽप्यनेन भविष्यति ? सत्यम्; व्यवहितस्य सिध्यति, अनन्तरस्य तु तक्रकौडिन्यन्यायान्न स्यादिति `उभौ' इत्युच्यते ।।
हन्तेरत्पूर्वस्य ।। 8.4.22 ।।
हन्तेरित्यवयवषष्ठी, अत्पूर्वो यस्मादिति बहुव्रीहिः, नकारोऽन्यपदार्थः । यद्यपि नकारविशेषणानि प्रथमया निद्दिश्यन्ते---अन्तः, उभाविति, तथापीह षष्ठ्या निर्द्देशः कृतः । इदं हि न्याय्यं व्यतिक्रमोऽल्पः । प्रहण्यत इति । भावे, कर्मणि वा लट् । प्रघ्नन्तीति । `गमहन' इत्युपधालोपः, `हो हन्तेः' इति कुत्वम् । अत्र `कुव्यवाये' इति प्रसङ्गः । प्राघानीति । `चिण् भावकर्मणोः' इति चिण् ।
श्तिपा निर्देशो धातुनिर्देशार्थ एव, न यङ्लुग्निवृत्त्यर्थः---प्रजङ्घनीति । अत्र हि चुत्वे कृते जकारेण व्यवायादेव न भविष्यति ।।
वमोर्वा ।। 8.4.23 ।।
पूर्वेण नित्ये प्राप्ते विकल्पः ।।
अन्तरदेशे ।। 8.4.24 ।।
`अन्तः शब्दस्याङ्किविधिणत्वेषूपसंख्यानम्' इत्युपसर्गसंज्ञाया भावाद् `हन्तेरत्पूर्वस्य' इति सिद्धे देशप्रतिषेधार्थं वचनम् । अन्तर्हननो देश इति । अधिकरणे ल्युट् ।।
अयनं च ।। 8.4.25 ।।
अन्तरयणमिति । अयेः, इणो वा ल्युटि रूपम् । `कृत्यचः' इति सिद्धे इदमपि देशप्रतिषेधार्थं वचनम् ।।
छन्दस्यृदवग्रहात् ।। 8.4.26 ।।
अवगृह्यते=विच्छिद्य पठ्यते इत्यवग्रहः, ऋच्चासाववग्रहश्च ऋदवग्रहः । ऋकाराद्, अवग्रहात्, पूर्वपदात्---इति तिस्रोऽपि समानाधिकरणाः पञ्चम्यः । तत्र ऋकारमात्रस्य पूर्वपदस्यासम्भवादृकारेण तदन्तविधिः---अवग्रहणभूतो य ऋकारस्तदन्तादिति । संहिताधिकाराच्च संहिताकाल एतेषां णत्वम्; पदकाले चावग्रहः क्रियते, तेनावग्रहयोगयत्वादृकारोऽवग्रह इत्युक्तः, न तु तद्दशापन्नः । तथा चावग्रहं दर्शयता णत्वं न प्रयुक्तम् । अनवगृह्यमाणादिति । अनवग्रहयोग्यादित्यर्थः । अपदादिति । पदे ह्यवग्रहः क्रियते, पदमत्र विच्छिद्यत इति दर्शनाय ।।
नश्च धातुस्थोरुषुभ्यः ।। 8.4.27 ।।
धातौ तिष्ठतीति धातुस्थो रेफः, षकारश्च । ऊरु इति स्वरूपग्रहणम्, षु इति कृतषत्वस्य सुञो ग्रहणम्, न सप्तमीबहुवचनस्य; तेन इन्द्रो धता गृहेषु न इत्यत्र न भवति । नसिति नासिकादेशस्यास्मदादेशस्य च सामान्येन ग्रहणम्, ततोऽत्रास्मदादेश एव कार्यी; तस्यैव धातुस्थादिभ्यः परस्य सम्भवात्, उत्तरसूत्रे तूभयोः कार्यित्वम् । रक्षा ण इति । रक्षेति लोण्मध्यमपुरुषैकवचनान्तम्, `द्व्यचोऽतस्तिङः' इति दीर्घः । शिक्षा ण इति । शिक्षतिर्दानकर्मा छन्दसि । उरुणस्कृधीति । कृञो लोट्, सेर्हिः `श्रुशृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिरादेशः, `कः करत्' इत्यादिना विसर्जनीयस्य रुत्वम् । अभीषु ण इति । `इकः सुञि' इति दीर्घः । एवमूषु ण इत्यत्रापि ।।
उपसर्गाद्बहुलम् ।। 8.4.28 ।।
न सम्प्रति क्रियायोगाभावात् प्राद्युपलक्षणमुपसर्गग्रहणम् । प्रण इत्यस्मदो नसादेशः, प्रणस इति बहुव्रीहिः, `उपसर्गाच्च' इत्यच् समासान्तः, नासिकायाश्च नस्भावः ।
उपसर्गादनोत्पर इति पाठान्तरम्, उपसर्गात्परस्य नसो नकारस्य णत्वं भवति, ओतः परस्य ओकारे वा न भवतीत्यर्थः ।

उभयथाप्यतिव्याप्त्यव्याप्तिसम्भवाद्व्याख्यात एव पाठो वृत्तिकारेणाश्रितः ।।

कृत्यचः ।। 8.4.29 ।।

कृत्स्थो यो नकार अच उत्तर इत्यनेनाच इति नकारस्येदं विशेषणम्, न कृत इति दर्शयति । यदि हि कृत एतद्विशेषणं स्यात्, प्रापणमित्यादौ न स्यात्, `न भाभूपूकमिगमिप्यायिवेपाम्' इत्यत्र च कम्यादीनां प्रतिषेधोऽनर्थकः स्यात् । अनमानेत्यादि । सम्भवोदाहरणदर्शनपरम्, न परिगणनम्; अन्यस्यासम्भवात् । अन इति । योरनादेशः । मान इत्यागतमुक्, शानजादिः । तव्यदादिसूत्रविहितोऽनीयः, `आक्रोशे नञ्यनिः'। `सुप्यजातौ णिनिः', आवश्यके णिनिः । निष्ठादेशः `रदाभ्याम्' इति विहितः । प्रहीण इति । `घुमास्था' इत्यादिना ईत्वम् ।

प्रमग्नः, प्रभुग्न इति । `ओदितश्च' इति निष्ठानत्वम् । निर्विण्णस्येति । अचः परः कृत्स्थो नकारो न भवतीति वचनम् । तत्र परस्य नस्य णत्वम्, पूर्वस्य ष्टुत्वम् ।।

णेर्विभाषा ।। 8.4.30 ।।

ण्यन्ताद्यो विहित इति । एतेन णेरित्यस्य विहितविशेषणत्वं दर्शयति, प्रयोजनं वृत्तावेव वक्ष्यते । अपरः प्रकारः---`अड्व्यवाये' इति वर्तते, तेन ण्यन्तस्य कृतश्चाड्व्यवायेऽपि णत्वस्याभ्यनुज्ञानात् ण्यन्तात्परः कृदित्येवमाश्रीयमाणेऽपि प्रयाप्यमाणित्यादौ यकारव्यवायेऽपि णत्वसिद्धिरिति ।।

हलश्चेजुपधात् ।। 8.4.31 ।।

प्रकोपणमिति । `कुप क्रोधने' । प्रेहणम्, प्रोहणमिति । `ईह चेष्टायाम्', `ऊह वितर्के'। अत्र `कृत्यचः' इति णत्वं नित्यमेव भवति ।

कथं पुनरसत्यादिग्रहणे हलादिरिति लभ्यते ? अत आह---इजुपधस्येति । इजुपधस्य हलन्तत्वाव्यभिचारात् सामर्थ्यादादिविशेषणं हल्ग्रहणमित्यर्थः ।।

इजापेः सनुमः ।। 8.4.32 ।।

हल इति वर्तत इति । प्रयोजनमुत्तरत्र वक्ष्यति । ननु तत्रादिविशेषणं हल्ग्रहणम्, अन्तविशेषणेन चेहार्थः । अत आह---तेनेति ।

इजादेर्हलादित्वासम्भवात्सामर्थ्यम् । प्रङ्खणमिति । `इखि गत्यर्थः', इदित्त्वान्नुम् ।

ननु चात्रानुस्वारे कृते नायं सनुम्को भवति, काममत्र स्थानिवद्भावात् सिद्ध्यति---प्रम्भणमिति, अत्र त्वादित एव नुम् भवतीत्यत्र न सिद्ध्यति, औत्पत्तिको हि तत्र नकारः; प्रेन्वनमित्यत्र च प्राप्नोति, यत्र नुमेवाविकृतः श्रूयते; तस्मादिहापि नुम्ग्रहणमनुस्वारोपलक्षणार्थं व्याख्येयम् । नक्षत्रदर्शनन्या येनेष्टविषये सर्वत्र भविष्यति, अनिष्टे च न भविष्यति, एवं च कृत्वा नियमार्थतोपपद्यते; अन्यथा प्रेन्वनमित्यत्र विध्यर्थता सम्भाव्येत । न च `अट्कुप्वाङ्नुम्व्यवायेऽपि' इत्येतेन सिद्धिः, तत्रापि नुम्ग्रहणस्यानुस्वारोपलक्षणत्वात् । ननु `कृत्यचः' इत्यनेनैव सिद्धे नार्थोऽनेन ? अत आह---सिद्धे सतीति । प्रमङ्गनमिति । मगिरपि गत्यर्थ एव । प्रमङ्कनमिति पाठे मण्डनार्थः ।

ननु च कैमर्थ्यान्नियमो भवति, विधेयं नास्तीति कृत्वा, इह चास्ति विधेयम्, किम् ? ण्यन्ताद्विभाषा प्राप्ता, तत्र नित्यं णत्वं विधेयम् ? अत आह---हलइत्यधिकारादिति । ननु चणिलोपे कृते ण्यन्तोऽपि हलन्तो भवति, ततः किम् ? सत्यपि हलधिकारे विध्यर्थता सम्भवति ? नैतदस्ति; विहितविशेषणस्याश्रयणात् । एतदेव ह्यभिप्रेत्य वृत्तिकारेणोक्तम्---`हलन्ताद्धातोर्यो विहितः' इति ।।

वा निंसनिक्षनिन्दाम् ।। 8.4.33 ।।

`णिसि चुम्बने' `णिक्ष रोपणे', णिदि कुत्सायाम्' णोपदेशत्वादेतेषां नित्ये णत्वे प्राप्ते विकल्पः ।।

न भाभूपूकमिगमिप्यायीवेपाम् ।। 8.4.34 ।।

पूग्रहणेन पूञोग्रहणमेष्टव्यमिति । इष्टिरेवेयम् । ण्यन्तानां चेति । ण्यन्तस्याधात्वन्तरत्वान्न प्राप्नोतीति वचनम्, किञ्च ण्यन्तेष्वस्य प्रवृत्तौ पक्षेऽनुवाददोषप्रसङ्गः; `णेविभाषा' इत्येव पक्षे निवृत्तेः सिद्धत्वात् ।।

षात् पदान्तात् ।। 8.4.35 ।।

निष्पानम्, दुष्पानमिति । `इदुदुपधस्य च' इति विसर्जनीयस्य षत्वम्, अत्र `कृत्यचः' इति प्रसङ्गः । सर्पिष्पानमिति । कर्मणि षष्ठ्याः समासः । यजुष्पानमिति । `कर्तृकरणे कृता बहुलम्' इति समासः । उभयत्रापि `नित्यं समासेऽनुत्तरपदस्थस्य' इति षत्वम्, अत्र `पानं देशे' `वा भावकरणयोः' इति प्राप्तिः ।

पदे अन्त इति । `सप्तमी' इति योगविभागात्समासः । सुसर्पिष्केणेति । शोभनं सर्पिरस्येति बहुव्रीहिः, कप्, `इणः षः' इति षत्वम् । नायं पदे परतः पूर्वमवस्थितस्यान्तो भवति । पदस्य त्वन्तो भवति; `स्वादिषु' इति पदसंज्ञाया विधानात्, ततश्च षष्ठीसमासेऽत्रापि प्राप्नोति । कथं पुनर्ज्ञायते---सप्तमीसमासोऽयमिति ? अन्तग्रहणात्; अन्यथा वर्णग्रहणे सर्वत्र तदन्तविधिरित्येव षकारन्तात् पदादिति लभ्यते ।।

नशेः षान्तस्य ।। 8.4.36 ।।

प्रनष्ट इति । `मश्जिनशोर्झलि' इत्यागतस्य नुमः `अनिदिताम्' इति नलोपः, व्रश्चादिषत्वम् । * नशेरशः * । अशकारान्तस्य नशेरिति वक्तव्यम्, न तु षान्तस्येति, इहापि यथा स्यात्---प्रनङ्क्ष्यतीति, `षढोः कः सि' इति कत्वं भवति । तत्तर्हि तथा वक्तव्यम् ? नेत्याह---अन्तग्रहणमिति । षकारेण नशेर्विशेषणात् `षन्तस्य' इति सिद्धे पुनरन्तग्रहणसामर्थ्याद्यः सम्प्रति षान्तो यश्च भूतपूर्वः, तस्य भवति प्रतिषेधः ।।

पदान्तस्य ।। 8.4.37 ।।

हे करिन्नित्याद्यप्युदाहरणम् ।।

पदव्यवायेऽपि ।। 8.4.38 ।।

माषकुम्भवापेनेति । अत्र केचिदाहुः---यदा माषाणां कुम्भो माषकुम्भः, तस्य वाप इति पक्रिया, तदा `उत्तरपदत्वे चापदादिविधौ' इति प्रत्ययलक्षणप्रतिषेधात् पदत्वाभावान्निषेधाप्रवृत्तेर्भवितव्यमेव णत्वेन, तस्मात् कुम्भस्य वापः कुम्भवापः, माषाणां कुम्भवापो माषकुम्भवाप इति प्रक्रियाश्रयेणोदाहरणमिति । अत्र `कुमति च' इति प्राप्तिः । प्रावनद्धमिति । `उपसर्गादसमासेऽपि' इत्यवशब्दव्यवायेऽपि `अड्व्यवाये' इति प्राप्तिः । प्रगान्नयाम इति । छन्दस्ययं व्यवहितः प्रयोगः । गामिति द्वितीयान्तेन पदेन व्यवायः ।

पदव्यवायेऽतद्धित इति । योऽयं पदव्यवाये प्रतिषेधः, स तद्धिते यत्पदं तत्र न भवतीति वक्तव्यमित्यर्थः । आद्रगोमयेणेति । `गोश्च पुरुषे' इति मयट्, तत्र परतो गोशब्दः `स्वादिषु' इति पदम् ।।

क्षुभ्नादिषु च ।। 8.4.39 ।।

क्षुभ्ना---इति स्वरूपग्रहणम्, न धातुग्रहणम्, तेन क्षोभणमित्यादौ णत्वं भवत्येव । क्षुभ्नीतः, क्षुभ्नन्तीति । अत्र त्वाल्लोपयोः स्थानिवद्भावादेकदेश विकृतस्यानन्यत्वाद्वा णत्वं न भवति । नृन्नमयतीति नृनमः । हरिनन्दीति ताच्छीलिको णिनिः । हरिनन्दनः, गिरिनगरमिति षष्ठीसमासौ । नरीनृत्यत इति । `रीगृदुपधस्य च' । तृप्नोतीति । छन्दसि व्यत्ययेन श्नुः । परिनर्त्तनम्, परिगहनमिति । प्रादिसमासौ । परिनन्दनमिति । गतिसमासः । शरनिवेशादयो दर्भानूपान्ताः षष्ठीसमासाः । आचार्यभोगीनः, आचार्यानीति । अत्रैवास्यप्रतिषेधः; आचार्येण, आचार्याणमित्यादौ तु भवत्येव । क्षुभ्नादिराकृतिगण इति । चकारोऽनुक्तसमुच्चयार्थ एवमेवार्थं सूचयति ।।

स्तोः श्चुना श्चुः ।। 8.4.40 ।।

अत्र सन्निपात इत्यध्याहार्यम् । वृक्षश्शेते इति । `वा शरि' इति पक्षे विसर्जनीयस्य सकारः । मज्जतीति । `झलां जश् झशि' इति सकारस्य दकारे कृते तस्य चुत्वम्---जकारः । असिद्धत्वं तु जश्त्वस्य न भवति; `न मु ने' इत्यत्र नेति योगविभागात् । तथा च भृज्जतीनां ङितीति निर्देश उपपद्यते । इह सकारतवर्गौ कार्यिणौ द्वौ, निमित्ते अपि द्वे एव---शकारचवर्गौ, ततश्च साम्यात्संख्यातानुदेशः प्राप्नोति ? इत्याशङ्क्याह---शादिति प्रतिषेध इति । श्चुनेति तृतीयानिर्देशः पूर्वभूतेनापि योगे यथा स्यात्---यज्ञः, याच्ञेति । सप्तमीनिर्देशे तु `तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परभूतेनैव योगे स्यात् ।।

ष्टुना ष्टुः ।। 8.4.41 ।।

अट्टतीत्यादि । `अत्ट अतिक्रमणहिंसयोः', `अद्ड अभियोगे', तकारदकारोपधयोरेतयोर्गणपाठः क्विबन्तयोः संयोगान्तलोपे कृते तकारदकारयोः श्रवणार्थः, `न न्द्राः संयोगादयः' इति प्रतिषेधोऽप्यड्डतेर्भवति । इहापि तृतीयानिर्देशः पूर्वभूतेनापि योगे ष्टुत्वं यथा स्यात्, यथा---द्रोढेति । अत्रापि `तोः षि' इति प्रतिषेधान्निमित्तिनिमित्तयोः संख्यातानुदेशो न भवति ।

न पदान्ताट्टोरनाम् ।। 8.4.42 ।।

`अनाम्' इति षष्ठीबहुवचनस्यागतनुट्कस्य प्रतिषेधः । श्वलिट्साय इति । धुडभावपक्षे सकारस्य ष्टुत्वं प्राप्नोति । धुट्पक्षे तु चर्त्वस्यासिद्धत्वात्तस्यैव धकारस्येति ।

ईट्टे इति । `ईड् स्तुतौ', अदादिरनुदात्तेत् ।

षडधिका नवतिः षण्णवतिः । षण्णां नगराणां समाहारः षण्णगरी ।।

तोः षि ।। 8.4.43 ।।

`षि' इति सप्तमीर्निर्देशात् पूर्वभूतेनापि सन्निपाते भवत्येवलोष्टा, पेष्टेति ।।

शआत् ।। 8.4.44 ।।

प्रश्नः, विश्न इति । `यजयाच' इत्यादिना नङ्, `च्छ्वोः शूडनुनासिके च' इति छकारस्य शकारः । `सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति तैत्तिरीयके नायं प्रतिषेधो भवति---अयोऽश्ञाति । तत्रापि काठके भवत्येव---ब्रह्मचारिणे प्रश्नान् प्रोच्य प्रजिघाय । स्वाध्यायब्राह्मणे च भवतीति सकलं भद्रमश्नुते ।।

यरोऽनुनासिकेऽनुनासिको वा ।। 8.4.45 ।।

`पदान्तात्' इत्यनुवृत्तं षष्ठ्यन्तं विपरिणम्यते । वाङ्मयमिति । `नित्यं वृद्धशरादिभ्यः' इति मयट् ।।

अचो रहाभ्यां द्वे ।। 8.4.46 ।।

अर्चयतेर्घञ्, कुत्वम्, अर्क्कः । मर्चिः सौत्रो धातुः, तस्मात् `इण्भीकापाशल्यतिमर्चिभ्यः कन्', `चोः कुः' इति कुत्वम्---मर्क्कः । अत्राकारादनन्तरो रेफः, तस्मादपि ककारः । एवमुत्तरेष्वपि द्रष्टव्यम् ।।

अनचि च ।। 8.4.47 ।।

अनच्परस्येति । अचोऽन्योऽनच्, स परो यस्मात्सोऽनच्परः । अनेन पर्युदासो दशितः, किं प्रयोजनम् ? न किञ्चित्, प्रत्युत दोष एव, अवसाने न सिध्यति---वाक्क, अच्सदृशस्य वर्णान्तरस्याभावात्, प्रतिपत्तिगौरवप्रसङ्गात्पर्युदास आश्रितः । पक्षान्तरे हि विशेषप्रतिषेधात् सामान्येन विधिरनुमेयः स्यादिति गौरवम् ।

उल्क्का, वल्म्मीक इति । लकारो यण्, ककारमकारौ यमौ ।
स्त्थालीति सकारः शर, थकारः खय् । वत्स्सादिषु तकारककारपकाराः खयः, सकारषकारौ शरौ ।
अवसाने इति । पर्युदासाश्रयणादिदमारब्धम् । प्रसज्यप्रतिषेधे तु परस्य निमित्तस्यानाश्रयणाद् `वा' इत्यधिकारात्सिद्धम् ।।
नादिन्याक्रोशे पुत्त्रस्य ।। 8.4.48 ।।
पुत्रादिनीति । ताच्छील्ये णिनिः ।
तत्परे चेति । स आदिनीशब्दो यस्मात्परस्तत्रापि परतः पुत्त्रशब्दस्य द्विर्वचनं न भवति---पुत्राश्च पौत्राश्च पुत्रपौत्राः, तानत्तुं शीलमस्याः पुत्रपौत्रादिनी ।
अन्ये तु `तत्परे पुत्रशब्दे' इति व्याचक्षाणाः पुत्रपुत्रादिनीत्युदाहरन्ति, तत्र पुत्रस्य पुत्रमत्तीति विग्रहः ।
वा हतजग्धपर इति । हतजग्धं च तत्परं चेति विशेषणसमासः, राजदन्तादित्वात् परशब्दस्य परनिपातः । पुत्रहतीति । पुत्रो हतोऽनयेति बहुव्रीहिः, `अस्वाङ्गपूर्वपदाद्वा' इति ङीष् ।
खयो द्वितीया इति । `खयः' इति षष्ठी । द्वितीया इति । वर्गेषु खकारादयः ।।
शरोऽचि ।। 8.4.49 ।।
आदर्श इति । दृशेरधिकरणे घञ् । दर्श इति । अत्राप्यधिकरणे घञ् । विपरीतलक्षणा चेयम्---न दृश्यतेऽस्मिंश्चन्द्रमा इति दर्श इति ।।
त्रिप्रभृतिषु शाकटायनस्य ।। 8.4.50 ।।
इन्द्र इत्यादौ नकारदकारयोर्द्विर्वचनाभावः । भ्राष्ट्रमिति । `दीर्घादाचार्याणाम्' इत्यस्यासिद्धत्वात् । त्रिप्रभृतिष्वयमेव प्रतिषेधो भवतीति मन्यते ।।
सर्वत्र शाकल्यस्य ।। 8.4.51 ।।
अत्रिप्रभृत्यर्थोऽयमारम्भः ।।
दीर्घादाचार्याणाम् ।। 8.4.52 ।।
दात्रमित्यादौ `अनचि च' इति प्राप्तिः ।।
झलां जश् झशि ।। 8.4.53 ।।
उदाहरणेषु भ-घ-धानां ब-ग-दाः ।।
अभ्यासे चर्च ।। 8.4.54 ।।
चिखनिषतीति । खनेः सन्, द्विर्वचनम्, `कुहोश्चुः' इति चुत्वम्---छकारः, तस्य चर्त्वम्---चकारः । टिठकारयिषतीति । ठकारमाचष्ट इति णिच्, टिलोपः, सन्, ठकारस्य टकारः । तिष्ठासतीति । `शर्पूर्वाः खयः' इति थकारस्य शेषः, तस्य चर्त्वं तकारः ।
प्रकृतिश्चां प्रकृतिचर इति । जश्त्वबाधनार्थं पर्जन्यवल्लक्षणप्रवृत्त्या प्रकृतिरूपाश्चरः स्थानिनाऽभिन्नरूपा भवन्तीत्यर्थः । एतच्चान्तरतमपरिभाषया लभ्यते ।
प्रकृतिजशां प्रकृतिजश इति । व्याख्यातम् । डिड्य इति । डीङो लिटि द्विर्वचने `एरनेकाचः' इति यण् ।।
खरि च ।। 8.4.55 ।।
युयुत्सत इति । युधेः सन्, धकारस्य तकारः । आरिप्सते, आलिप्सत इति । रभिलभ्योः `सनि मीमाघु' इत्यादिना अच इस्, `स्कोः संयोगाद्योः' इति सलोपः, भकारस्य पकारः ।।
वावसाने ।। 8.4.56 ।।
`झलां जशोऽन्ते' इति नित्ये जश्त्वे प्राप्ते चर्त्वं विधीयते, वावचनात् पक्षे सोऽपि भवति ।।
अणोऽप्रगृह्यस्यानुनासिकः ।। 8.4.57 ।।
`अणः' इति पूर्वेण णकारेण प्रत्याहरः । अग्नी, वायू इति । `ईदूदेत्' इति प्रगृह्यसंज्ञा ।।
अनुस्वारस्य ययि परसवर्णः ।। 8.4.58 ।।
शङ्कितेत्यादि । `शकि सङ्कायाम्', `उछि उञ्छे', `कुडि दाहे', `टुनदि समृद्धौ', `कपि चलने', इदत्त्वान्नुम्, `नश्चापदान्तस्य झलि' इत्यनुस्वारः, तस्य ककारादिषु परतो यथासंख्यं परसवर्णा वर्गपञ्चमाङकारादयः ।
कुर्वन्ति, कृषन्तीत्यत्र झेरन्तादेशे नकारस्य णत्वं प्राप्नोति, तत्कस्मान्न भवति ? इत्याह---इहेति । णत्वमनुस्वारात्पूर्वं न भवति, यस्माण्णत्वस्यासिद्धत्वात् पूर्वमनुस्वार एव क्रियते, पश्चादपि न भवति, अनुस्वारस्थानिकस्यास्य परसवर्णस्य णत्वे कर्त्तव्ये असिद्धत्वात् । परसवर्णेनेति । परसवर्णार्थेन शास्त्रेणेत्यर्थः । एवमित्यादि । अनुस्वारीभूतो णत्वमतिक्रामतीति भाष्ये यदुक्तं तदेवमुक्तप्रकारेणेत्यर्थः ।।
वा पदान्तस्य ।। 8.4.59 ।।
तङ्क्थमित्यादि । ककारादिषु परतो ङकारादयः क्रमेण भवन्ति ।।
तोर्लि ।। 8.4.60 ।।
अत्र तकारस्य शुद्धो लकारः, नकारस्यानुनासिकः ।।

उदः स्थास्तम्भोः पूर्वस्य ।। 8.4.61 ।।
परसवर्ण इति समस्तमपि सवर्णग्रहणमिह निष्कृष्य सम्बद्ध्यते । उत्थातेति । सकारस्य पूर्वसवर्णस्तकारः । अन्ये तु बाह्यप्रयत्नसाम्यात् थकारमिच्छन्ति । तत्र तखाराद्वयस्य श्रवणम् । न च पूर्वस्य चर्त्त्वम्; तत्र कर्त्तव्येऽस्य पूर्वसवर्णस्यासिद्वत्वात् ।
रोगे चेति वक्तव्यमिति । इदमविशेषेण छन्दसि, भाषायां च ।।
झयो होऽन्यतरस्याम् ।। 8.4.62 ।।
उदाहरणेषु हकारस्य महाप्राणस्य सोष्मणो घोषवतस्तादृश एवं घकारादयश्चतुर्था भवन्ति ।।
शश्छोऽटि ।। 8.4.63 ।।
शश्छोऽमीतीति । अटीत्यपनीयामीति वक्तव्यमित्यर्थः । तच्छ्लोकेन, तच्छ्मश्रुणेति अत्र लकारमकारपरस्यापि शकारस्य भवति ।।
हलो यमां याम लोपः ।। 8.4.64 ।।
द्वौ यकाराविति । एकः `संज्ञायां समज' इत्यादिना विहितस्य क्यपः सम्बन्धी, द्वितीयः `अयङ्यि क्ङिति' इत्ययङादेशस्य । क्रमजस्तृतीय इति । क्रमः=आनुपूर्वी, ततो जातः क्रमजः, स च पुनः `अनचि च' इति द्विर्वचनेन सम्पादितः । तकारात्पर एको यकार इति । `दित्यदित्यादित्य' इत्यादिना विहितस्य ण्यस्य सम्बन्धी । द्वौ यकाराविति । एकोऽदितिशब्दात्परस्य ण्यस्य सम्बन्धी, द्वितीय आदित्यशब्दात् ।
अन्नमिति । भवत्यं नकारो यम्, यम्परश्च, न तु हलः परः । अर्ध्यमिति । `पादार्घाभ्यां च' इति तादर्थ्ये यत्, भवत्ययं घकारोरेफाद्धलः परोयम्परश्च, न तु यम् । शाङ्र्गमिति । श्रृङ्गस्य विकार इत्यण्, ऋकारस्य रपरा वृद्धिः, अत्र ङकारो यम् भवति हलख्च परः, न तु यम्परः । ननु च बहिरङ्गा वृद्धिः, ततः किम् ? हलः परो न भवति ? लोपोऽपि बहिरङ्गः; अनेकनिमित्तापेक्षत्वात् ।
झरो झरि सवर्णे ।। 8.4.65 ।।
त्रयस्तकारा इति । `अच उपसर्गात्तः' इत्याकारस्य तकारः, तकारस्यापि चर्त्वं तकारः; एकः प्रत्ययसम्बन्धी, `अनचि च' इति द्विर्वचने क्रमजश्चतुर्थः । चत्वारस्तकारा इति । पूर्वोक्तास्त्रयः, चतुर्थो रुच्छब्दसम्बन्धी, पञ्चमो द्विर्वचनेन सम्पादितः । मरुच्छब्दस्योपसंख्यानसामर्थ्यादिति । एतच्च `मरुच्छब्दस्योपसंख्यानम्' इत्यत्रैव प्रतिपादितम् ।
शार्ङ्गिन्निति । भवत्ययं ङकारो हलः परः झरि सवर्णे परतः, न त्वयं झरिति न लुप्यते । प्रिययञ्च्ञेति । प्रियाः पञ्चास्येति बहुव्रीहिः, `वा प्रियस्य' इति प्रियशब्दपूर्वनिपातस्तृतीयैकवचनम्, अल्लोपः, नकारस्य श्चुत्वम्---ञकारः । भवत्ययं चकारो हलः परः स्वयं च झर् सवर्णे च परतः, न तु ञकारो झरिति न लुप्यते । ननु चाल्लोपस्य स्थानिवत्त्वादनन्तरो न भवति सवर्णः, तत्किमेतन्निवृत्त्यर्थेन `झरि' इत्यनेन ? इत्यत आह---अल्लोपस्येति ।
तर्प्तेति । `तृप प्रीणने', पकारस्य तकारः स्थानेभेदात्सवर्णो न भवति । ननु च निमित्तानां कायिणां च संख्यासामान्यादिह संख्यातानुदेशे सति नैव तप्तेत्यत्र लोपः प्राप्नोति, तत्किमेतन्निवृत्त्यर्थेन सवर्णग्रहणेन ? अत आह---सवर्णग्रहणसामर्थ्यादिति । न हि यथासंख्येऽसवर्णे झरस्ति, यद्व्यावृत्त्यर्थं सवर्णग्रहणं स्यात् । शिण्ढि, पिण्ढीति । `शिष्लृ विशेषणे', `पिष्लृ सञ्चूर्णने'---रुधादी, लोट्, सेर्हिः, `श्नसोरल्लोपः', हेर्धिः, `झलां जश् झशि' इति षकारस्य डकारः, `नश्चापदान्तस्य झलि' इत्यनुस्वारः, तस्य परसवर्णो णकारः, धकारस्य ष्टुत्वम्---ढकारः, अनेन डकारस्य ढकारे लोपः ।।
उदात्तादनुदात्तस्य स्वरितः ।। 8.4.66 ।।
गार्ग्यः, वात्स्य इति । `गर्गादिभ्यो यञ्', ञित्त्वादाद्युदात्तत्वम्, शेषनिघातः, तस्य स्वरितः । पचति, पठतीति । शप्तिपावनुदात्तौ, धातुस्वरः, शबकारस्य स्वरितत्वम् ।
`तित्स्वरितम्' इत्यस्यानन्तरमिदं वक्तव्यम्, एवं हि स्वरितग्रहणं न कर्त्तव्यं भवति ? अत आह---अस्येति । यदि तत्र क्रियेत, `अनुदात्तं पदमेकवर्जम्' इत्येतत्प्रवर्तेत । इह तु करणे न प्रवर्त्ततेः स्वरितस्यासिद्धत्वात् । तेन द्वयोरप्युदात्तस्वरितयोः श्रवणं भवति ।।
नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् ।। 8.4.67 ।।
उदात्तस्वरितावुदयौ यस्मादिति बहुव्रीहिः । उदयशब्दः प्रत्येकमभिसम्बध्यते, यदाह---उदात्तोदयस्येति । उदयशब्दः परशब्देन समानार्थः प्रातिशाख्येषु प्रसिद्धः । तत्रशब्दो लित्स्वरेणाद्युदात्तः, क्वशब्दः `किमोऽत्' इत्यत्प्रत्ययान्तस्तित्स्वरितः ।
उदात्तस्वरितपरस्येति वक्तव्य इति । एतदप्युपलक्षणम्, उदात्तस्वरितयोरित्येव वक्तव्यमिति, इत एव परशब्दार्थलाभात् । मङ्गलार्थमिति । उदयशब्दोच्चारणमेव मङ्गलम् । णङ्गलादीनि हि शास्त्राणि प्रथन्ते, मङ्गलमध्यानि मङ्गलान्तामि च वीरपुरुषाणि च भवन्ति आयुष्मत्पुरुषाणि च । इह चादौ वृद्धिशब्दः, मध्ये शिवशब्दः---`शिवशमरिष्टस्य करे' इति, अन्ते चायमुदयशब्दः ।।
अ अ ।। 8.4.68 ।।
एकोऽत्र विवृतः, परः संवृतः, द्वावप्यविभक्तिकौ, यो विवृतस्स स्थानी, यः संवृतः स आदेशः ।
किमर्थमकारस्याकारो विधीयते ? इत्याह---इहेति । कार्यार्थमिति । तत्पुनः कार्यमकारस्य दीर्घप्लुताभ्यां सवर्णसंज्ञा, अन्यथा प्रयत्नभेदान्न स्यात्, ततश्च ह्रस्वोऽकारो गृह्यमाणो दीर्घप्लुतौ न गृह्णीयात् । तत्र चदोषः---`अकः सवर्णे दीर्घः', इहैव स्याद्---ऐन्द्राग्नमिति, इह न स्यात्---दण्डाढकमिति । तस्मादेवमादिकार्यार्थमकार इह शास्त्रे विवृतः प्रतिज्ञायते, तत्र यदीयं प्रत्यापत्तिर्न क्रियेत, तदा तस्य तथाभूतस्यैव प्रयोगः स्यात्, स मा भूदिति

प्रत्यापत्तिरिह क्रियते ।
इह स्थान्यकारो विवृतोऽण्त्वात् सवर्णानां ग्राहक इति दीर्घप्लुतयोरपि स्थाने संवृतोऽकारः प्राप्नोति, आदेशस्त्वकारः संवृतोऽण् न भवतीति सवर्णानां ग्राहको न प्राप्नोति, भाव्यमानत्वात्; ततश्च यद्गुणः संवृत उच्चारितः, तद्गुण एवाष्टादशभेदभिन्नस्यापि अवर्णस्य प्राप्नोति ? इत्याशङ्क्याह---
दीर्घप्लुतयोश्चेति । इष्टिरेवेयम् । यद्वा---तपरनिर्देशात्सिद्धम्, `अद' इति सूत्रं कर्तव्यम्, तत्र तः परो यस्मादिति पूर्वोऽकारस्तपरः, तात्परस्तपर इति द्वितीयः, ततश्च स्थान्यकारो दीर्घप्लुतौ न ग्रहीष्यति, आदेशस्त्वनणपि गुणान्तरयुक्ताँस्तत्कालान् ग्रहीष्यति । एकशेषनिर्देशो वायं द्रष्टव्यः । अत्र षड् मात्रिका अकाराः स्थानिनो निर्दिश्यन्ते, आदेशा अपि षडेव, तत उभयत्रैकशेषः, तत्र षण्णां स्थानिनां निर्देशसामर्थ्यात् स्थानिभिर्दीर्घप्लुतौ भिन्नकालौ न गृह्येते । ततः षण्णां स्थानिनां स्थाने षडादेशाः संवृता यथासंख्यं भवन्तीति सर्वेष्टसिद्धिरिति शम् ।।
इति श्रीभट्टहरदत्तमिश्रविरचितायां पदमञ्जर्यामष्टमस्याध्यायस्य चतुर्थः पादः

## Sutrapatha

०००१ १,१,००१ वृद्धिरादैच्

०००२ १,१,००२ अदेङ् गुणः

०००३ १,१,००३ इको गुणवृद्धी

०००४ १,१,००४ न धातुलोप आर्धधातुके

०००५ १,१,००५ क्क्ङिति च

०००६ १,१,००६ दीधीवेवीटाम्

०००७ १,१,००७ हलोनन्तराः संयोगः

०००८ १,१,००८ मुखनासिकावचनोनुनासिकः

०००९ १,१,००९ तुल्यास्यप्रयत्नम् सवर्णम्

००१० १,१,०१० नाज्झलौ

००११ १,१,०११ ईदूदेद्द्विवचनम् प्रगृह्यम्

००१२ १,१,०१२ अदसो मात्

००१३ १,१,०१३ शे

००१४ १,१,०१४ निपात एकाजनाङ्

००१५ १,१,०१५ ओत्

००१६ १,१,०१६ संबुद्धौ शाकल्यस्येतावनार्षे

००१७ १,१,०१७ उञः

००१८ १,१,०१८ ऊँ

००१९ १,१,०१९ ईदूतौ च सप्तम्यर्थे

००२० १,१,०२० दाधाघ्वदाप्

००२१ १,१,०२१ आद्यन्तवदेकस्मिन्

००२२ १,१,०२२ तरप्तमतौ घः

००२३ १,१,०२३ बहुगणवतुडति संख्या

००२४ १,१,०२४ ष्णान्ता षट्

००२५ १,१,०२५ डति च

००२६ १,१,०२६ क्तक्तवतू निष्ठा

००२७ १,१,०२७ सर्वादीनि सर्वनामानि

००२८ १,१,०२८ विभाषा दिक्समासे बहुव्रीहौ

००२९ १,१,०२९ न बहुव्रीहौ

००३० १,१,०३० तृतीया समासे

००३१ १,१,०३१ द्वन्द्वे च

००३२ १,१,०३२ विभाषा जसि

००३३ १,१,०३३ प्रथमचरमतयाल्पार्धकतिपयनेमाश्च

००३४ १,१,०३४ पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्

००३५ १,१,०३५ स्वमज्ञाति धनाख्यायाम्

००३६ १,१,०३६ अन्तरम् बहिर्योगोपसंव्यानयोः

००३७ १,१,०३७ स्वरादिनिपातमव्ययम्

००३८ १,१,०३८ तद्धितश्चासर्वविभक्तिः

००३९ १,१,०३९ कृन्मेजन्तः

००४० १,१,०४० क्त्वातोसुन्कसुनः

००४१ १,१,०४१ अव्ययीभावश्च

००४२ १,१,०४२ शि सर्वनामस्थानम्

००४३ १,१,०४३ सुडनपुंसकस्य

००४४ १,१,०४४ न वेति विभाषा

००४५ १,१,०४५ इग्यणस्सम्प्रसारणम्

००४६ १,१,०४६ आद्यन्तौ टकितौ

००४७ १,१,०४७ मिदचोन्त्यात्परः

००४८ १,१,०४८ एच इग्घ्रस्वादेशे

००४९ १,१,०४९ षष्ठी स्थानेयोगा

००५० १,१,०५० स्थानेन्तरतमः

००५१ १,१,०५१ उरण्रपरः

००५२ १,१,०५२ अलोन्त्यस्य

००५३ १,१,०५३ ङिच्च

००५४ १,१,०५४ आदेः परस्य

००५५ १,१,०५५ अनेकाल्शित्सर्वस्य

००५६ १,१,०५६ स्थानिवदादेशोनल्विधौ

००५७ १,१,०५७ अचः परस्मिन् पूर्वविधौ

००५८ १,१,०५८ न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु

००५९ १,१,०५९ द्विर्वचनेचि

००६० १,१,०६० अदर्शनम् लोपः

००६१ १,१,०६१ प्रत्ययस्य लुक्श्लुलुपः

००६२ १,१,०६२ प्रत्ययलोपे प्रत्ययलक्षणम्

००६३ १,१,०६३ न लुमताङ्गस्य

००६४ १,१,०६४ अचोन्त्यादि टि

००६५ १,१,०६५ अलोन्त्यात्पूर्व उपधा

००६६ १,१,०६६ तस्मिन्निति निर्दिष्टे पूर्वस्य

००६७ १,१,०६७ तस्मादित्युत्तरस्य

००६८ १,१,०६८ स्वम् रूपम् शब्दस्याशब्दसंज्ञा

००६९ १,१,०६९ अणुदित्सवर्णस्य चाप्रत्ययः

००७० १,१,०७० तपरस्तत्कालस्य

००७१ १,१,०७१ आदिरन्त्येन सहेता

००७२ १,१,०७२ येन विधिस्तदन्तस्य

००७३ १,१,०७३ वृद्धिर्यस्याचामादिस्तद्वृद्धम्

००७४ १,१,०७४ त्यदादीनि च

००७५ १,१,०७५ एङ् प्राचाम् देशे

००७६ १,२,००१ गाङ्कुटादिभ्योञ्णिन्ङित्

००७७ १,२,००२ विज इट्

००७८ १,२,००३ विभाषोर्णोः

००७९ १,२,००४ सार्वधातुकमपित्

००८० १,२,००५ असंयोगाल्लिट्कित्

००८१ १,२,००६ इन्धिभवतिभ्याम् च

००८२ १,२,००७ मृडमृदगुधकुषक्लिशवदवसः क्त्वा

००८३ १,२,००८ रुदविदमुषग्रहिस्वपिप्रच्छः संश्च

००८४ १,२,००९ इको झल्

००८५ १,२,०१० हलन्ताच्च

००८६ १,२,०११ लिङ्सिचावात्मनेपदेषु

००८७ १,२,०१२ उश्च

००८८ १,२,०१३ वा गमः

००८९ १,२,०१४ हनस्सिच्

००९० १,२,०१५ यमो गन्धने

००९१ १,२,०१६ विभाषोपयमने

००९२ १,२,०१७ स्थाघ्वोरिच्च

००९३ १,२,०१८ न क्त्वा सेट्

००९४ १,२,०१९ निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः

००९५ १,२,०२० मृषस्तितिक्षायाम्

००९६ १,२,०२१ उदुपधाद्भावादिकर्मणोरन्यतरस्याम्

००९७ १,२,०२२ पूङः क्त्वा च

००९८ १,२,०२३ नोपधात्थफान्ताद्वा

००९९ १,२,०२४ वञ्चिलुञ्च्यृतश्च

०१०० १,२,०२५ तृषिमृषिकृशेः काश्यपस्य

०१०१ १,२,०२६ रलो व्युपधाद्धलादेस्संश्च

०१०२ १,२,०२७ ऊकालोज्झ्रस्वदीर्घप्लुतः

०१०३ १,२,०२८ अचश्च

०१०४ १,२,०२९ उच्चैरुदात्तः

०१०५ १,२,०३० नीचैरनुदात्तः

०१०६ १,२,०३१ समाहारः स्वरितः

०१०७ १,२,०३२ तस्यादित उदात्तमर्धह्रस्वम्

०१०८ १,२,०३३ एकश्रुति दूरात्संबुद्धौ

०१०९ १,२,०३४ यज्ञकर्मण्यजप-न्यूङ्ख-सामसु

०११० १,२,०३५ उच्चैस्तरां वा वषट्कारः

०१११ १,२,०३६ विभाषा छन्दसि

०११२ १,२,०३७ न सुब्रह्मण्यायाम् स्वरितस्य तूदात्तः

०११३ १,२,०३८ देवब्रह्मणोरनुदात्तः

०११४ १,२,०३९ स्वरितात्संहितायामनुदात्तानाम्

०११५ १,२,०४० उदात्तस्वरितपरस्य सन्नतरः

०११६ १,२,०४१ अपृक्त एकाल्प्रत्ययः

०११७ १,२,०४२ तत्पुरुषः समानाधिकरणः कर्मधारयः

०११८ १,२,०४३ प्रथमा निर्दिष्टं समास उपसर्जनम्

०११९ १,२,०४४ एकविभक्ति चापूर्वनिपाते

०१२० १,२,०४५ अर्थवदधातुरप्रत्ययः प्रातिपदिकम्

०१२१ १,२,०४६ कृत्तद्धित समासाश्च

०१२२ १,२,०४७ ह्रस्वो नपुंसके प्रातिपदिकस्य

०१२३ १,२,०४८ गोस्त्रियोरुपसर्जनस्य

०१२४ १,२,०४९ लुक्तद्धितलुकि

०१२५ १,२,०५० इद्गोण्याः

०१२६ १,२,०५१ लुपि युक्तवद्व्यक्ति वचने

०१२७ १,२,०५२ विशेषणानां चाजातेः

०१२८ १,२,०५३ तदशिष्यं संज्ञा प्रमाणत्वात्

०१२९ १,२,०५४ लुब्योगाप्रख्यानात्

०१३० १,२,०५५ योगप्रमाणे च तदभावेऽदर्शनम् स्यात्

०१३१ १,२,०५६ प्रधानप्रत्ययार्थवचनं अर्थस्यान्यप्रमाणत्वात्

०१३२ १,२,०५७ कालोपसर्जने च तुल्यम्

०१३३ १,२,०५८ जात्याख्यायाम् एकस्मिन् बहुवचनमन्यतरस्याम्

०१३४ १,२,०५९ अस्मदो द्वयोश्च

०१३५ १,२,०६० फल्गुनी प्रोष्ठपदानां च नक्षत्रे

०१३६ १,२,०६१ छन्दसि पुनर्वस्वोरेकवचनम्

०१३७ १,२,०६२ विशाखयोश्च

०१३८ १,२,०६३ तिष्य पुनर्वस्वोर्नक्षत्र द्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्

०१३९ १,२,०६४ सरूपाणामेकशेष एकविभक्तौ

०१४० १,२,०६५ वृद्धो यूना तल्लक्षणश्चेदेव विशेषः

०१४१ १,२,०६६ स्त्री पुंवच्च

०१४२ १,२,०६७ पुमान् स्त्रिया

०१४३ १,२,०६८ भ्रातृपुत्रौ स्वसृदुहितृभ्याम्

०१४४ १,२,०६९ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्

०१४५ १,२,०७० पिता मात्रा

०१४६ १,२,०७१ श्वशुरः श्वश्र्वा

०१४७ १,२,०७२ त्यदादीनि सर्वैर्नित्यम्

०१४८ १,२,०७३ ग्राम्यपशु संघेष्वतरुणेषु स्त्री

०१४९ १,३,००१ भूवादयो धातवः

०१५० १,३,००२ उपदेशेऽजनुनासिक इत्

०१५१ १,३,००३ हलन्त्यम्

०१५२ १,३,००४ न विभक्तौ तुस्माः

०१५३ १,३,००५ आदिर्ञिटुडवः

०१५४ १,३,००६ षः प्रत्ययस्य

०१५५ १,३,००७ चुटू

०१५६ १,३,००८ लशक्वतद्धिते

०१५७ १,३,००९ तस्य लोपः

०१५८ १,३,०१० यथासंख्यमनुदेशः समानाम्

०१५९ १,३,०११ स्वरितेनाधिकारः

०१६० १,३,०१२ अनुदात्तङित आत्मनेपदम्

०१६१ १,३,०१३ भावकर्मणोः

०१६२ १,३,०१४ कर्तरि कर्मव्यतिहारे

०१६३ १,३,०१५ न गतिहिंसार्थेभ्यः

०१६४ १,३,०१६ इतरेतरान्योन्योपपदाच्च

०१६५ १,३,०१७ नेर्विशः

०१६६ १,३,०१८ परिव्यवेभ्यः क्रियः

०१६७ १,३,०१९ विपराभ्यां जेः

०१६८ १,३,०२० आङोदोऽनास्य विहरणे

०१६९ १,३,०२१ क्रीडोऽनुसंपरिभ्यश्च

०१७० १,३,०२२ समवप्रविभ्यः स्थः

०१७१ १,३,०२३ प्रकाशन स्थेयाख्ययोश्च

०१७२ १,३,०२४ उदोऽनूर्ध्व कर्मणि

०१७३ १,३,०२५ उपान्मन्त्रकरणे

०१७४ १,३,०२६ अकर्मकाच्च

०१७५ १,३,०२७ उद्विभ्याम् तपः

०१७६ १,३,०२८ आङो यमहनः

०१७७ १,३,०२९ समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः

०१७८ १,३,०३० निसमुपविभ्यो ह्वः

०१७९ १,३,०३१ स्पर्धायामाङः

०१८० १,३,०३२ गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः

०१८१ १,३,०३३ अधेः प्रसहने

०१८२ १,३,०३४ वेः शब्दकर्मणः

०१८३ १,३,०३५ अकर्मकाच्च

०१८४ १,३,०३६ संमाननोत्संजनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः

०१८५ १,३,०३७ कर्तृस्थे चाशरीरे कर्मणि

०१८६ १,३,०३८ वृत्तिसर्गतायनेषु क्रमः

०१८७ १,३,०३९ उपपराभ्याम्

०१८८ १,३,०४० आङ उद्गमने

०१८९ १,३,०४१ वेः पादविहरणे

०१९० १,३,०४२ प्रोपाभ्याम् समर्थाभ्याम्

०१९१ १,३,०४३ अनुपसर्गाद्वा

०१९२ १,३,०४४ अपह्नवे ज्ञः

०१९३ १,३,०४५ अकर्मकाच्च

०१९४ १,३,०४६ संप्रतिभ्यामनाध्याने

०१९५ १,३,०४७ भासनोपसंभाषाज्ञानयत्नविमत्युपमंत्रणेषु वदः

०१९६ १,३,०४८ व्यक्तवाचाम् समुच्चारणे

०१९७ १,३,०४९ अनोरकर्मकात्

०१९८ १,३,०५० विभाषा विप्रलापे

०१९९ १,३,०५१ अवाद्ग्रः

०२०० १,३,०५२ समः प्रतिज्ञाने

०२०१ १,३,०५३ उदश्चरः सकर्मकात्

०२०२ १,३,०५४ समस्तृतीयायुक्तात्

०२०३ १,३,०५५ दाणश्च साचेच्चतुर्थ्यर्थे

०२०४ १,३,०५६ उपाद्यमः स्वकरणे

०२०५ १,३,०५७ ज्ञाश्रुस्मृदृशाम् सनः

०२०६ १,३,०५८ नानोर्ज्ञः

०२०७ १,३,०५९ प्रत्याङ्भ्याम् श्रुवः

०२०८ १,३,०६० शदेः शितः

०२०९ १,३,०६१ म्रियतेर्लुङ्लिङोश्च

०२१० १,३,०६२ पूर्ववत् सनः

०२११ १,३,०६३ आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य

०२१२ १,३,०६४ प्रोपाभ्याम् युजेरयज्ञपात्रेषु

०२१३ १,३,०६५ समः क्ष्णुवः

०२१४ १,३,०६६ भुजोऽनवने

०२१५ १,३,०६७ णेरणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने

०२१६ १,३,०६८ भीस्म्योर्हेतुभये

०२१७ १,३,०६९ गृधिवञ्च्योः प्रलम्भने

०२१८ १,३,०७० लियः संमानन शालिनीकरणयोश्च

०२१९ १,३,०७१ मिथ्योपपदात्कृञोऽभ्यासे

०२२० १,३,०७२ स्वरितञितः कर्त्रभिप्राये क्रियाफले

०२२१ १,३,०७३ अपाद्वदः

०२२२ १,३,०७४ णिचश्च

०२२३ १,३,०७५ समुदाङ्भ्यः यमोऽग्रन्थे

०२२४ १,३,०७६ अनुपसर्गाज्ज्ञः

०२२५ १,३,०७७ विभाषोपपदेन प्रतीयमाने

०२२६ १,३,०७८ शेषात्कर्तरि परस्मैपदम्

०२२७ १,३,०७९ अनुपराभ्याम् कृञः

०२२८ १,३,०८० अभिप्रत्यतिभ्यः क्षिपः

०२२९ १,३,०८१ प्राद्वहः

०२३० १,३,०८२ परेर्मृषः

०२३१ १,३,०८३ व्याङ्परिभ्यो रमः

०२३२ १,३,०८४ उपाच्च

०२३३ १,३,०८५ विभाषाऽकर्मकात्

०२३४ १,३,०८६ बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः

०२३५ १,३,०८७ निगरण चलनार्थेभ्यः

०२३६ १,३,०८८ अणावकर्मकाच्चित्तवत्कर्तृकात्

०२३७ १,३,०८९ न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः

०२३८ १,३,०९० वा क्यषः

०२३९ १,३,०९१ द्युद्भ्यो लुङि

०२४० १,३,०९२ वृद्भ्यः स्यसनोः

०२४१ १,३,०९३ लुटि च किपः

०२४२ १,४,००१ आकडारादेका संज्ञा

०२४३ १,४,००२ विप्रतिषेधे परं कार्यम्

०२४४ १,४,००३ यू स्त्र्याख्यौ नदी

०२४५ १,४,००४ नेयङुवङ्स्थानावस्त्री

०२४६ १,४,००५ वाऽमि

०२४७ १,४,००६ ङिति ह्रस्वश्च

०२४८ १,४,००७ शेषो घ्यसखि

०२४९ १,४,००८ पतिः समास एव

०२५० १,४,००९ षष्ठीयुक्तश्छन्दसि वा

०२५१ १,४,०१० ह्रस्वं लघु

०२५२ १,४,०११ संयोगे गुरु

०२५३ १,४,०१२ दीर्घं च

०२५४ १,४,०१३ यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्

०२५५ १,४,०१४ सुप्तिङन्तम् पदम्

०२५६ १,४,०१५ नः क्ये

०२५७ १,४,०१६ सिति च

०२५८ १,४,०१७ स्वादिष्वसर्वनामस्थाने

०२५९ १,४,०१८ यचि भम्

०२६० १,४,०१९ तसौ मत्वर्थे

०२६१ १,४,०२० अयस्मयादीनि छन्दसि

०२६२ १,४,०२१ बहुषु बहुवचनम्

०२६३ १,४,०२२ द्व्येकयोर्द्विवचनैकवचने

०२६४ १,४,०२३ कारके

०२६५ १,४,०२४ ध्रुवमपायेऽपादानम्

०२६६ १,४,०२५ भीत्रार्थानाम् भयहेतुः

०२६७ १,४,०२६ पराजेरसोढः

०२६८ १,४,०२७ वारणार्थानाम् ईप्सितः

०२६९ १,४,०२८ अन्तर्धौ येनादर्शनमिच्छति

०२७० १,४,०२९ आख्यातोपयोगे

०२७१ १,४,०३० जनिकर्तुः प्रकृतिः

०२७२ १,४,०३१ भुवः प्रभवः

०२७३ १,४,०३२ कर्मणा यमभिप्रैति स संप्रदानम्

०२७४ १,४,०३३ रुच्यर्थानाम् प्रीयमाणः

०२७५ १,४,०३४ श्लाघह्नुङ्स्थाशपाम् ज्ञीप्स्यमानः

०२७६ १,४,०३५ धारेरुत्तमर्णः

०२७७ १,४,०३६ स्पृहेरीप्सितः

०२७८ १,४,०३७ क्रुधद्रुहेर्ष्याऽसूयार्थानाम् यं प्रति कोपः

०२७९ १,४,०३८ क्रुधद्रुहोरुपसृष्टयोः कर्म

०२८० १,४,०३९ राधीक्ष्योर्यस्य विप्रश्नः

०२८१ १,४,०४० प्रत्याङ्भ्याम् श्रुवः पूर्वस्य कर्ता

०२८२ १,४,०४१ अनुप्रतिगृणश्च

०२८३ १,४,०४२ साधकतमम् करणम्

०२८४ १,४,०४३ दिवः कर्म च

०२८५ १,४,०४४ परिक्रयणे संप्रदानमन्यतरस्याम्

०२८६ १,४,०४५ आधारोऽधिकरणम्

०२८७ १,४,०४६ अधिशीङ्स्थासाम् कर्म

०२८८ १,४,०४७ अभिनिविशश्च

०२८९ १,४,०४८ उपान्वध्याङ्वसः

०२९० १,४,०४९ कर्तुः ईप्सिततमम् कर्म

०२९१ १,४,०५० तथायुक्तं चानीप्सितम्

०२९२ १,४,०५१ अकथितम् च

०२९३ १,४,०५२ गतिबुद्धिप्रत्यवसानार्थ शब्दकर्माकर्मकाणामणि कर्ता स णौ

०२९४ १,४,०५३ हक्रोरन्यतरस्याम्

०२९५ १,४,०५४ स्वतन्त्रः कर्ता

०२९६ १,४,०५५ तत्प्रयोजको हेतुश्च

०२९७ १,४,०५६ प्राग्रीश्वरान्निपाताः

०२९८ १,४,०५७ चादयोऽसत्त्वे

०२९९ १,४,०५८ प्रादयः

०३०० १,४,०५९ उपसर्गाः क्रियायोगे

०३०१ १,४,०६० गतिश्च

०३०२ १,४,०६१ ऊर्यादि च्वि डाचश्च

०३०३ १,४,०६२ अनुकरणञ्चानितिपरम्

०३०४ १,४,०६३ आदरानादरयोः सदसती

०३०५ १,४,०६४ भूषणेऽलम्

०३०६ १,४,०६५ अन्तरपरिग्रहे

०३०७ १,४,०६६ कणेमनसी श्रद्धाप्रतीघाते

०३०८ १,४,०६७ पुरोऽव्ययम्

०३०९ १,४,०६८ अस्तं च

०३१० १,४,०६९ अच्छ गत्यर्थवदेषु

०३११ १,४,०७० अदोऽनुपदेशे

०३१२ १,४,०७१ तिरोऽन्तर्धौ

०३१३ १,४,०७२ विभाषा कृञि

०३१४ १,४,०७३ उपाजेऽन्वाजे

०३१५ १,४,०७४ साक्षात्प्रभृतीनि च

०३१६ १,४,०७५ अनत्याधान उरसिमनसी

०३१७ १,४,०७६ मध्ये पदे निवचने च

०३१८ १,४,०७७ नित्यम् हस्ते पाणावुपयमने

०३१९ १,४,०७८ प्राध्वम् बन्धने

०३२० १,४,०७९ जीविकोपनिषदावौपम्ये

०३२१ १,४,०८० ते प्राग्धातोः

०३२२ १,४,०८१ छन्दसि परेऽपि

०३२३ १,४,०८२ व्यवहिताश्च

०३२४ १,४,०८३ कर्मप्रवचनीयाः

०३२५ १,४,०८४ अनुर्लक्षणे

०३२६ १,४,०८५ तृतीयार्थे

०३२७ १,४,०८६ हीने

०३२८ १,४,०८७ उपोऽधिके च

०३२९ १,४,०८८ अपपरी वर्जने

०३३० १,४,०८९ आङ् मर्यादावचने

०३३१ १,४,०९० लक्षणेत्थम्भूताख्यान भाग वीप्सासु प्रतिपर्यनवः

०३३२ १,४,०९१ अभिरभागे

०३३३ १,४,०९२ प्रतिः प्रतिनिधि प्रतिदानयोः

०३३४ १,४,०९३ अधिपरी अनर्थकौ

०३३५ १,४,०९४ सुः पूजायाम्

०३३६ १,४,०९५ अतिरतिक्रमणे च

०३३७ १,४,०९६ अपिः पदार्थ संभावनान्ववसर्ग गर्हा समुच्चयेषु

०३३८ १,४,०९७ अधिरीश्वरे

०३३९ १,४,०९८ विभाषा कृञि

०३४० १,४,०९९ लः परस्मैपदम्

०३४१ १,४,१०० तङानावात्मनेपदम्

०३४२ १,४,१०१ तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः

०३४३ १,४,१०२ तान्येकवचनद्विवचनबहुवचनान्येकशः

०३४४ १,४,१०३ सुपः

०३४५ १,४,१०४ विभक्तिश्च

०३४६ १,४,१०५ युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः

०३४७ १,४,१०६ प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च

०३४८ १,४,१०७ अस्मद्युत्तमः

०३४९ १,४,१०८ शेषे प्रथमः

०३५० १,४,१०९ परः सन्निकर्षः संहिता

०३५१ १,४,११० विरामोऽवसानम्

०३५२ २,१,००१ समर्थः पदविधिः

०३५३ २,१,००२ सुबामन्त्रिते पराङ्गवत्स्वरे

०३५४ २,१,००३ प्राक्कडारात्समासः

०३५५ २,१,००४ सह सुपा

०३५६ २,१,००५ अव्ययीभावः

०३५७ २,१,००६ अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्त वचनेषु

०३५८ २,१,००७ यथाऽसादृश्ये

०३५९ २,१,००८ यावदवधारणे

०३६० २,१,००९ सुप् प्रतिना मात्रार्थे

०३६१ २,१,०१० अक्षशलाकासंख्याः परिणा

०३६२ २,१,०११ विभाषा

०३६३ २,१,०१२ अपपरिबहिरनवः पञ्चम्या

०३६४ २,१,०१३ आङ् मर्यादाभिविध्योः

०३६५ २,१,०१४ लक्षणेनाभिप्रती आभिमुख्ये

०३६६ २,१,०१५ अनुर्यत्समया

०३६७ २,१,०१६ यस्य चायामः

०३६८ २,१,०१७ तिष्ठद्गुप्रभृतीनि च

०३६९ २,१,०१८ पारे मध्ये षष्ठ्या वा

०३७० २,१,०१९ संख्या वंश्येन

०३७१ २,१,०२० नदीभिश्च

०३७२ २,१,०२१ अन्यपदार्थे च संज्ञायाम्

०३७३ २,१,०२२ तत्पुरुषः

०३७४ २,१,०२३ द्विगुश्च

०३७५ २,१,०२४ द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः

०३७६ २,१,०२५ स्वयं क्तेन

०३७७ २,२,०२६ खट्वा क्षेपे

०३७८ २,१,०२७ सामि

०३७९ २,१,०२८ कालाः

०३८० २,१,०२९ अत्यन्तसंयोगे च

०३८१ २,१,०३० तृतीया तत्कृतार्थेन गुणवचनेन

०३८२ २,१,०३१ पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः

०३८३ २,१,०३२ कर्तृ-करणे कृता बहुलम्

०३८४ २,१,०३३ कृत्यैरधिकार्थवचने

०३८५ २,१,०३४ अन्नेन व्यञ्जनम्

०३८६ २,१,०३५ भक्ष्येण मिश्रीकरणम्

०३८७ २,१,०३६ चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः

०३८८ २,१,०३७ पञ्चमी भयेन

०३८९ २,१,०३८ अपेतापोढमुक्तपतितापत्रस्तैरल्पशः

०३९० २,१,०३९ स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन

०३९१ २,१,०४० सप्तमी शौण्डैः

०३९२ २,१,०४१ सिद्धशुष्कपक्वबन्धैश्च

०३९३ २,१,०४२ ध्वाङ्क्षेण क्षेपे

०३९४ २,१,०४३ कृत्यैर्ऋणे

०३९५ २,१,०४४ संज्ञायाम्

०३९६ २,१,०४५ क्तेनाहोरात्रावयवाः

०३९७ २,१,०४६ तत्र

०३९८ २,१,०४७ क्षेपे

०३९९ २,१,०४८ पात्रेसमितादयश्च

०४०० २,१,०४९ पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन

०४०१ २,१,०५० दिक्संख्ये संज्ञायाम्

०४०२ २,१,०५१ तद्धितार्थोत्तरपदसमाहारे च

०४०३ २,१,०५२ संख्यापूर्वो द्विगुः

०४०४ २,१,०५३ कुत्सितानि कुत्सनैः

०४०५ २,१,०५४ पापाणके कुत्सितैः

०४०६ २,१,०५५ उपमानानि सामान्यवचनैः

०४०७ २,१,०५६ उपमितं व्याघ्रादिभिः सामान्याप्रयोगे

०४०८ २,१,०५७ विशेषणं विशेष्येण बहुलम्

०४०९ २,१,०५८ पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च

०४१० २,१,०५९ श्रेण्यादयः कृतादिभिः

०४११ २,१,०६० क्तेन नञ्विशिष्टेनानञ्

०४१२ २,१,०६१ सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः

०४१३ २,१,०६२ वृन्दारकनागकुञ्जरैः पूज्यमानम्

०४१४ २,१,०६३ कतरकतमौ जातिपरिप्रश्ने

०४१५ २,१,०६४ किं क्षेपे

०४१६ २,१,०६५ पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः

०४१७ २,१,०६६ प्रशंसावचनैश्च

०४१८ २,१,०६७ युवा खलतिपलितवलिनजरतीभिः

०४१९ २,१,०६८ कृत्यतुल्याख्या अजात्या

०४२० २,१,०६९ वर्णो वर्णेन

०४२१ २,१,०७० कुमारः श्रमणादिभिः

०४२२ २,१,०७१ चतुष्पादो गर्भिण्या

०४२३ २,१,०७२ मयूरव्यंसकादयश्च

०४२४ २,२,००१ पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे

०४२५ २,२,००२ अर्धं नपुंसकम्

०४२६ २,२,००३ द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम्

०४२७ २,२,००४ प्राप्तापन्ने च द्वितीयया

०४२८ २,२,००५ कालाः परिमाणिना

०४२९ २,२,००६ नञ्

०४३० २,२,००७ ईषदकृता

०४३१ २,२,००८ षष्ठी

०४३२ २,२,००९ याजकादिभिश्च

०४३३ २,२,०१० न निर्धारणे

०४३४ २,२,०११ पूरणगुणसुहितार्थसदव्ययतव्य समानाधिकरणेन

०४३५ २,२,०१२ क्तेन च पूजायाम्

०४३६ २,२,०१३ अधिकरणवाचिना च

०४३७ २,२,०१४ कर्मणि च

०४३८ २,२,०१५ तृजकाभ्यां कर्तरि

०४३९ २,२,०१६ कर्तरि च

०४४० २,२,०१७ नित्यं क्रीडाजीविकयोः

०४४१ २,२,०१८ कुगतिप्रादयः

०४४२ २,२,०१९ उपपदमतिङ्

०४४३ २,२,०२० अमैवाव्ययेन

०४४४ २,२,०२१ तृतीयाप्रभृतीन्यन्यतरस्याम्

०४४५ २,२,०२२ क्त्वा च

०४४६ २,२,०२३ शेषो बहुव्रीहिः

०४४७ २,२,०२४ अनेकमन्यपदार्थे

०४४८ २,२,०२५ संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये

०४४९ २,२,०२६ दिङ्नामान्यन्तराले

०४५० २,२,०२७ तत्र तेनेदमिति सरूपे

०४५१ २,२,०२८ तेन सहेति तुल्ययोगे

०४५२ २,२,०२९ चार्थे द्वन्द्वः

०४५३ २,२,०३० उपसर्जनं पूर्वम्

०४५४ २,२,०३१ राजदन्तादिषु परम्

०४५५ २,२,०३२ द्वन्द्वे घि

०४५६ २,२,०३३ अजाद्यदन्तम्

०४५७ २,२,०३४ अल्पाच्तरम्

०४५८ २,२,०३५ सप्तमीविशेषणे बहुव्रीहौ

०४५९ २,२,०३६ निष्ठा

०४६० २,२,०३७ वाहिताग्न्यादिषु

०४६१ २,२,०३८ कडाराः कर्मधारये

०४६२ २,३,००१ अनभिहिते

०४६३ २,३,००२ कर्मणि द्वितीया

०४६४ २,३,००३ तृतीया च होश्छन्दसि

०४६५ २,३,००४ अन्तरान्तरेण युक्ते

०४६६ २,३,००५ कालाध्वनोरत्यन्तसंयोगे

०४६७ २,३,००६ अपवर्गे तृतीया

०४६८ २,३,००७ सप्तमीपञ्चम्यौ कारकमध्ये

०४६९ २,३,००८ कर्मप्रवचनीययुक्ते द्वितीया

०४७० २,३,००९ यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी

०४७१ २,३,०१० पञ्चम्यपाङ्परिभिः

०४७२ २,३,०११ प्रतिनिधि-प्रतिदाने च यस्मात्

०४७३ २,३,०१२ गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि

०४७४ २,३,०१३ चतुर्थी संप्रदाने

०४७५ २,३,०१४ क्रियार्थोपपदस्य च कर्मणि स्थानिनः

०४७६ २,३,०१५ तुमर्थाच्च भाववचनात्

०४७७ २,३,०१६ नमः स्वस्ति स्वाहास्वधालंवषड्योगाच्च

०४७८ २,३,०१७ मन्यकर्मण्यनादरे विभाषाऽप्राणिषु

०४७९ २,३,०१८ कर्तृकरणयोस्तृतीया

०४८० २,३,०१९ सहयुक्तेऽप्रधाने

०४८१ २,३,०२० येनाङ्गविकारः

०४८२ २,३,०२१ इत्थंभूतलक्षणे

०४८३ २,३,०२२ संज्ञोऽन्यतरस्यां कर्मणि

०४८४ २,३,०२३ हेतौ

०४८५ २,३,०२४ अकर्तर्यृणे पञ्चमी

०४८६ २,३,०२५ विभाषा गुणेऽस्त्रियाम्

०४८७ २,३,०२६ षष्ठी हेतुप्रयोगे

०४८८ २,३,०२७ सर्वनाम्नस्तृतीया च

०४८९ २,३,०२८ अपादाने पञ्चमी

०४९० २,३,०२९ अन्यारादितरर्तेदिक्छब्दाञ्चूत्तरपदाजाहि-युक्ते

०४९१ २,३,०३० षष्ठ्यतसर्थप्रत्ययेन

०४९२ २,३,०३१ एनपा द्वितीया

०४९३ २,३,०३२ पृथग्विनानानाभिस्तृतीयान्यतरस्याम्

०४९४ २,३,०३३ करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य

०४९५ २,३,०३४ दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्

०४९६ २,३,०३५ दूरान्तिकार्थेभ्यो द्वितीया च

०४९७ २,३,०३६ सप्तम्यधिकरणे च

०४९८ २,३,०३७ यस्य च भावेन भावलक्षणम्

०४९९ २,३,०३८ षष्ठी चानादरे

०५०० २,३,०३९ स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च

०५०१ २,३,०४० आयुक्तकुशलाभ्यां चासेवायाम्

०५०२ २,३,०४१ यतश्च निर्धारणम्

०५०३ २,३,०४२ पञ्चमी विभक्ते

०५०४ २,३,०४३ साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः

०५०५ २,३,०४४ प्रसितोत्सुकाभ्यां तृतीया च

०५०६ २,३,०४५ नक्षत्रे च लुपि

०५०७ २,३,०४६ प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा

०५०८ २,३,०४७ सम्बोधने च

०५०९ २,३,०४८ सामन्त्रितम्

०५१० २,३,०४९ एकवचनं संबुद्धिः

०५११ २,३,०५० षष्ठी शेषे

०५१२ २,३,०५१ ज्ञोऽविदर्थस्य करणे

०५१३ २,३,०५२ अधीगर्थदयेशां कर्मणि

०५१४ २,३,०५३ कृञः प्रतियत्ने

०५१५ २,३,०५४ रुजार्थानां भाववचनानामज्वरेः

०५१६ २,३,०५५ आशिषि नाथः

०५१७ २,३,०५६ जासिनिप्रहणनाटक्राथपिषां हिंसायाम्

०५१८ २,३,०५७ व्यवहृपणोः समर्थयोः

०५१९ २,३,०५८ दिवस्तदर्थस्य

०५२० २,३,०५९ विभाषोपसर्गे

०५२१ २,३,०६० द्वितीया ब्राह्मणे

०५२२ २,३,०६१ प्रेष्यब्रुवोर्हविषोदेवतासंप्रदाने

०५२३ २,३,०६२ चतुर्थ्यर्थे बहुलं छन्दसि

०५२४ २,३,०६३ यजेश्च करणे

०५२५ २,३,०६४ कृत्वोऽर्थप्रयोगे कालेऽधिकरणे

०५२६ २,३,०६५ कर्तृकर्मणोः कृति

०५२७ २,३,०६६ उभयप्राप्तौ कर्मणि

०५२८ २,३,०६७ क्तस्य च वर्तमाने

०५२९ २,३,०६८ अधिकरणवाचिनश्च

०५३० २,३,०६९ न लोकाव्ययनिष्ठाखलर्थतृनाम्

०५३१ २,३,०७० अकेनोर्भविष्यदाधमर्ण्ययोः

०५३२ २,३,०७१ कृत्यानां कर्तरि वा

०५३३ २,३,०७२ तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्

०५३४ २,३,०७३ चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः

०५३५ २,४,००१ द्विगुरेकवचनम्

०५३६ २,४,००२ द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्

०५३७ २,४,००३ अनुवादे चरणानाम्

०५३८ २,४,००४ अध्वर्युक्रतुरनपुंसकम्

०५३९ २,४,००५ अध्ययनतोऽविप्रकृष्टाख्यानाम्

०५४० २,४,००६ जातिरप्राणिनाम्

०५४१ २,४,००७ विशिष्टलिङ्गो नदीदेशोऽग्रामाः

०५४२ २,४,००८ क्षुद्रजन्तवः

०५४३ २,४,००९ येषां च विरोधः शाश्वतिकः

०५४४ २,४,०१० शूद्राणामनिरवसितानाम्

०५४५ २,४,०११ गवाश्वप्रभृतीनि च

०५४६ २,४,०१२ विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्

०५४७ २,४,०१३ विप्रतिषिद्धं चानधिकरणवाचि

०५४८ २,४,०१४ न दधिपयआदीनि

०५४९ २,४,०१५ अधिकरणैतावत्त्वे च

०५५० २,४,०१६ विभाषा समीपे

०५५१ २,४,०१७ स नपुंसकम्

०५५२ २,४,०१८ अव्ययीभावश्च

०५५३ २,४,०१९ तत्पुरुषोऽनञ् कर्मधारयः

०५५४ २,४,०२० संज्ञायां कन्थोशीनरेषु

०५५५ २,४,०२१ उपज्ञोपक्रमं तदाद्याचिख्यासायाम्

०५५६ २,४,०२२ छाया बाहुल्ये

०५५७ २,४,०२३ सभा राजाऽमनुष्यपूर्वा

०५५८ २,४,०२४ अशाला च

०५५९ २,४,०२५ विभाषा सेनासुराच्छायाशालानिशानाम्

०५६० २,४,०२६ परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः

०५६१ २,४,०२७ पूर्ववदश्ववडवौ

०५६२ २,४,०२८ हेमन्तशिशिरावहोरात्रे च च्छन्दसि

०५६३ २,४,०२९ रात्राह्नाहाः पुंसि

०५६४ २,४,०३० अपथं नपुंसकम्

०५६५ २,४,०३१ अर्धर्चाः पुंसि च

०५६६ २,४,०३२ इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ

०५६७ २,४,०३३ एतदस्त्रतसोस्त्रतसौ चानुदात्तौ

०५६८ २,४,०३४ द्वितीयाटौस्स्वेनः

०५६९ २,४,०३५ आर्धधातुके

०५७० २,४,०३६ अदोजग्धिर्ल्यप्ति किति

०५७१ २,४,०३७ लुङ्सनोर्घसि

०५७२ २,४,०३८ घञपोश्च

०५७३ २,४,०३९ बहुलं छन्दसि

०५७४ २,४,०४० लिट्यन्यतरस्याम्

०५७५ २,४,०४१ वेञो वयिः

०५७६ २,४,०४२ हनो वध लिङि

०५७७ २,४,०४३ लुङि च

०५७८ २,४,०४४ आत्मनेपदेष्वन्यतरस्याम्

०५७९ २,४,०४५ इणो गा लुङि

०५८० २,४,०४६ णौ गमिरबोधने

०५८१ २,४,०४७ सनि च

०५८२ २,४,०४८ इङश्च

०५८३ २,४,०४९ गाङ् लिटि

०५८४ २,४,०५० विभाषा लुङ्लृङोः

०५८५ २,४,०५१ णौ च संश्चङोः

०५८६ २,४,०५२ अस्तेर्भूः

०५८७ २,४,०५३ ब्रुवो वचिः

०५८८ २,४,०५४ चक्षिङः ख्याञ्

०५८९ २,४,०५५ वा लिटि

०५९० २,४,०५६ अजेर्व्यघञपोः

०५९१ २,४,०५७ वा यौ

०५९२ २,४,०५८ ण्यक्षत्रियार्षञितो यूनि लुगणिञोः

०५९३ २,४,०५९ पैलादिभ्यश्च

०५९४ २,४,०६० इञः प्राचाम्

०५९५ २,४,०६१ न तौल्वलिभ्यः

०५९६ २,४,०६२ तद्राजस्य बहुषु तेनैवास्त्रियाम्

०५९७ २,४,०६३ यस्कादिभ्यो गोत्रे

०५९८ २,४,०६४ यञञोश्च

०५९९ २,४,०६५ अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च

०६०० २,४,०६६ बह्वच इञः प्राच्यभरतेषु

०६०१ २,४,०६७ न गोपवनादिभ्यः

०६०२ २,४,०६८ तिककितवादिभ्यो द्वन्द्वे

०६०३ २,४,०६९ उपकादिभ्योऽन्यतरस्यामद्वन्द्वे

०६०४ २,४,०७० आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्

०६०५ २,४,०७१ सुपो धातुप्रातिपदिकयोः

०६०६ २,४,०७२ अदिप्रभृतिभ्यः शपः

०६०७ २,४,०७३ बहुलं छन्दसि

०६०८ २,४,०७४ यङोऽचि च

०६०९ २,४,०७५ जुहोत्यादिभ्यः श्लुः

०६१० २,४,०७६ बहुलं छन्दसि

०६११ २,४,०७७ गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु

०६१२ २,४,०७८ विभाषा घ्राधेट्शाच्छासः

०६१३ २,४,०७९ तनादिभ्यस्तथासोः

०६१४ २,४,०८० मन्त्रे घसह्वरणशवृहदहाद्वृच्कृगमिजनिभ्यो लेः

०६१५ २,४,०८१ आमः

०६१६ २,४,०८२ अव्ययादाप्सुपः

०६१७ २,४,०८३ नाव्ययीभावादतोऽम्त्वपञ्चम्याः

०६१८ २,४,०८४ तृतीयासप्तम्योर्बहुलम्

०६१९ २,४,०८५ लुटः प्रथमस्य डारौरसः

०६२० ३,१,००१ प्रत्ययः

०६२१ ३,१,००२ परश्च

०६२२ ३,१,००३ आद्युदात्तश्च

०६२३ ३,१,००४ अनुदात्तौ सुप्पितौ

०६२४ ३,१,००५ गुप्तिज्किद्भ्यः सन्

०६२५ ३,१,००६ मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य

०६२६ ३,१,००७ धातोः कर्मणः समानकर्तृकादिच्छायाम् वा

०६२७ ३,१,००८ सुप आत्मनः क्यच्

०६२८ ३,१,००९ काम्यच्च

०६२९ ३,१,०१० उपमानादाचारे

०६३० ३,१,०११ कर्तुः क्यङ् सलोपश्च

०६३१ ३,१,०१२ भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः

०६३२ ३,१,०१३ लोहितादि डाज्भ्यः क्यष्

०६३३ ३,१,०१४ कष्टाय क्रमणे

०६३४ ३,१,०१५ कर्मणो रोमन्थतपोभ्यां वर्तिचरोः

०६३५ ३,१,०१६ बाष्पोष्मभ्यामुद्वमने

०६३६ ३,१,०१७ शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे

०६३७ ३,१,०१८ सुखादिभ्यः कर्तृवेदनायाम्

०६३८ ३,१,०१९ नमोवरिवश्चित्रङः क्यच्

०६३९ ३,१,०२० पुच्छभाण्डचीवराण्णिङ्

०६४० ३,१,०२१ मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्

०६४१ ३,१,०२२ धातोरेकाचो हलादेः क्रियासमभिहारे यङ्

०६४२ ३,१,०२३ नित्यं कौटिल्ये गतौ

०६४३ ३,१,०२४ लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम्

०६४४ ३,१,०२५ सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्

०६४५ ३,१,०२६ हेतुमति च

०६४६ ३,१,०२७ कण्ड्वादिभ्यो यक्

०६४७ ३,१,०२८ गुपूधूपविच्छपणिपनिभ्य आयः

०६४८ ३,१,०२९ ऋतेरीयङ्

०६४९ ३,१,०३० कमेर्णिङ्

०६५० ३,१,०३१ आयादय आर्धधातुके वा

०६५१ ३,१,०३२ सनाद्यन्ता धातवः

०६५२ ३,१,०३३ स्यतासी लृलुटोः

०६५३ ३,१,०३४ सिब्बहुलं लेटि

०६५४ ३,१,०३५ कास्प्रत्ययादाममन्त्रे लिटि

०६५५ ३,१,०३६ इजादेश्च गुरुमतोऽनृच्छः

०६५६ ३,१,०३७ दयायासश्च

०६५७ ३,१,०३८ उषविदजागृभ्योऽन्यतरस्याम्

०६५८ ३,१,०३९ भीह्रीभृहुवाम् श्लुवच्च

०६५९ ३,१,०४० कृञ्चानुप्रयुज्यते लिटि

०६६० ३,१,०४१ विदांकुर्वन्त्वित्यन्यतरस्याम्

०६६१ ३,१,०४२ अभ्युत्सादयांप्रजनयांचिकयांरमयामकः पावयांक्रियाद्विदामक्रन्निति छन्दसि

०६६२ ३,१,०४३ च्लि लुङि

०६६३ ३,१,०४४ च्लेः सिच्

०६६४ ३,१,०४५ शल इगुपधादनिटः क्सः

०६६५ ३,१,०४६ श्लिष आलिङ्गने

०६६६ ३,१,०४७ न दृशः

०६६७ ३,१,०४८ णिश्रिद्रुस्रुभ्यः कर्तरि चङ्

०६६८ ३,१,०४९ विभाषा धेट्श्व्योः

०६६९ ३,१,०५० गुपेश्छन्दसि

०६७० ३,१,०५१ नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः

०६७१ ३,१,०५२ अस्यतिवक्तिख्यातिभ्योऽङ्

०६७२ ३,१,०५३ लिपिसिचिह्वश्च

०६७३ ३,१,०५४ आत्मनेपदेष्वन्यतरस्याम्

०६७४ ३,१,०५५ पुषादिद्युताद्यॢदितः परस्मैपदेषु

०६७५ ३,१,०५६ सर्तिशास्त्यर्तिभ्यश्च

०६७६ ३,१,०५७ इरितो वा

०६७७ ३,१,०५८ जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च

०६७८ ३,१,०५९ कृमृदृरुहिभ्यश्छन्दसि

०६७९ ३,१,०६० चिण्ते पदः

०६८० ३,१,०६१ दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्

०६८१ ३,१,०६२ अचः कर्मकर्तरि

०६८२ ३,१,०६३ दुहश्च

०६८३ ३,१,०६४ न रुधः

०६८४ ३,१,०६५ तपोऽनुतापे च

०६८५ ३,१,०६६ चिण्भावकर्मणोः

०६८६ ३,१,०६७ सार्वधातुके यक्

०६८७ ३,१,०६८ कर्तरि शप्

०६८८ ३,१,०६९ दिवादिभ्यः श्यन्

०६८९ ३,१,०७० वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः

०६९० ३,१,०७१ यसोऽनुपसर्गात्

०६९१ ३,१,०७२ संयसश्च

०६९२ ३,१,०७३ स्वादिभ्यः श्नुः

०६९३ ३,१,०७४ श्रुवः शृ च

०६९४ ३,१,०७५ अक्षोऽन्यतरस्याम्

०६९५ ३,१,०७६ तनूकरणे तक्षः

०६९६ ३,१,०७७ तुदादिभ्यः शः

०६९७ ३,१,०७८ रुधादिभ्यः श्नम्

०६९८ ३,१,०७९ तनादिकृञ्भ्य उः

०६९९ ३,१,०८० धिन्विकृण्व्यो र च

०७०० ३,१,०८१ क्र्यादिभ्यः श्ना

०७०१ ३,१,०८२ स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च

०७०२ ३,१,०८३ हलः श्नः शानज्झौ

०७०३ ३,१,०८४ छन्दसि शायजपि

०७०४ ३,१,०८५ व्यत्ययो बहुलम्

०७०५ ३,१,०८६ लिङ्याशिष्यङ्

०७०६ ३,१,०८७ कर्मवत्कर्मणा तुल्यक्रियः

०७०७ ३,१,०८८ तपस्तपःकर्मकस्यैव

०७०८ ३,१,०८९ न दुहस्नुनमां यक्चिणौ

०७०९ ३,१,०९० कुषिरञ्जोः प्राचां श्यन् परस्मैपदं च

०७१० ३,१,०९१ धातोः

०७११ ३,१,०९२ तत्रोपपदं सप्तमीस्थम्

०७१२ ३,१,०९३ कृदतिङ्

०७१३ ३,१,०९४ वाऽसरूपोऽस्त्रियाम्

०७१४ ३,१,०९५ कृत्याः प्राङ्ण्वुलः

०७१५ ३,१,०९६ तव्यत्तव्यानीयरः

०७१६ ३,१,०९७ अचो यत्

०७१७ ३,१,०९८ पोरदुपधात्

०७१८ ३,१,०९९ शकिसहोश्च

०७१९ ३,१,१०० गदमदचरयमश्चानुपसर्गे

०७२० ३,१,१०१ अवद्यपण्यवर्यागर्ह्यपणितव्यानिरोधेषु

०७२१ ३,१,१०२ वह्यं करणम्

०७२२ ३,१,१०३ अर्यः स्वामिवैश्ययोः

०७२३ ३,१,१०४ उपसर्या काल्या प्रजने

०७२४ ३,१,१०५ अजर्यं संगतम्

०७२५ ३,१,१०६ वदः सुपि क्यप्च

०७२६ ३,१,१०७ भुवो भावे

०७२७ ३,१,१०८ हनस्त च

०७२८ ३,१,१०९ एतिस्तुशास्वृदृजुषः क्यप्

०७२९ ३,१,११० ऋदुपधाच्चाकिपिचृतेः

०७३० ३,१,१११ ई च खनः

०७३१ ३,१,११२ भृञोऽसंज्ञायाम्

०७३२ ३,१,११३ मृजेर्विभाषा

०७३३ ३,१,११४ राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः

०७३४ ३,१,११५ भिद्योद्ध्यौ नदे

०७३५ ३,१,११६ पुष्यसिध्यौ नक्षत्रे

०७३६ ३,१,११७ विपूयविनीयजित्या मुञ्जकल्कहलिषु

०७३७ ३,१,११८ प्रत्यपिभ्यां ग्रहेश्छन्दसि

०७३८ ३,१,११९ पदास्वैरिबाह्यापक्ष्येषु च

०७३९ ३,१,१२० विभाषा कृवृषोः

०७४० ३,१,१२१ युग्यं च पत्रे

०७४१ ३,१,१२२ अमावस्यदन्यतरस्याम्

०७४२ ३,१,१२३ छन्दसि
निष्टर्क्यहेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि

०७४३ ३,१,१२४ ऋहलोर्ण्यत्

०७४४ ३,१,१२५ ओरावश्यके

०७४५ ३,१,१२६ आसुयुवपिरपिलपित्रपिचमश्च

०७४६ ३,१,१२७ आनाय्योऽनित्ये

०७४७ ३,१,१२८ प्रणाय्योऽसंमतौ

०७४८ ३,१,१२९ पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु

०७४९ ३,१,१३० क्रतौ कुण्डपाय्यसंचाय्यौ

०७५० ३,१,१३१ अग्नौ परिचाय्योपचाय्यसमूह्याः

०७५१ ३,१,१३२ चित्याग्निचित्ये च

०७५२ ३,१,१३३ ण्वुल्तृचौ

०७५३ ३,१,१३४ नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः

०७५४ ३,१,१३५ इगुपधज्ञाप्रीकिरः कः

०७५५ ३,१,१३६ आतश्चोपसर्गे

०७५६ ३,१,१३७ पाघ्राध्माधेड्दृशः शः

०७५७ ३,१,१३८ अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च

०७५८ ३,१,१३९ ददातिदधात्योर्विभाषा

०७५९ ३,१,१४० ज्वलितिकसन्तेभ्यो णः

०७६० ३,१,१४१ श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च

०७६१ ३,१,१४२ दुन्योरनुपसर्गे

०७६२ ३,१,१४३ विभाषा ग्रहः

०७६३ ३,१,१४४ गेहे कः

०७६४ ३,१,१४५ शिल्पिनि ष्वुन्

०७६५ ३,१,१४६ गः स्थकन्

०७६६ ३,१,१४७ ण्युट् च

०७६७ ३,१,१४८ हश्च व्रीहिकालयोः

०७६८ ३,१,१४९ प्रुसृल्वः समभिहारे वुन्

०७६९ ३,१,१५० आशिषि च

०७७० ३,२,००१ कर्मण्यण्

०७७१ ३,२,००२ ह्वावामश्च

०७७२ ३,२,००३ आतोऽनुपसर्गे कः

०७७३ ३,२,००४ सुपि स्थः

०७७४ ३,२,००५ तुन्दशोकयोः परिमृजापनुदोः

०७७५ ३,२,००६ प्रे दाज्ञः

०७७६ ३,२,००७ समि ख्यः

०७७७ ३,२,००८ गापोष्टक्

०७७८ ३,२,००९ हरतेरनुद्यमनेऽच्

०७७९ ३,२,०१० वयसि च

०७८० ३,२,०११ आङि ताच्छील्ये

०७८१ ३,२,०१२ अर्हः

०७८२ ३,२,०१३ स्तम्बकर्णयोरमिजपोः

०७८३ ३,२,०१४ शमि धातोः संज्ञायाम्

०७८४ ३,२,०१५ अधिकरणे शेतेः

०७८५ ३,२,०१६ चरेष्टः

०७८६ ३,२,०१७ भिक्षासेनादायेषु च

०७८७ ३,२,०१८ पुरोऽग्रतोऽग्रेषु सर्तेः

०७८८ ३,२,०१९ पूर्वे कर्तरि

०७८९ ३,२,०२० कृञो हेतुताच्छील्यानुलोम्येषु

०७९० ३,२,०२१
दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्ध
नुररुःषु

०७९१ ३,२,०२२ कर्मणि भृतौ

०७९२ ३,२,०२३ न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु

०७९३ ३,२,०२४ स्तम्बशकृतोरिन्

०७९४ ३,२,०२५ हरतेर्दृतिनाथयोः पशौ

०७९५ ३,२,०२६ फलेग्रहिरात्मम्भरिश्च

०७९६ ३,२,०२७ छन्दसि वनसनरक्षिमथाम्

०७९७ ३,२,०२८ एजेः खश्

०७९८ ३,२,०२९ नासिकास्तनयोर्ध्माधेटोः

०७९९ ३,२,०३० नाडीमुष्ट्योश्च

०८०० ३,२,०३१ उदिकूलेरुजिवहोः

०८०१ ३,२,०३२ वहाभ्रे लिहः

०८०२ ३,२,०३३ परिमाणे पचः

०८०३ ३,२,०३४ मितनखे च

०८०४ ३,२,०३५ विध्वरुषोस्तुदः

०८०५ ३,२,०३६ असूर्यललाटयोर्दृशितपोः

०८०६ ३,२,०३७ उग्रम्पश्येरम्मदपाणिन्धमाश्च

०८०७ ३,२,०३८ प्रियवशेवदः खच्

०८०८ ३,२,०३९ द्विषत्परयोस्तापेः

०८०९ ३,२,०४० वाचि यमो व्रते

०८१० ३,२,०४१ पूःसर्वयोर्दारिसहोः

०८११ ३,२,०४२ सर्वकूलाभ्रकरीषेषु कषः

०८१२ ३,२,०४३ मेघर्तिभयेषु कृञः

०८१३ ३,२,०४४ क्षेमप्रियमद्रेऽण्च

०८१४ ३,२,०४५ आशिते भुवः करण-भावयोः

०८१५ ३,२,०४६ संज्ञायां भृतॄवृजिधारिसहितपिदमः

०८१६ ३,२,०४७ गमश्च

०८१७ ३,२,०४८ अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः

०८१८ ३,२,०४९ आशिषि हनः

०८१९ ३,२,०५० अपे क्लेशतमसोः

०८२० ३,२,०५१ कुमारशीर्षयोर्णिनिः

०८२१ ३,२,०५२ लक्षणे जाया-पत्योष्टक्

०८२२ ३,२,०५३ अमनुष्यकर्तृके च

०८२३ ३,२,०५४ शक्तौ हस्ति-कपाटयोः

०८२४ ३,२,०५५ पाणिघताडघौ शिल्पिनि

०८२५ ३,२,०५६ आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्

०८२६ ३,२,०५७ कर्तरि भुवः खिष्णुच्-खुकञौ

०८२७ ३,२,०५८ स्पृशोऽनुदके क्विन्

०८२८ ३,२,०५९ ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च

०८२९ ३,२,०६० त्यदादिषु दृशोऽनालोचने कञ्च

०८३० ३,२,०६१ सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्

०८३१ ३,२,०६२ भजो ण्विः

०८३२ ३,२,०६३ छन्दसि सहः

०८३३ ३,२,०६४ वहश्च

०८३४ ३,२,०६५ कव्यपुरीषपुरीष्येषु ञ्युट्

०८३५ ३,२,०६६ हव्येऽनन्तःपादम्

०८३६ ३,२,०६७ जनसनखनक्रमगमो विट्

०८३७ ३,२,०६८ अदोऽनन्ने

०८३८ ३,२,०६९ क्रव्ये च

०८३९ ३,२,०७० दुहः कब्घश्च

०८४० ३,२,०७१ मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्

०८४१ ३,२,०७२ अवे यजः

०८४२ ३,२,०७३ विजुपे छन्दसि

०८४३ ३,२,०७४ आतो मनिन्क्वनिब्वनिपश्च

०८४४ ३,२,०७५ अन्येभ्योऽपि दृश्यन्ते

०८४५ ३,२,०७६ क्विप्च

०८४६ ३,२,०७७ स्थः क च

०८४७ ३,२,०७८ सुप्यजातौ णिनिस्ताच्छील्ये

०८४८ ३,२,०७९ कर्तर्युपमाने

०८४९ ३,२,०८० व्रते

०८५० ३,२,०८१ बहुलमाभीक्ष्ण्ये

०८५१ ३,२,०८२ मनः

०८५२ ३,२,०८३ आत्ममाने खश्च

०८५३ ३,२,०८४ भूते

०८५४ ३,२,०८५ करणे यजः

०८५५ ३,२,०८६ कर्मणि हनः

०८५६ ३,२,०८७ ब्रह्मभ्रूणवृत्रेषु क्विप्

०८५७ ३,२,०८८ बहुलं छन्दसि

०८५८ ३,२,०८९ सुकर्मपापमन्त्रपुण्येषु कृञः

०८५९ ३,२,०९० सोमे सुञः

०८६० ३,२,०९१ अग्नौ चेः

०८६१ ३,२,०९२ कर्मण्यग्न्याख्यायाम्

०८६२ ३,२,०९३ कर्मणीनिविक्रियः

०८६३ ३,२,०९४ दृशेः क्वनिप्

०८६४ ३,३,०९५ राजनि युधिकृञः

०८६५ ३,२,०९६ सहे च

०८६६ ३,२,०९७ सप्तम्यां जनेर्डः

०८६७ ३,२,०९८ पञ्चम्यामजातौ

०८६८ ३,२,०९९ उपसर्गे च संज्ञायाम्

०८६९ ३,२,१०० अनौ कर्मणि

०८७० ३,२,१०१ अन्येष्वपि दृश्यते

०८७१ ३,२,१०२ निष्ठा

०८७२ ३,२,१०३ सुयजोङ्र्वनिप्

०८७३ ३,२,१०४ जीर्यतेरतृन्

०८७४ ३,२,१०५ छन्दसि लिट्

०८७५ ३,२,१०६ लिटः कानज्वा

०८७६ ३,२,१०७ क्वसुश्च

०८७७ ३,२,१०८ भाषायां सदवसश्रुवः

०८७८ ३,२,१०९ उपेयिवाननाश्वाननूचानश्च

०८७९ ३,२,११० लुङ्

०८८० ३,२,१११ अनद्यतने लङ्

०८८१ ३,२,११२ अभिज्ञावचने लृट्

०८८२ ३,२,११३ न यदि

०८८३ ३,२,११४ विभाषा साकाङ्क्षे

०८८४ ३,२,११५ परोक्षे लिट्

०८८५ ३,२,११६ हशश्वतोर्लङ्च

०८८६ ३,२,११७ प्रश्ने चासन्नकाले

०८८७ ३,२,११८ लट् स्मे

०८८८ ३,२,११९ अपरोक्षे च

०८८९ ३,२,१२० ननौ पृष्टप्रतिवचने

०८९० ३,२,१२१ नन्वोर्विभाषा

०८९१ ३,२,१२२ पुरि लुङ् चास्मे

०८९२ ३,२,१२३ वर्तमाने लट्

०८९३ ३,२,१२४ लटः शतृशानचावप्रथमासमानाधिकरणे

०८९४ ३,२,१२५ संबोधने च

०८९५ ३,२,१२६ लक्षणहेत्वोः क्रियायाः

०८९६ ३,२,१२७ तौ सत्

०८९७ ३,२,१२८ पूङ्यजोः शानन्

०८९८ ३,२,१२९ ताच्छील्यवयोवचनशक्तिषु चानश्

०८९९ ३,२,१३० इङ्धार्योः शत्रकृच्छ्रिणि

०९०० ३,२,१३१ द्विषोऽमित्रे

०९०१ ३,२,१३२ सुञो यज्ञसंयोगे

०९०२ ३,२,१३३ अर्हः प्रशंसायाम्

०९०३ ३,२,१३४ आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु

०९०४ ३,२,१३५ तृन्

०९०५ ३,२,१३६ अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्

०९०६ ३,२,१३७ णेश्छन्दसि

०९०७ ३,२,१३८ भुवश्च

०९०८ ३,२,१३९ ग्लाजिस्थश्च ग्स्नुः

०९०९ ३,२,१४० त्रसिगृधिधृषिक्षिपेः क्नुः

०९१० ३,२,१४१ शमित्यष्टाभ्यो घिनुण्

०९११ ३,२,१४२
संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च

०९१२ ३,२,१४३ वौ कषलसकत्थस्रम्भः

०९१३ ३,२,१४४ अपे च लषः

०९१४ ३,२,१४५ प्रे लपसृद्रुमथवदवसः

०९१५ ३,२,१४६ निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूञो वुञ्

०९१६ ३,२,१४७ देविक्रुशोश्चोपसर्गे

०९१७ ३,२,१४८ चलनशब्दार्थादकर्मकाद्युच्

०९१८ ३,२,१४९ अनुदात्तेतश्च हलादेः

०९१९ ३,२,१५० जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः

०९२० ३,२,१५१ क्रुधमण्डार्थेभ्यश्च

०९२१ ३,२,१५२ न यः

०९२२ ३,२,१५३ सूददीपदीक्षश्च

०९२३ ३,२,१५४ लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्

०९२४ ३,२,१५५ जल्पभिक्षकुट्टलुण्टवृङः षाकन्

०९२५ ३,२,१५६ प्रजोरिनिः

०९२६ ३,२,१५७ जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च

०९२७ ३,२,१५८ स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्

०९२८ ३,२,१५९ दाधेट्सिशदसदो रुः

०९२९ ३,२ १६० सृघस्यदः क्मरच्

०९३० ३,२,१६१ भञ्जभासमिदो घुरच्

०९३१ ३,२,१६२ विदिभिदिच्छिदेः कुरच्

०९३२ ३,२,१६३ इण्नश्जिसर्तिभ्यः क्वरप्

०९३३ ३,२,१६४ गत्वरश्च

०९३४ ३,२,१६५ जागरूकः

०९३५ ३,२,१६६ यजजपदशां यङः

०९३६ ३,२,१६७ नमिकम्पिस्म्यजसकमहिंसदीपो रः

०९३७ ३,२,१६८ सनाशंसभिक्ष उः

०९३८ ३,२,१६९ विन्दुरिच्छुः

०९३९ ३,२,१७० क्याच्छन्दसि

०९४० ३,२,१७१ आदृगमहनजनः तितिनौ लिट्च

०९४१ ३,२,१७२ स्वपितृषोर्नजिङ्

०९४२ ३,२,१७३ शॄवन्द्योरारुः

०९४३ ३,२,१७४ भियः क्रुक्लुकनौ

०९४४ ३,२,१७५ स्थेशभासपिसकसो वरच्

०९४५ ३,२,१७६ यश्च यङः

०९४६ ३,२,१७७ भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्

०९४७ ३,२,१७८ अन्येभ्योऽपि दृश्यते

०९४८ ३,२,१७९ भुवः संज्ञान्तरयोः

०९४९ ३,२,१८० विप्रसंभ्यो ड्वसंज्ञायाम्

०९५० ३,२,१८१ धः कर्मणि ष्ट्रन्

०९५१ ३,२,१८२ दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे

०९५२ ३,२,१८३ हलसूकरयोः पुवः

०९५३ ३,२,१८४ अर्तिलूधूसूखनसहचर इत्रः

०९५४ ३,२,१८५ पुवः संज्ञायाम्

०९५५ ३,२,१८६ कर्तरि चर्षिदेवतयोः

०९५६ ३,२,१८७ ञीतः क्तः

०९५७ ३,२,१८८ मतिबुद्धिपूजार्थेभ्यश्च

०९५८ ३,३,००१ उणादयो बहुलम्

०९५९ ३,३,००२ भूतेऽपि दृश्यन्ते

०९६० ३,३,००३ भविष्यति गम्यादयः

०९६१ ३,३,००४ यावत्पुरानिपातयोर्लट्

०९६२ ३,३,००५ विभाषा कदाकर्ह्योः

०९६३ ३,३,००६ किंवृत्ते लिप्सायाम्

०९६४ ३,३,००७ लिप्स्यमानसिद्धौ च

०९६५ ३,३,००८ लोडर्थलक्षणे च

०९६६ ३,३,००९ लिङ्चोर्ध्वमौहूर्तिके

०९६७ ३,३,०१० तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्

०९६८ ३,३,०११ भाववचनाश्च

०९६९ ३,३,०१२ अण्कर्मणि च

०९७० ३,३,०१३ लृट् शेषे च

०९७१ ३,३,०१३ लृटः सद्वा

०९७२ ३,३,०१५ अनद्यतने लुट्

०९७३ ३,३,०१६ पदरुजविशस्पृशो घञ्

०९७४ ३,३,०१७ सृ स्थिरे

०९७५ ३,३,०१८ भावे

०९७६ ३,३,०१९ अकर्तरि च कारके संज्ञायाम्

०९७७ ३,३,०२० परिमाणाख्यायां सर्वेभ्यः

०९७८ ३,३,०२१ इङश्च

०९७९ ३,३,०२२ उपसर्गे रुवः

०९८० ३,३,०२३ समि युद्रुदुवः

०९८१ ३,३,०२४ श्रिणीभुवोऽनुपसर्गे

०९८२ ३,३,०२५ वौ क्षुश्रुवः

०९८३ ३,३,०२६ अवोदोर्नियः

०९८४ ३,३,०२७ प्रे द्रुस्तुस्रुवः

०९८५ ३,३,०२८ निरभ्योः पूल्वोः

०९८६ ३,३,०२९ उन्न्योर्ग्रः

०९८७ ३,३,०३० कॄ धान्ये

०९८८ ३,३,०३१ यज्ञे समि स्तुवः

०९८९ ३,३,०३२ प्रे स्त्रोऽयज्ञे

०९९० ३,३,०३३ प्रथने वावशब्दे

०९९१ ३,३,०३४ छन्दोनाम्नि च

०९९२ ३,३,०३५ उदि ग्रहः

०९९३ ३,३,०३६ समि मुष्टौ

०९९४ ३,३,०३७ परिन्योर्नीणोर्द्यूताभ्रेषयोः

०९९५ ३,३,०३८ परावनुपात्यय इणः

०९९६ ३,३,०३९ व्युपयोः शेतेः पर्याये

०९९७ ३,३,०४० हस्तादाने चेरस्तेये

०९९८ ३,३,०४१ निवासचितिशरीरोपसमाधानेष्वादेश्च कः

०९९९ ३,३,०४२ सङ्घे चानौत्तराधर्ये

१००० ३,३,०४३ कर्मव्यतिहारे णच्स्त्रियाम्

१००१ ३,३,०४४ अभिविधौ भाव इनुण्

१००२ ३,३,०४५ आक्रोशेऽवन्योर्ग्रहः

१००३ ३,३,०४६ प्रे लिप्सायाम्

१००४ ३,३,०४७ परौ यज्ञे

१००५ ३,३,०४८ नौ वृ धान्ये

१००६ ३,३,०४९ उदि श्रयतियौतिपूद्रुवः

१००७ ३,३,०५० विभाषाऽऽङिरुप्लुवोः

१००८ ३,३,०५१ अवे ग्रहो वर्षप्रतिबन्धे

१००९ ३,३,०५२ प्रे वणिजाम्

१०१० ३,३,०५३ रश्मौ च

१०११ ३,३,०५४ वृणोतेराच्छादने

१०१२ ३,३,०५५ परौ भुवोऽवज्ञाने

१०१३ ३,३,०५६ एरच्

१०१४ ३,३,०५७ ॠदोरप्

१०१५ ३,३,०५८ ग्रहवृदृनिश्चिगमश्च

१०१६ ३,३,०५९ उपसर्गेऽदः

१०१७ ३,३,०६० नौ ण च

१०१८ ३,३,०६१ व्यधजपोरनुपसर्गे

१०१९ ३,३,०६२ स्वनहसोर्वा

१०२० ३,३,०६३ यमः समुपनिविषु च

१०२१ ३,३,०६४ नौ गदनदपठस्वनः

१०२२ ३,३,०६५ क्वणो वीणायां च

१०२३ ३,३,०६६ नित्यं पणः परिमाणे

१०२४ ३,३,०६७ मदोऽनुपसर्गे

१०२५ ३,३,०६८ प्रमद-संमदौ हर्षे

१०२६ ३,३,०६९ समुदोरजः पशुषु

१०२७ ३,३,०७० अक्षेषु ग्लहः

१०२८ ३,३,०७१ प्रजने सर्तेः

१०२९ ३,३,०७२ ह्वः सम्प्रसारणं च न्यभ्युपविषु

१०३० ३,३,०७३ आङि युद्धे

१०३१ ३,३,०७४ निपानमाहावः

१०३२ ३,३,०७५ भावेऽनुपसर्गस्य

१०३३ ३,३,०७६ हनश्च वधः

१०३४ ३,३,०७७ मूर्तौ घनः

१०३५ ३,३,०७८ अन्तर्घनो देशे

१०३६ ३,३,०७९ अगारैकदेशे प्रघणः प्रघाणश्च

१०३७ ३,३,०८० उद्घनोऽत्याधानम्

१०३८ ३,३,०८१ अपघनोऽङ्गम्

१०३९ ३,३,०८२ करणेऽयोविद्रुषु

१०४० ३,३,०८३ स्तम्बे क च

१०४१ ३,३,०८४ परौ घः

१०४२ ३,३,०८५ उपघ्न आश्रये

१०४३ ३,३,०८६ सङ्घोद्घौ गणप्रशंसयोः

१०४४ ३,३,०८७ निघो निमितम्

१०४५ ३,३,०८८ ड्वितः क्त्रिः

१०४६ ३,३,०८९ ट्वितोऽथुच्

१०४७ ३,३,०९० यजयाचयतविच्छप्रच्छरक्षो नङ्

१०४८ ३,३,०९१ स्वपो नन्

१०४९ ३,३,०९२ उपसर्गे घोः किः

१०५० ३,३,०९३ कर्मण्यधिकरणे च

१०५१ ३,३,०९४ स्त्रियां क्तिन्

१०५२ ३,३,०९५ स्थागापापचो भावे

१०५३ ३,३,०९६ मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः

१०५४ ३,३,०९७ ऊतियूतिजूतिसातिहेतिकीर्तयश्च

१०५५ ३,३,०९८ व्रजयजोर्भावे क्यप्

१०५६ ३,३,०९९ संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः

१०५७ ३,३,१०० कृञः श च

१०५८ ३,३,१०१ इच्छा

१०५९ ३,३,१०२ अ प्रत्ययात्

१०६० ३,३,१०३ गुरोश्च हलः

१०६१ ३,३,१०४ षिद्भिदादिभ्योऽङ्

१०६२ ३,३,१०५ चिन्तिपूजिकथिकुम्बिचर्चश्च

१०६३ ३,३,१०६ आतश्चोपसर्गे

१०६४ ३,३,१०७ ण्यासश्रन्थो युच्

१०६५ ३,३,१०८ रोगाख्यायां ण्वुल् बहुलम्

१०६६ ३,३,१०९ संज्ञायाम्

१०६७ ३,३,११० विभाषाख्यानपरिप्रश्नयोरिञ्च

१०६८ ३,३,१११ पर्यायार्हर्णोत्पत्तिषु ण्वुच्

१०६९ ३,३,११२ आक्रोशे नञ्यनिः

१०७० ३,३,११३ कृत्यल्युटो बहुलम्

१०७१ ३,३,११४ नपुंसके भावे क्तः

१०७२ ३,३,११५ ल्युट् च

१०७३ ३,३,११६ कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम्

१०७४ ३,३,११७ करणाधिकरणयोश्च

१०७५ ३,३,११८ पुंसि संज्ञायां घः प्रायेण

१०७६ ३,३,११९ गोचरसंचरवहव्रजव्यजापणनिगमाश्च

१०७७ ३,३,१२० अवे तॄस्त्रोर्घञ्

१०७८ ३,३,१२१ हलश्च

१०७९ ३,३,१२२ अध्यायन्यायोद्यावसंहाराधारावायाश्च

१०८० ३,३,१२३ उदङ्कोऽनुदके

१०८१ ३,३,१२४ जालमानायः

१०८२ ३,३,१२५ खनो घ च

१०८३ ३,३,१२६ ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्

१०८४ ३,३,१२७ कर्तृकर्मणोश्च भूकृञोः

१०८५ ३,३,१२८ आतो युच्

१०८६ ३,३,१२९ छन्दसि गत्यर्थेभ्यः

१०८७ ३,३,१३० अन्येभ्योऽपि दृश्यते

१०८८ ३,३,१३१ वर्तमानसामीप्ये वर्तमानवद्वा

१०८९ ३,३,१३२ आशंसायां भूतवच्च

१०९० ३,३,१३३ क्षिप्रवचने लृट्

१०९१ ३,३,१३४ आशंसावचने लिङ्

१०९२ ३,३,१३५ नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः

१०९३ ३,३,१३६ भविष्यति मर्यादावचनेऽवरस्मिन्

१०९४ ३,३,१३७ कालविभागे चानहोरात्राणाम्

१०९५ ३,३,१३८ परस्मिन् विभाषा

१०९६ ३,३,१३९ लिङ्निमित्ते लृङ् क्रियातिपत्तौ

१०९७ ३,३,१४० भूते च

१०९८ ३,३,१४१ वोताप्योः

१०९९ ३,३,१४२ गर्हायां लडपिजात्वोः

११०० ३,३,१४३ विभाषा कथमि लिङ् च

११०१ ३,३,१४४ किंवृत्ते लिङ्लृटौ

११०२ ३,३,१४५ अनवकिप्त्यमर्षयोरकिंवृत्तेऽपि

११०३ ३,३,१४६ किंकिलास्त्यर्थेषु लृट्

११०४ ३,३,१४७ जातुयदोर्लिङ्

११०५ ३,३,१४८ यच्च यत्रयोः

११०६ ३,३,१४९ गर्हायां च

११०७ ३,३,१५० चित्रीकरणे च

११०८ ३,३,१५१ शेषे लृडयदौ

११०९ ३,३,१५२ उताप्योः समर्थयोर्लिङ्

१११० ३,३,१५३ कामप्रवेदनेऽकच्चिति

११११ ३,३,१५४ संभावनेऽलमितिचेत्सिद्धाप्रयोगे

१११२ ३,३,१५५ विभाषा धातौ संभावनवचनेऽयदि

१११३ ३,३,१५६ हेतुहेतुमतोर्लिङ्

१११४ ३,३,१५७ इच्छार्थेषु लिङ्लोटौ

१११५ ३,३,१५८ समानकर्तृकेषु तुमुन्

१११६ ३,३,१५९ लिङ् च

१११७ ३,३,१६० इच्छार्थेभ्यो विभाषा वर्तमाने

१११८ ३,३,१६१ विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्

१११९ ३,३,१६२ लोट् च

११२० ३,३,१६३ प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च

११२१ ३,३,१६४ लिङ् चोर्ध्वमौहूर्तिके

११२२ ३,३,१६५ स्मे लोट्

११२३ ३,३,१६६ अधीष्टे च

११२४ ३,३,१६७ कालसमयवेलासु तुमुन्

११२५ ३,३,१६८ लिङ् यदि

११२६ ३,३,१६९ अर्हे कृत्यतृचश्च

११२७ ३,३,१७० आवश्यकाधमर्ण्ययोर्णिनिः

११२८ ३,३,१७१ कृत्याश्च

११२९ ३,३,१७२ शकि लिङ् च

११३० ३,३,१७३ आशिषि लिङ्लोटौ

११३१ ३,३,१७४ क्तिच् क्तौ च संज्ञायाम्

११३२ ३,३,१७५ माङि लुङ्

११३३ ३,३,१७६ स्मोत्तरे लङ् च

११३४ ३,४,००१ धातुसम्बन्धे प्रत्ययाः

११३५ ३,४,००२ क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः

११३६ ३,४,००३ समुच्चयेऽन्यतरस्याम्

११३७ ३,४,००४ यथाविध्यनुप्रयोगः पूर्वस्मिन्

११३८ ३,४,००५ समुच्चये सामान्यवचनस्य

११३९ ३,४,००६ छन्दसि लुङ्लङ्लिटः

११४० ३,४,००७ लिङर्थे लेट्

११४१ ३,४,००८ उपसंवादाशङ्कयोश्च

११४२ ३,४,००९ तुमर्थे सेसेनसेऽसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः

११४३ ३,४,०१० प्रयै रोहिष्यै अव्यथिष्यै

११४४ ३,४,०११ दृशे विख्ये च

११४५ ३,४,०१२ शकि णमुल्कमुलौ

११४६ ३,४,०१३ ईश्वरे तोसुन्कसुनौ

११४७ ३,४,०१४ कृत्यार्थे तवैकेन्केन्यत्वनः

११४८ ३,४,०१५ अवचक्षे च

११४९ ३,४,०१६ भावलक्षणे स्थेण्कृञ्वधिचरिहुतमिजनिभ्यस्तोसुन्

११५० ३,४,०१७ सृपितृदोः कसुन्

११५१ ३,४,०१८ अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा

११५२ ३,४,०१९ उदीचां माङो व्यतीहारे

११५३ ३,४,०२० परावरयोगे च

११५४ ३,४,०२१ समानकर्तृकयोः पूर्वकाले

११५५ ३,४,०२२ आभीक्ष्ण्ये णमुल् च

११५६ ३,४,०२३ न यद्यनाकाङ्क्षे

११५७ ३,४,०२४ विभाषाऽग्रेप्रथमपूर्वेषु

११५८ ३,४,०२५ कर्मण्याक्रोशे कृञः खमुञ्

११५९ ३,४,०२६ स्वादुमि णमुल्

११६० ३,४,०२७ अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्

११६१ ३,४,०२८ यथातथयोरसूयाप्रतिवचने

११६२ ३,४,०२९ कर्मणि दृशिविदोः साकल्ये

११६३ ३,४,०३० यावति विन्दजीवोः

११६४ ३,४,०३१ चर्मोदरयोः पूरेः

११६५ ३,४,०३२ वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्

११६६ ३,४,०३३ चेले क्नोपेः

११६७ ३,४,०३४ निमूलसमूलयोः कषः

११६८ ३,४,०३५ शुष्कचूर्णरूक्षेषु पिषः

११६९ ३,४,०३६ समूलाकृतजीवेषु हन्कृञ्ग्रहः

११७० ३,४,०३७ करणे हनः

११७१ ३,४,०३८ स्नेहने पिषः

११७२ ३,४,०३९ हस्ते वर्तिग्रहोः

११७३ ३,४,०४० स्वे पुषः

११७४ ३,४,०४१ अधिकरणे बन्धः

११७५ ३,४,०४२ संज्ञायाम्

११७६ ३,४,०४३ कर्त्रोर्जीवपुरुषयोर्नशिवहोः

११७७ ३,४,०४४ ऊर्ध्वे शुषिपूरोः

११७८ ३,४,०४५ उपमाने कर्मणि च

११७९ ३,४,०४६ कषादिषु यथाविध्यनुप्रयोगः

११८० ३,४,०४७ उपदंशस्तृतीयायाम्

११८१ ३,४,०४८ हिंसार्थानां च समानकर्तृकाणाम्

११८२ ३,४,०४९ सप्तम्यां चोपपीडरुधकर्षः

११८३ ३,४,०५० समासत्तौ

११८४ ३,४,०५१ प्रमाणे च

११८५ ३,४,०५२ अपादाने परीप्सायाम्

११८६ ३,४,०५३ द्वितीयायां च

११८७ ३,४,०५४ स्वाङ्गेऽध्रुवे

११८८ ३,४,०५५ परिक्लिश्यमाने च

११८९ ३,४,०५६ विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः

११९० ३,४,०५७ अस्यतितृषोः क्रियान्तरे कालेषु

११९१ ३,४,०५८ नाम्न्यादिशिग्रहोः

११९२ ३,४,०५९ अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ

११९३ ३,४,०६० तिर्यच्यपवर्गे

११९४ ३,४,०६१ स्वाङ्गे तस्प्रत्यये कृभ्वोः

११९५ ३,४,०६२ नाधार्थप्रत्यये च्व्यर्थे

११९६ ३,४,०६३ तूष्णीमि भुवः

११९७ ३,४,०६४ अन्वच्यानुलोम्ये

११९८ ३,४,०६५ शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्

११९९ ३,४,०६६ पर्याप्तिवचनेष्वलमर्थेषु

१२०० ३,४,०६७ कर्तरि कृत्

१२०१ ३,४,०६८ भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा

१२०२ ३,४,०६९ लः कर्मणि च भावे चाकर्मकेभ्यः

१२०३ ३,४,०७० तयोरेव कृत्यक्तखलर्थाः

१२०४ ३,४,०७१ आदिकर्मणि क्तः कर्तरि च

१२०५ ३,४,०७२ गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च

१२०६ ३,४,०७३ दाशगोघ्नौ संप्रदाने

१२०७ ३,४,०७४ भीमादयोऽपादाने

१२०८ ३,४,०७५ ताभ्यामन्यत्रोणादयः

१२०९ ३,४,०७६ क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः

१२१० ३,४,०७७ लस्य

१२११ ३,४,०७८ तिप्तस्झिसिप्थस्थविब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ्

१२१२ ३,४,०७९ टित आत्मनेपदानाम् टेरे

१२१३ ३,४,०८० थासः से

१२१४ ३,४,०८१ लिटस्तझयोरेशिरेच्

१२१५ ३,४,०८२ परस्मैपदानां णलतुसुस्थलथुसणल्वमाः

१२१६ ३,४,०८३ विदो लटो वा

१२१७ ३,४,०८४ ब्रुवः पञ्चानामादित आहो ब्रुवः

१२१८ ३,४,०८५ लोटो लङ्वत्

१२१९ ३,४,०८६ एरुः

१२२० ३,४,०८७ सेर्ह्यपिच्च

१२२१ ३,४,०८८ वा छन्दसि

१२२२ ३,४,०८९ मेर्निः

१२२३ ३,४,०९० आमेतः

१२२४ ३,४,०९१ सवाभ्याम् वामौ

१२२५ ३,४,०९२ आडुत्तमस्य पिच्च

१२२६ ३,४,०९३ एत ऐ

१२२७ ३,४,०९४ लेटोऽडाटौ

१२२८ ३,४,०९५ आत ऐ

१२२९ ३,४,०९६ वैतोऽन्यत्र

१२३० ३,४,०९७ इतश्च लोपः परस्मैपदेषु

१२३१ ३,४,०९८ स उत्तमस्य

१२३२ ३,४,०९९ नित्यम् ङितः

१२३३ ३,४,१०० इतश्च

१२३४ ३,४,१०१ तस्थस्थमिपाम् तान्तन्तामः

१२३५ ३,४,१०२ लिङः सीयुट्

१२३६ ३,४,१०३ यासुट् परस्मैपदेषूदात्तो ङिच्च

१२३७ ३,४,१०४ किदाशिषि

१२३८ ३,४,१०५ झस्य रन्

१२३९ ३,४,१०६ इटोऽत्

१२४० ३,४,१०७ सुट् तिथोः

१२४१ ३,४,१०८ झेर्जुस्

१२४२ ३,४,१०९ सिजभ्यस्तविदिभ्यश्च

१२४३ ३,४,११० आतः

१२४४ ३,४,१११ लङः शाकटायनस्यैव

१२४५ ३,४,११२ द्विषश्च

१२४६ ३,४,११३ तिङ् शित् सार्वधातुकम्

१२४७ ३,४,११४ आर्धधातुकम् शेषः

१२४८ ३,४,११५ लिट् च

१२४९ ३,४,११६ लिङाशिषि

१२५० ३,४,११७ छन्दस्युभयथा

१२५१ ४,१,००१ ङ्याप्प्रातिपदिकात्

१२५२ ४,१,००२ स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्

१२५३ ४,१,००३ स्त्रियाम्

१२५४ ४,१,००४ अजाद्यतष्टाप्

१२५५ ४,१,००५ ऋन्नेभ्यो ङीप्

१२५६ ४,१,००६ उगितश्च

१२५७ ४,१,००७ वनो र च

१२५८ ४,१,००८ पादोऽन्यतरस्याम्

१२५९ ४,१,००९ टाबृचि

१२६० ४,१,०१० न षट्स्वस्रादिभ्यः

१२६१ ४,१,०११ मनः

१२६२ ४,१,०१२ अनो बहुव्रीहेः

१२६३ ४,१,०१३ डाबुभाभ्यामन्यतरस्याम्

१२६४ ४,१,०१४ अनुपसर्जनात्

१२६५ ४,१,०१५ टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः

१२६६ ४,१,०१६ यञश्च

१२६७ ४,१,०१७ प्राचां ष्फ तद्धितः

१२६८ ४,१,०१८ सर्वत्र लोहितादिकतन्तेभ्यः

१२६९ ४,१,०१९ कौरव्यमाण्डूकाभ्यां च

१२७० ४,१,०२० वयसि प्रथमे

१२७१ ४,१,०२१ द्विगोः

१२७२ ४,१,०२२ अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि

१२७३ ४,१,०२३ काण्डान्तात्क्षेत्रे

१२७४ ४,१,०२४ पुरुषात्प्रमाणेऽन्यतरस्याम्

१२७५ ४,१,०२५ बहुव्रीहेरूधसो ङीष्

१२७६ ४,१,०२६ संख्याव्ययादेर्ङीप्

१२७७ ४,१,०२७ दामहायनान्ताच्च

१२७८ ४,१,०२८ अन उपधालोपिनोऽन्यतरस्याम्

१२७९ ४,१,०२९ नित्यं संज्ञाछन्दसोः

१२८० ४,१,०३० केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च

१२८१ ४,१,०३१ रात्रेश्चाजसौ

१२८२ ४,१,०३२ अन्तर्वत्पतिवतोर्नुक्

१२८३ ४,१,०३३ पत्युर्नो यज्ञसंयोगे

१२८४ ४,१,०३४ विभाषा सपूर्वस्य

१२८५ ४,१,०३५ नित्यं सपत्न्यादिषु

१२८६ ४,१,०३६ पूतक्रतोरै च

१२८७ ४,१,०३७ वृषाकप्यग्निकुसितकुसीदानामुदात्तः

१२८८ ४,१,०३८ मनोरौ वा

१२८९ ४,१,०३९ वर्णादनुदात्तात्तोपधात्तो नः

१२९० ४,१,०४० अन्यतो ङीष्

१२९१ ४,१,०४१ षिद्गौरादिभ्यश्च

१२९२ ४,१,०४२
जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनाय ोविकारमैथुनेच्छाकेशवेशेषु (वर्णना ?)

१२९३ ४,१,०४३ शोणात्प्राचाम्

१२९४ ४,१,०४४ वोतो गुणवचनात्

१२९५ ४,१,०४५ बह्वादिभ्यश्च

१२९६ ४,१,०४६ नित्यं छन्दसि

१२९७ ४,१,०४७ भुवश्च

१२९८ ४,१,०४८ पुंयोगादाख्यायाम्

१२९९ ४,१,०४९ इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्

१३०० ४,१,०५० क्रीतात्करणपूर्वात्

१३०१ ४,१,०५१ क्तादल्पाख्यायाम्

१३०२ ४,१,०५२ बहुव्रीहेश्चान्तोदात्तात्

१३०३ ४,१,०५३ अस्वाङ्गपूर्वपदाद्वा

१३०४ ४,१,०५४ स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्

१३०५ ४,१,०५५ नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च

१३०६ ४,१,०५६ न क्रोडादि-बह्वचः

१३०७ ४,१,०५७ सहनञ्विद्यमानपूर्वाच्च

१३०८ ४,१,०५८ नखमुखात्संज्ञायाम्

१३०९ ४,१,०५९ दीर्घजिह्वी च छन्दसि

१३१० ४,१,०६० दिक्पूर्वपदान्ङीप्

१३११ ४,१,०६१ वाहः

१३१२ ४,१,०६२ सख्यशिश्वीति भाषायाम्

१३१३ ४,१,०६३ जातेरस्त्रीविषयादयोपधात्

१३१४ ४,१,०६४ पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च

१३१५ ४,१,०६५ इतो मनुष्यजातेः

१३१६ ४,१,०६६ ऊङुतः

१३१७ ४,१,०६७ बाह्वन्तात्संज्ञायाम्

१३१८ ४,१,०६८ पङ्गोश्च

१३१९ ४,१,०६९ ऊरूत्तरपदादौपम्ये

१३२० ४,१,०७० संहितशफलक्षणवामादेश्च

१३२१ ४,१,०७१ कद्रुकमण्डल्वोश्छन्दसि

१३२२ ४,१,०७२ संज्ञायाम्

१३२३ ४,१,०७३ शाङ्गरवाद्यञो ङीन्

१३२४ ४,१,०७४ यङश्चाप्

१३२५ ४,१,०७५ आवट्याच्च

१३२६ ४,१,०७६ तद्धिताः

१३२७ ४,१,०७७ यूनस्तिः

१३२८ ४,१,०७८ अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे

१३२९ ४,१,०७९ गोत्रावयवात्

१३३० ४,१,०८० क्रौड्यादिभ्यश्च

१३३१ ४,१,०८१ दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम्

१३३२ ४,१,०८२ समर्थानाम् प्रथमाद्वा

१३३३ ४,१,०८३ प्राग्दीव्यतोऽण्

१३३४ ४,१,०८४ अश्वपत्यादिभ्यश्च

१३३५ ४,१,०८५ दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः

१३३६ ४,१,०८६ उत्सादिभ्योऽञ्

१३३७ ४,१,०८७ स्त्रीपुंसाभ्याम् नञ्स्नञौ भवनात्

१३३८ ४,१,०८८ द्विगोर्लुगनपत्ये

१३३९ ४,१,०८९ गोत्रेऽलुगचि

१३४० ४,१,०९० यूनि लुक्

१३४१ ४,१,०९१ फक्फिञोरन्यतरस्याम्

१३४२ ४,१,०९२ तस्यापत्यम्

१३४३ ४,१,०९३ एको गोत्रे

१३४४ ४,१,०९४ गोत्राद्यून्यस्त्रियाम्

१३४५ ४,१,०९५ अत इञ्

१३४६ ४,१,०९६ बाह्वादिभ्यश्च

१३४७ ४,१,०९७ सुधातुरकङ् च

१३४८ ४,१,०९८ गोत्रे कुञ्जादिभ्यश्च्फञ्

१३४९ ४,१,०९९ नडादिभ्यः फक्

१३५० ४,१,१०० हरितादिभ्योऽञः

१३५१ ४,१,१०१ यञिञोश्च

१३५२ ४,१,१०२ शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु

१३५३ ४,१,१०३ द्रोणपर्वतजीवन्तादन्यतरस्याम्

१३५४ ४,१,१०४ अनृष्यानन्तर्ये बिदादिभ्योऽञ्

१३५५ ४,१,१०५ गर्गादिभ्यो यञ्

१३५६ ४,१,१०६ मधुबभ्र्वोर्ब्राह्मणकौशिकयोः

१३५७ ४,१,१०७ कपिबोधादाङ्गिरसे

१३५८ ४,१,१०८ वतण्डाच्च

१३५९ ४,१,१०९ लुक् स्त्रियाम्

१३६० ४,१,११० अश्वादिभ्यः फञ्

१३६१ ४,१,१११ भर्गात् त्रैगर्ते

१३६२ ४,१,११२ शिवादिभ्योऽण्

१३६३ ४,१,११३ अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः

१३६४ ४,१,११४ ऋष्यन्धकवृष्णिकुरुभ्यश्च

१३६५ ४,१,११५ मातुरुत्संख्यासंभद्रपूर्वायाः

१३६६ ४,१,११६ कन्यायाः कनीन च

१३६७ ४,१,११७ विकर्णशुङ्गछगलाद्वत्सभरद्वाजात्रिषु

१३६८ ४,१,११८ पीलाया वा

१३६९ ४,१,११९ ढक्च मण्डूकात्

१३७० ४,१,१२० स्त्रीभ्यो ढक्

१३७१ ४,१,१२१ द्व्यचः

१३७२ ४,१,१२२ इतश्चानिञः

१३७३ ४,१,१२३ शुभ्रादिभ्यश्च

१३७४ ४,१,१२४ विकर्णकुषीतकात् काश्यपे

१३७५ ४,१,१२५ भ्रुवो वुक् च

१३७६ ४,१,१२६ कल्याण्यादीनामिनङ् च

१३७७ ४,१,१२७ कुलटाया वा

१३७८ ४,१,१२८ चटकाया ऐरक्

१३७९ ४,१,१२९ गोधाया ढ्रक्

१३८० ४,१,१३० आरगुदीचाम्

१३८१ ४,१,१३१ क्षुद्राभ्यो वा

१३८२ ४,१,१३२ पितृष्वसुश्छण्

१३८३ ४,१,१३३ ढकि लोपः

१३८४ ४,१,१३४ मातृष्वसुश्च

१३८५ ४,१,१३५ चतुष्पाद्भ्यो ढञ्

१३८६ ४,१,१३६ गृष्ट्यादिभ्यश्च

१३८७ ४,१,१३७ राजश्वशुराद्यत्

१३८८ ४,१,१३८ क्षत्राद्घः

१३८९ ४,१,१३९ कुलात्खः

१३९० ४,१,१४० अपूर्वपदादन्यतरस्यां यड्ढकञौ

१३९१ ४,१,१४१ महाकुलादञ्खञौ

१३९२ ४,१,१४२ दुष्कुलाड्ढक्

१३९३ ४,१,१४३ स्वसुश्छः

१३९४ ४,१,१४४ भ्रातुर्व्यच्च

१३९५ ४,१,१४५ व्यन्त्सपत्ने

१३९६ ४,१,१४६ रेवत्यादिभ्यष्ठक्

१३९७ ४,१,१४७ गोत्रस्त्रियाः कुत्सने ण च

१३९८ ४,१,१४८ वृद्धाट्ठक्सौवीरेषु बहुलम्

१३९९ ४,१,१४९ फेश्छ च

१४०० ४,१,१५० फाण्टाहृतिमिमताभ्यां णफिञौ

१४०१ ४,१,१५१ कुर्वादिभ्यो ण्यः

१४०२ ४,१,१५२ सेनान्तलक्षणकारिभ्यश्च

१४०३ ४,१,१५३ उदीचामिञ्

१४०४ ४,१,१५४ तिकादिभ्यः फिञ्

१४०५ ४,१,१५५ कौसल्यकार्मार्याभ्यां च

१४०६ ४,१,१५६ अणो द्व्यचः

१४०७ ४,१,१५७ उदीचां वृद्धादगोत्रात्

१४०८ ४,१,१५८ वाकिनादीनां कुक्च

१४०९ ४,१,१५९ पुत्रान्तादन्यतरस्याम्

१४१० ४,१,१६० प्राचामवृद्धात्फिन्बहुलम्

१४११ ४,१,१६१ मनोर्जातावञ्यतौषुक्च

१४१२ ४,१,१६२ अपत्यं पौत्रप्रभृति गोत्रम्

१४१३ ४,१,१६३ जीवति तु वंश्ये युवा

१४१४ ४,१,१६४ भ्रातरि च ज्यायसि

१४१५ ४,१,१६५ वाऽन्यस्मिन् सपिण्डे स्थविरतरे जीवति

१४१६ ४,१,१६६ वृद्धस्य च पूजायाम्

१४१७ ४,१,१६७ यूनश्च कुत्सायाम्

१४१८ ४,१,१६८ जनपदशब्दात्क्षत्रियादञ्

१४१९ ४,१,१६९ साल्वेयगान्धारिभ्यां च

१४२० ४,१,१७० द्व्यञ्मगधकलिङ्गसूरमसादण्

१४२१ ४,१,१७१ वृद्धेत्कोसलाजादाञ्ञ्यङ्

१४२२ ४,१,१७२ कुरुनादिभ्यो ण्यः

१४२३ ४,१,१७३ साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ्

१४२४ ४,१,१७४ ते तद्राजाः

१४२५ ४,१,१७५ कम्बोजाल्लुक्

१४२६ ४,१,१७६ स्त्रियामवन्तिकुन्तिकुरुभ्यश्च

१४२७ ४,१,१७७ अतश्च

१४२८ ४,१,१७८ न प्राच्यभर्गादियौधेयादिभ्यः

१४२९ ४,२,००१ तेन रक्तं रागात्

१४३० ४,२,००२ लाक्षारोचनाशकलकर्दमाट्ठक्

१४३१ ४,२,००३ नक्षत्रेण युक्तः कालः

१४३२ ४,२,००४ लुबविशेषे

१४३३ ४,२,००५ संज्ञायां श्रवणाश्वत्थाभ्याम्

१४३४ ४,२,००६ द्वन्द्वाच्छः

१४३५ ४,२,००७ दृष्टं साम

१४३६ ४,२,००८ कलेर्ढक्

१४३७ ४,२,००९ वामदेवाड्ड्यड्ड्यौ

१४३८ ४,२,०१० परिवृतो रथः

१४३९ ४,२,०११ पाण्डुकम्बलादिनिः

१४४० ४,२,०१२ द्वैपवैयाघ्रादञ्

१४४१ ४,२,०१३ कौमारापूर्ववचने

१४४२ ४,२,०१४ तत्रोद्धृतममत्रेभ्यः

१४४३ ४,२,०१५ स्थण्डिलाच्छयितरि व्रते

१४४४ ४,२,०१६ संस्कृतं भक्षाः

१४४५ ४,२,०१७ शूलोखाद्यत्

१४४६ ४,२,०१८ दध्नष्ठक्

१४४७ ४,२,०१९ उदश्वितोऽन्यतरस्याम्

१४४८ ४,२,०२० क्षीराड्ढञ्

१४४९ ४,२,०२१ साऽस्मिन्पौर्णमासीति

१४५० ४,२,०२२ आग्रहायण्यश्वत्थाट्ठक्

१४५१ ४,२,०२३ विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः

१४५२ ४,२,०२४ साऽस्य देवता

१४५३ ४,२,०२५ कस्येत्

१४५४ ४,२,०२६ शुक्राद्घन्

१४५५ ४,२,०२७ अपोनप्त्रपांनप्तृभ्यां घः

१४५६ ४,२,०२८ छ च

१४५७ ४,२,०२९ महेन्द्राद्घाणौ च

१४५८ ४,२,०३० सोमाट्ट्यण्

१४५९ ४,२,०३१ वाय्वृतुपित्रुषसो यत्

१४६० ४,२,०३२ द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च

१४६१ ४,२,०३३ अग्नेर्ढक्

१४६२ ४,२,०३४ कालेभ्यो भववत्

१४६३ ४,२,०३५ महाराजप्रोष्ठपदाट्ठञ्

१४६४ ४,२,०३६ पितृव्यमातुलपितामहमातामहाः

१४६५ ४,२,०३७ तस्य समूहः

१४६६ ४,२,०३८ भिक्षादिभ्योऽण्

१४६७ ४,२,०३९ गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ्

१४६८ ४,२,०४० केदाराद्यञ्च

१४६९ ४,२,०४१ ठञ्कवचिनश्च

१४७० ४,२,०४२ ब्राह्मणमाणववाडवाद्यत्

१४७१ ४,२,०४३ ग्रामजनबन्धुसहायेभ्यस्तल्

१४७२ ४,२,०४४ अनुदात्तादेरञ्

१४७३ ४,२,०४५ खण्डिकादिभ्यश्च

१४७४ ४,२,०४६ चरणेभ्यो धर्मवत्

१४७५ ४,२,०४७ अचित्तहस्तिधेनोष्ठक्

१४७६ ४,२,०४८ केशाश्वाभ्यां यञ्छावन्यतरस्याम्

१४७७ ४,२,०४९ पाशादिभ्यो यः

१४७८ ४,२,०५० खलगोरथात्

१४७९ ४,२,०५१ इनित्रकट्यचश्च

१४८० ४,२,०५२ विषयो देशे

१४८१ ४,२,०५३ राजन्यादिभ्यो वुञ्

१४८२ ४,२,०५४ भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ

१४८३ ४,२,०५५ सोऽस्यादिरिति छन्दसः प्रगाथेषु

१४८४ ४,२,०५६ संग्रामे प्रयोजनयोद्धृभ्यः

१४८५ ४,२,०५७ तदस्यां प्रहरणमिति क्रीडायां णः

१४८६ ४,२,०५८ घञः साऽस्यां क्रियेति ञः

१४८७ ४,२,०५९ तदधीते तद्वेद

१४८८ ४,२,०६० क्रतूक्थादि सूत्रान्ताट्ठक्

१४८९ ४,२,०६१ क्रमादिभ्यो वुन्

१४९० ४,२,०६२ अनुब्राह्मणादिनिः

१४९१ ४,२,०६३ वसन्तादिभ्यष्ठक्

१४९२ ४,२,०६४ प्रोक्ताल्लुक्

१४९३ ४,२,०६५ सूत्राच्च कोपधात्

१४९४ ५,२,०६६ छन्दोब्राह्मणानि च तद्विषयाणि

१४९५ ४,२,०६७ तदस्मिन्नस्तीति देशे तन्नाम्नि

१४९६ ४,२,०६८ तेन निर्वृत्तम्

१४९७ ४,२,०६९ तस्य निवासः

१४९८ ४,२,०७० अदूरभवश्च

१४९९ ४,२,०७१ ओरञ्

१५०० ४,२,०७२ मतोश्च बह्वजङ्गात्

१५०१ ४,२,०७३ बह्वचः कूपेषु

१५०२ ४,२,०७४ उदक्च विपाशः

१५०३ ४,२,०७५ संकलादिभ्यश्च

१५०४ ४,२,०७६ स्त्रीषु सौवीरसाल्वप्राक्षु

१५०५ ४,२,०७७ सुवास्त्वादिभ्योऽण्

१५०६ ४,२,०७८ रोणी

१५०७ ४,२,०७९ कोपधाच्च

१५०८ ४,२,०८०
वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिफिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबल पक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः

१५०९ ४,२,०८१ जनपदे लुप्

१५१० ४,२,०८२ वरणादिभ्यश्च

१५११ ४,२,०८३ शर्कराया वा

१५१२ ४,२,०८४ ठक्छौ च

१५१३ ४,२,०८५ नद्यां मतुप्

१५१४ ४,२,०८६ मध्वादिभ्यश्च

१५१५ ४,२,०८७ कुमुदनडवेतसेभ्यो ड्मतुप्

१५१६ ४,२,०८८ नडशादाड्ड्वलच्

१५१७ ४,२,०८९ शिखाया वलच्

१५१८ ४,२,०९० उत्करादिभ्यश्छः

१५१९ ४,२,०९१ नडादीनां कुक्च

१५२० ४,२,०९२ शेषे

१५२१ ४,२,०९३ राष्ट्रावारपाराद् घखौ

१५२२ ४,२,०९४ ग्रामाद्यखञौ

१५२३ ४,२,०९५ कत्त्र्यादिभ्यो ढकञ्

१५२४ ४,२,०९६ कुलकुक्षिग्रीवाभ्यः श्वास्यलंकारेषु

१५२५ ४,२,०९७ नद्यादिभ्यो ढक्

१५२६ ४,२,०९८ दक्षिणापश्चात्पुरसस्त्यक्

१५२७ ४,२,०९९ कापिश्याः ष्फक्

१५२८ ४,२,१०० रङ्कोरमनुष्येऽण्च

१५२९ ४,२,१०१ द्युप्रागपागुदक्प्रतीचो यत्

१५३० ४,२,१०२ कन्थायाष्ठक्

१५३१ ४,२,१०३ वर्णौ वुक्

१५३२ ४,२,१०४ अव्ययात् त्यप्

१५३३ ४,२,१०५ ऐषमोह्यःश्वसोऽन्यतरस्याम्

१५३४ ४,२,१०६ तीररूपोत्तरपदादञ्ञौ

१५३५ ४,२,१०७ दिक्पूर्वपदादसंज्ञायां ञः

१५३६ ४,२,१०८ मद्रेभ्योऽञ्

१५३७ ४,२,१०९ उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्

१५३८ ४,२,११० प्रस्थोत्तरपदपलद्यादिकोपधादण्

१५३९ ४,२,१११ कण्वादिभ्यो गोत्रे

१५४० ४,२,११२ इञश्च

१५४१ ४,२,११३ न द्व्यचः प्राच्यभरतेषु

१५४२ ४,२,११४ वृद्धाच्छः

१५४३ ४,२,११५ भवतष्ठक्छसौ

१५४४ ४,२,११६ काश्यादिभ्यष्ठञ्ञिठौ

१५४५ ४,२,११७ वाहीकग्रामेभ्यश्च

१५४६ ४,२,११८ विभाषोशीनरेषु

१५४७ ४,२,११९ ओर्देशे ठञ्

१५४८ ४,२,१२० वृद्धात्प्राचाम्

१५४९ ४,२,१२१ धन्वयोपधाद्वुञ्

१५५० ४,२,१२२ प्रस्थपुरवहान्ताच्च

१५५१ ४,२,१२३ रोपधेतोः प्राचाम्

१५५२ ४,२,१२४ जनपदतदवध्योश्च

१५५३ ४,२,१२५ अवृद्धादपि बहुवचनविषयात्

१५५४ ४,२,१२६ कच्छाग्निवक्त्रवर्त्तोत्तरपदात्

१५५५ ४,२,१२७ धूमादिभ्यश्च

१५५६ ४,२,१२८ नगरात्कुत्सनप्रावीण्ययोः

१५५७ ४,२,१२९ अरण्यान्मनुष्ये

१५५८ ४,२,१३० विभाषा कुरुयुगन्धराभ्याम्

१५५९ ४,२,१३१ मद्रवृज्योः कन्

१५६० ४,२,१३२ कोपधादण्

१५६१ ४,२,१३३ कच्छादिभ्यश्च

१५६२ ४,२,१३४ मनुष्यतत्स्थयोर्वुञ्

१५६३ ४,२,१३५ अपदातौ साल्वात्

१५६४ ४,२,१३६ गोयवाग्वोश्च

१५६५ ४,२,१३७ गर्तोत्तरपदाच्छः

१५६६ ४,२,१३८ गहादिभ्यश्च

१५६७ ४,२,१३९ प्राचां कटादेः

१५६८ ४,२,१४० राज्ञः क च

१५६९ ४,२,१४१ वृद्धादकेकान्तखोपधात्

१५७० ४,२,१४२ कन्थापलदनगरग्रामह्रदोत्तरपदात्

१५७१ ४,२,१४३ पर्वताच्च

१५७२ ४,२,१४४ विभाषाऽमनुष्ये

१५७३ ४,२,१४५ कृकणपर्णाद्भारद्वाजे

१५७४ ४,३,००१ युष्मदस्मदोरन्यतरस्यां खञ्च

१५७५ ४,३,००२ तस्मिन्नणि च युष्माकास्माकौ

१५७६ ४,३,००३ तवकममकावेकवचने

१५७७ ४,३,००४ अर्धाद्यत्

१५७८ ४,३,००५ परावराधमोत्तमपूर्वाच्च

१५७९ ४,३,००६ दिक्पूर्वपदाट्ठञ्च

१५८० ४,३,००७ ग्रामजनपदैकदेशादञ्ठञौ

१५८१ ४,३,००८ मध्यान्मः

१५८२ ४,३,००९ अ सांप्रतिके

१५८३ ४,३,०१० द्वीपादनुसमुद्रं यञ्

१५८४ ४,३,०११ कालाट्ठञ्

१५८५ ४,३,०१२ श्राद्धे शरदः

१५८६ ४,३,०१३ विभाषा रोगातपयोः

१५८७ ४,३,०१४ निशाप्रदोषाभ्यां च

१५८८ ४,३,०१५ श्वसस्तुट्च

१५८९ ४,३,०१६ सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्

१५९० ४,३,०१७ प्रावृष एण्यः

१५९१ ४,३,०१८ वर्षाभ्यष्ठक्

१५९२ ४,३,०१९ छन्दसि ठञ्

१५९३ ४,३,०२० वसन्ताच्च

१५९४ ४,३,०२१ हेमन्ताच्च

१५९५ ४,३,०२२ सर्वत्राण्च तलोपश्च

१५९६ ४,३,०२३ सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट्च

१५९७ ४,३,०२४ विभाषा पूर्वाह्णापराह्णाभ्याम्

१५९८ ४,३,०२५ तत्र जातः

१५९९ ४,३,०२६ प्रावृषष्ठप्

१६०० ४,३,०२७ संज्ञायां शरदो वुञ्

१६०१ ४,३,०२८ पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन्

१६०२ ४,३,०२९ पथः पन्थ च

१६०३ ४,३,०३० अमावास्याया वा

१६०४ ४,३,०३१ अ च

१६०५ ४,३,०३२ सिन्ध्वपकराभ्यां कन्

१६०६ ४,३,०३३ अणञौ च

१६०७ ४,३,०३४ श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुगस्तविशाखाऽषाढाबहुलाल्लुक्

१६०८ ४,३,०३५ स्थानान्तगोशालखरशालाच्च

१६०९ ४,३,०३६ वत्सशालाभिजिदश्वयुक्छतभिषजो वा

१६१० ४,३,०३७ नक्षत्रेभ्यो बहुलम्

१६११ ४,३,०३८ कृतलब्धक्रीतकुशलाः

१६१२ ४,३,०३९ प्रायभवः

१६१३ ४,३,०४० उपजानूपकर्णोपनीवेष्ठक्

१६१४ ४,३,०४१ संभूते

१६१५ ४,३,०४२ कोशाड्ढञ्

१६१६ ४,३,०४३ कालात्साधुपुष्प्यत्पच्यमानेषु

१६१७ ४,३,०४४ उप्ते च

१६१८ ४,३,०४५ आश्वयुज्या वुञ्

१६१९ ४,३,०४६ ग्रीष्मवसन्तादन्यतरस्याम्

१६२० ४,३,०४७ देयमृणे

१६२१ ४,३,०४८ कलाप्यश्वत्थयवबुसाद्वुन्

१६२२ ४,३,०४९ ग्रीष्मावरसमाद्वुञ्

१६२३ ४,३,०५० संवत्सराग्रहायणीभ्यां ठञ्च

१६२४ ४,३,०५१ व्याहरति मृगः

१६२५ ४,३,०५२ तदस्य सोढम्

१६२६ ४,३,०५३ तत्र भवः

१६२७ ४,३,०५४ दिगादिभ्यो यत्

१६२८ ४,३,०५५ शरीरावयवाच्च

१६२९ ४,३,०५६ दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्

१६३० ४,३,०५७ ग्रीवाभ्योऽण्च

१६३१ ४,३,०५८ गंभीराञ्ज्यः

१६३२ ४,३,०५९ अव्ययीभावाच्च

१६३३ ४,३,०६० अन्तःपूर्वपदाट्ठञ्

१६३४ ४,३,०६१ ग्रामात्पर्यनुपूर्वात्

१६३५ ४,३,०६२ जिह्वामूलाङ्गुलेश्छः

१६३६ ४,३,०६३ वर्गान्ताच्च

१६३७ ४,३,०६४ अशब्दे यत्खावन्यतरस्याम्

१६३८ ४,३,०६५ कर्णललाटात्कनलंकारे

१६३९ ४,३,०६६ तस्य व्याख्यान इति च व्याख्यातनाम्नः

१६४० ४,३,०६७ बह्वचोऽन्तोदात्ताट्ठञ्

१६४१ ४,३,०६८ क्रतुयज्ञेभ्यश्च

१६४२ ४,३,०६९ अध्यायेष्वेवर्षेः

१६४३ ४,३,०७० पौरोडाशपुरोडाशात्ष्ठन्

१६४४ ४,३,०७१ छन्दसो यदणौ

१६४५ ४,३,०७२ द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक्

१६४६ ४,३,०७३ अणृगयनादिभ्यः

१६४७ ४,३,०७४ तत आगतः

१६४८ ४,३,०७५ ठगायस्थानेभ्यः

१६४९ ४,३,०७६ शुण्डिकादिभ्योऽण्

१६५० ४,३,०७७ विद्यायोनिसंबन्धेभ्यो वुञ्

१६५१ ४,३,०७८ ऋतष्ठञ्

१६५२ ४,३,०७९ पितुर्यच्च

१६५३ ४,३,०८० गोत्रादङ्कवत्

१६५४ ४,३,०८१ हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः

१६५५ ४,३,०८२ मयट्च

१६५६ ४,३,०८३ प्रभवति

१६५७ ४,३,०८४ विदूराञ्ञ्यः

१६५८ ४,३,०८५ तद्गच्छति पथिदूतयोः

१६५९ ४,३,०८६ अभिनिष्क्रामति द्वारम्

१६६० ४,३,०८७ अधिकृत्य कृते ग्रन्थे

१६६१ ४,३,०८८ शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः

१६६२ ४,३,०८९ सोऽस्य निवासः

१६६३ ४,३,०९० अभिजनश्च

१६६४ ४,३,०९१ आयुधजीविभ्यश्छः पर्वते

१६६५ ४,३,०९२ शण्डिकादिभ्यो ञ्यः

१६६६ ४,३,०९३ सिन्धुतक्षशिलादिभ्योऽणञौ

१६६७ ४,३,०९४ तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः

१६६८ ४,३,०९५ भक्तिः

१६६९ ४,३,०९६ अचित्तादेशकालाट्ठक्

१६७० ४,३,०९७ महाराजाट्ठञ्

१६७१ ४,३,०९८ वासुदेवार्जुनाभ्यां वुन्

१६७२ ४,३,०९९ गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ्

१६७३ ४,३,१०० जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने

१६७४ ४,३,१०१ तेन प्रोक्तम्

१६७५ ४,३,१०२ तित्तिरिवरतन्तुखण्डिकोखाच्छण्

१६७६ ४,३,१०३ काश्यपकौशिकाभ्यामृषिभ्यां णिनिः

१६७७ ४,३,१०४ कलापिवैशम्पायनान्तेवासिभ्यश्च

१६७८ ४,३,१०५ पुराणप्रोक्तेषु ब्राह्मणकल्पेषु

१६७९ ४,३,१०६ शौनकादिभ्यश्छन्दसि

१६८० ४,३,१०७ कठचरकाल्लुक्

१६८१ ४,३,१०८ कलापिनोऽण्

१६८२ ४,३,१०९ छगलिनो ढिनुक्

१६८३ ४,३,११० पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः

१६८४ ४,३,१११ कर्मन्दकृशाश्वादिनिः

१६८५ ४,३,११२ तेनैकदिक्

१६८६ ४,३,११३ तसिश्च

१६८७ ४,३,११४ उरसो यच्च

१६८८ ४,३,११५ उपज्ञाते

१६८९ ४,३,११६ कृते ग्रन्थे

१६९० ४,३,११७ संज्ञायाम्

१६९१ ४,३,११८ कुलालादिभ्यो वुञ्

१६९२ ४,३,११९ क्षुद्राभ्रमरवटरपादपादञ्

१६९३ ४,३,१२० तस्येदम्

१६९४ ४,३,१२१ रथाद्यत्

१६९५ ४,३,१२२ पत्रपूर्वादञ्

१६९६ ४,३,१२३ पत्राध्वर्युपरिषदश्च

१६९७ ४,३,१२४ हलसीराट्ठक्

१६९८ ४,३,१२५ द्वन्द्वाद्वुन्वैरमैथुनिकयोः

१६९९ ४,३,१२६ गोत्रचरणाद्वुञ्

१७०० ४,३,१२७ सङ्घाङ्कलक्षणेष्वञ्यञिञामण्

१७०१ ४,३,१२८ शाकलाद्वा

१७०२ ४,३,१२९ छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः

१७०३ ४,३,१३० न दण्डमाणवान्तेवासिषु

१७०४ ४,३,१३१ रैवतिकादिभ्यश्छः

१७०५ ४,३,१३२ कौपिञ्जलहास्तिपदादण्

१७०६ ४,३,१३३ आथर्वणिकस्येकलोपश्च

१७०७ ४,३,१३४ तस्य विकारः

१७०८ ४,३,१३५ अवयवे च प्राण्योषधिवृक्षेभ्यः

१७०९ ४,३,१३६ बिल्वादिभ्योऽण्

१७१० ४,३,१३७ कोपधाच्च

१७११ ४,३,१३८ त्रपुजतुनोः षुक्

१७१२ ४,३,१३९ ओरञ्

१७१३ ४,३,१४० अनुदात्तादेश्च

१७१४ ४,३,१४१ पलाशादिभ्यो वा

१७१५ ४,३,१४२ शम्याः ष्ट्लञ्

१७१६ ४,३,१४३ मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः

१७१७ ४,३,१४४ नित्यं वृद्धशरादिभ्यः

१७१८ ४,३,१४५ गोश्च पुरीषे

१७१९ ४,३,१४६ पिष्टाच्च

१७२० ४,३,१४७ संज्ञायां कन्

१७२१ ४,३,१४८ व्रीहेः पुरोडाशे

१७२२ ४,३,१४९ असंज्ञायां तिलयवाभ्याम्

१७२३ ४,३,१५० द्व्यचश्छन्दसि

१७२४ ४,३,१५१ नोत्वद्वर्ध्रबिल्वात्

१७२५ ४,३,१५२ तालादिभ्योऽण्

१७२६ ४,३,१५३ जातरूपेभ्यः परिमाणे

१७२७ ४,३,१५४ प्राणिरजतादिभ्योऽञ्

१७२८ ४,३,१५५ ञितश्च तत्प्रत्ययात्

१७२९ ४,३,१५६ क्रीतवत्परिमाणात्

१७३० ४,३,१५७ उष्ट्राद्वुञ्

१७३१ ४,३,१५८ उमोर्णयोर्वा

१७३२ ४,३,१५९ एण्या ढञ्

१७३३ ४,३,१६० गोपयसोर्यत्

१७३४ ४,३,१६१ द्रोश्च

१७३५ ४,३,१६२ माने वयः

१७३६ ४,३,१६३ फले लुक्

१७३७ ४,३,१६४ प्लक्षादिभ्योऽण्

१७३८ ४,३,१६५ जम्ब्वा वा

१७३९ ४,३,१६६ लुप् च

१७४० ४,३,१६७ हरीतक्यादिभ्यश्च

१७४१ ४,३,१६८ कंसीयपरशव्ययोर्यञञौ लुक्च

१७४२ ४,४,००१ प्राग्वहतेष्ठक्

१७४३ ४,४,००२ तेन दीव्यतिखनतिजयतिजितम्

१७४४ ४,४,००३ संस्कृतम्

१७४५ ४,४,००४ कुलत्थकोपधादण्

१७४६ ४,४,००५ तरति

१७४७ ४,४,००६ गोपुच्छाट्ठञ्

१७४८ ४,४,००७ नौद्व्यचष्ठन्

१७४९ ४,४,००८ चरति

१७५० ४,४,००९ आकर्षात्ष्ठल्

१७५१ ४,४,०१० पर्पादिभ्यः ष्ठन्

१७५२ ४,४,०११ श्वगणाट्ठञ्च

१७५३ ४,४,०१२ वेतनादिभ्यो जीवति

१७५४ ४,४,०१३ वस्नक्रयविक्रयाट्ठन्

१७५५ ४,४,०१४ आयुधाच्छ च

१७५६ ४,४,०१५ हरत्युत्सङ्गादिभ्यः

१७५७ ४,४,०१६ भस्त्रादिभ्यः ष्ठन्

१७५८ ४,४,०१७ विभाषा विवधात्

१७५९ ४,४,०१८ अण्कुटिलिकायाः

१७६० ४,४,०१९ निर्वृत्तेऽक्षद्यूतादिभ्यः

१७६१ ४,४,०२० क्त्रेर्मम्नित्यम्

१७६२ ४,४,०२१ अपमित्ययाचिताभ्यां कक्कनौ

१७६३ ४,४,०२२ संसृष्टे

१७६४ ४,४,०२३ चूर्णादिनिः

१७६५ ४,४,०२४ लवणाल्लुक्

१७६६ ४,४,०२५ मुद्गादण्

१७६७ ४,४,०२६ व्यञ्जनैरुपसिक्ते

१७६८ ४,४,०२७ ओजःसहोऽम्भसा वर्तते

१७६९ ४,४,०२८ तत्प्रत्यनुपूर्वमीपलोमकूलम्

१७७० ४,४,०२९ परिमुखं च

१७७१ ४,४,०३० प्रयच्छति गर्ह्यम्

१७७२ ४,४,०३१ कुसीददशैकादशात्ष्ठन्ष्ठचौ

१७७३ ४,४,०३२ उञ्छति

१७७४ ४,४,०३३ रक्षति

१७७५ ४,४,०३४ शब्ददर्दुरं करोति

१७७६ ४,४,०३५ पक्षिमत्स्यमृगान् हन्ति

१७७७ ४,४,०३६ परिपन्थं च तिष्ठति

१७७८ ४,४,०३७ माथोत्तरपदपदव्यनुपदं धावति

१७७९ ४,४,०३८ आक्रन्दाट्ठञ्च

१७८० ४,४,०३९ पदोत्तरपदं गृह्णाति

१७८१ ४,४,०४० प्रतिकण्ठार्थललामं च

१७८२ ४,४,०४१ धर्मं चरति

१७८३ ४,४,०४२ प्रतिपथमेति ठंश्च

१७८४ ४,४,०४३ समवायान् समवैति

१७८५ ४,४,०४४ परिषदो ण्यः

१७८६ ४,४,०४५ सेनाया वा

१७८७ ४,४,०४६ संज्ञायां ललाटकुक्कुट्यौ पश्यति

१७८८ ४,४,०४७ तस्य धर्म्यम्

१७८९ ४,४,०४८ अण्महिष्यादिभ्यः

१७९० ४,४,०४९ ऋतोऽञ्

१७९१ ४,४,०५० अवक्रयः

१७९२ ४,४,०५१ तदस्य पण्यम्

१७९३ ४,४,०५२ लवणाट्ठञ्

१७९४ ४,४,०५३ किसरादिभ्यः ष्ठन्

१७९५ ४,४,०५४ शलालुनोऽन्यतरस्याम्

१७९६ ४,४,०५५ शिल्पम्

१७९७ ४,४,०५६ मड्डुकझर्झरादणन्यतरस्याम्

१७९८ ४,४,०५७ प्रहरणम्

१७९९ ४,४,०५८ परश्वधाट्ठञ् च

१८०० ४,४,०५९ शक्तियष्ट्योरीकक्

१८०१ ४,४,०६० अस्ति नास्ति दिष्टं मतिः

१८०२ ४,४,०६१ शीलम्

१८०३ ४,४,०६२ छत्त्रादिभ्यो णः

१८०४ ४,४,०६३ कर्माध्ययने वृत्तम्

१८०५ ४,४,०६४ बह्वच्पूर्वपदाट्ठञ्

१८०६ ४,४,०६५ हितं भक्षाः

१८०७ ४,४,०६६ तदस्मै दीयते नियुक्तम्

१८०८ ४,४,०६७ श्राणामांसौदनाट्टिठन्

१८०९ ४,४,०६८ भक्तादणन्यतरस्याम्

१८१० ४,४,०६९ तत्र नियुक्तः

१८११ ४,४,०७० अगारान्ताट्ठन्

१८१२ ४,४,०७१ अध्यायिन्यदेशकालात्

१८१३ ४,४,०७२ कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति

१८१४ ४,४,०७३ निकटे वसति

१८१५ ४,४,०७४ आवसथात् ष्ठल्

१८१६ ४,४,०७५ प्राग्घिताद्यत्

१८१७ ४,४,०७६ तद्वहति रथयुगप्रासङ्गम्

१८१८ ४,४,०७७ धुरो यड्ढकौ

१८१९ ४,४,०७८ खः सर्वधुरात्

१८२० ४,४,०७९ एकधुराल्लुक्च

१८२१ ४,४,०८० शकटादण्

१८२२ ४,४,०८१ हलसीराट्ठक्

१८२३ ४,४,०८२ संज्ञायां जन्याः

१८२४ ४,४,०८३ विध्यत्यधनुषा

१८२५ ४,४,०८४ धनगणं लब्धा

१८२६ ४,४,०८५ अन्नाण्णः

१८२७ ४,४,०८६ वशं गतः

१८२८ ४,४,०८७ पदमस्मिन् दृश्यम्

१८२९ ४,४,०८८ मूलमस्याबर्हि

१८३० ४,४,०८९ संज्ञायां धेनुष्या

१८३१ ४,४,०९० गृहपतिना संयुक्ते ञ्यः

१८३२ ४,४,०९१ नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु

१८३३ ४,४,०९२ धर्मपथ्यर्थन्यायादनपेते

१८३४ ४,४,०९३ छन्दसो निर्मिते

१८३५ ४,४,०९४ उरसोऽण् च

१८३६ ४,४,०९५ हृदयस्य प्रियः

१८३७ ४,४,०९६ बन्धने चर्षौ

१८३८ ४,४,०९७ मतजनहलात्करणजल्पकर्षेषु

१८३९ ४,४,०९८ तत्र साधुः

१८४० ४,४,०९९ प्रतिजनादिभ्यः खञ्

१८४१ ४,४,१०० भक्ताण्णः

१८४२ ४,४,१०१ परिषदो ण्यः

१८४३ ४,४,१०२ कथादिभ्यष्ठक्

१८४४ ४,४,१०३ गुडादिभ्यष्ठञ्

१८४५ ४,४,१०४ पथ्यतिथिवसतिस्वपतेर्ढञ्

१८४६ ४,४,१०५ सभाया यः

१८४७ ४,४,१०६ ढश्छन्दसि

१८४८ ४,४,१०७ समानतीर्थे वासी

१८४९ ४,४,१०८ समानोदरे शयित ओ चोदात्तः

१८५० ४,४,१०९ सोदराद्यः

१८५१ ४,४,११० भवे छन्दसि

१८५२ ४,४,१११ पाथोनदीभ्यां ड्यण्

१८५३ ४,४,११२ वेशन्तहिमवद्भ्यामण्

१८५४ ४,४,११३ स्रोतसो विभाषा ड्यड्ड्यौ

१८५५ ४,४,११४ सगर्भसयूथसनुताद्यन्

१८५६ ४,४,११५ तुग्राद्घन्

१८५७ ४,४,११६ अग्राद्यत्

१८५८ ४,४,११७ घच्छौ च

१८५९ ४,४,११८ समुद्राभ्राद्घः

१८६० ४,४,११९ बर्हिषि दत्तम्

१८६१ ४,४,१२० दूतस्य भागकर्मणि

१८६२ ४,४,१२१ रक्षोयातूनां हननी

१८६३ ४,४,१२२ रेवतीजगतीहविष्याभ्यः प्रशस्ये

१८६४ ४,४,१२३ असुरस्य स्वम्

१८६५ ४,४,१२४ मायायामण्

१८६६ ४,४,१२५ तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक्च मतोः

१८६७ ४,४,१२६ अश्विमानण्

१८६८ ४,४,१२७ वयस्यासु मूर्ध्नो मतुप्

१८६९ ४,४,१२८ मत्वर्थे मासतन्वोः

१८७० ४,४,१२९ मधोर्ञ च

१८७१ ४,४,१३० ओजसोऽहनि यत्खौ

१८७२ ४,४,१३१ वेशोयशआदेर्भगाद्यल्

१८७३ ४,४,१३२ ख च

१८७४ ४,४,१३३ पूर्वैःकृतमिनियौ च

१८७५ ४,४,१३४ अद्भिः संस्कृतम्

१८७६ ४,४,१३५ सहस्रेण सम्मितौ घः

१८७७ ४,४,१३६ मतौ च

१८७८ ४,४,१३७ सोममर्हति यः

१८७९ ४,४,१३८ मये च

१८८० ४,४,१३९ मधोः

१८८१ ४,४,१४० वसोः समूहे च

१८८२ ४,४,१४१ नक्षत्राद्घः

१८८३ ४,४,१४२ सर्वदेवात्तातिल्

१८८४ ४,४,१४३ शिवशमरिष्टस्य करे

१८८५ ४,४,१४४ भावे च

१८८६ ५,१,००१ प्राक्क्रीताच्छः

१८८७ ५,१,००२ उगवादिभ्यो यत्

१८८८ ५,१,००३ कम्बलाच्च संज्ञायाम्

१८८९ ५,१,००४ विभाषा हविरपूपादिभ्यः

१८९० ५,१,००५ तस्मै हितम्

१८९१ ५,१,००६ शरीरावयवाद्यत्

१८९२ ५,१,००७ खलयवमाषतिलवृषब्रह्मणश्च

१८९३ ५,१,००८ अजाविभ्यां थ्यन्

१८९४ ५,१,००९ आत्मन्विश्वजनभोगोत्तरपदात्खः

१८९५ ५,१,०१० सर्वपुरुषाभ्यां णढञौ

१८९६ ५,१,०११ माणवचरकाभ्यां खञ्

१८९७ ५,१,०१२ तदर्थं विकृतेः प्रकृतौ

१८९८ ५,१,०१३ छदिरुपधिबलेर्ढञ्

१८९९ ५,१,०१४ ऋषभोपानहोर्ञ्यः

१९०० ५,१,०१५ चर्मणोऽञ्

१९०१ ५,१,०१६ तदस्य तदस्मिन् स्यादिति

१९०२ ५,१,०१७ परिखाया ढञ्

१९०३ ५,१,०१८ प्राग्वतेष्ठञ्

१९०४ ५,१,०१९ आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्

१९०५ ५,१,०२० असमासे निष्कादिभ्यः

१९०६ ५,१,०२१ शताच्च ठन्यतावशते

१९०७ ५,१,०२२ संख्याया अतिशदन्तायाः कन्

१९०८ ५,१,०२३ वतोरिड्वा

१९०९ ५,१,०२४ विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायाम्

१९१० ५,१,०२५ कंसाट्टिठन्

१९११ ५,१,०२६ शूर्पादञन्यतरस्याम्

१९१२ ५,१,०२७ शतमानविंशतिकसहस्रवसनादण्

१९१३ ५,१,०२८ अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्

१९१४ ५,१,०२९ विभाषा कार्षापणसहस्राभ्याम्

१९१५ ५,१,०३० द्वित्रिपूर्वान्निष्कात्

१९१६ ५,१,०३१ बिस्ताच्च

१९१७ ५,१,०३२ विंशतिकात्खः

१९१८ ५,१,०३३ खार्या ईकन्

१९१९ ५,१,०३४ पणपादमाषशताद्यत्

१९२० ५,१,०३५ शाणाद्वा

१९२१ ५,१,०३६ द्वित्रिपूर्वादण्च

१९२२ ५,१,०३७ तेन क्रीतम्

१९२३ ५,१,०३८ तस्य निमित्तं संयोगोत्पातौ

१९२४ ५,१,०३९ गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत्

१९२५ ५,१,०४० पुत्राच्छ च

१९२६ ५,१,०४१ सर्वभूमिपृथिवीभ्यामणञौ

१९२७ ५,१,०४२ तस्येश्वरः

१९२८ ५,१,०४३ तत्र विदित इति च

१९२९ ५,१,०४४ लोकसर्वलोकाट्ठञ्

१९३० ५,१,०४५ तस्य वापः

१९३१ ५,१,०४६ पात्रात् ष्ठन्

१९३२ ५,१,०४७ तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते

१९३३ ५,१,०४८ पूरणार्धाट्ठन्

१९३४ ५,१,०४९ भागाद्यच्च

१९३५ ५,१,०५० तद्धरति वहत्यावहति भाराद्वंशादिभ्यः

१९३६ ५,१,०५१ वस्नद्रव्याभ्यां ठन्कनौ

१९३७ ५,१,०५२ संभवत्यवहरति पचति

१९३८ ५,१,०५३ आढकाचितपात्रात्खोऽन्यतरस्याम्

१९३९ ५,१,०५४ द्विगोः ष्ठंश्च

१९४० ५,१,०५५ कुलिजाल्लुक्खौ च

१९४१ ५,१,०५६ सोऽस्यांशवस्नभृतयः

१९४२ ५,१,०५७ तदस्य परिमाणम्

१९४३ ५,१,०५८ संख्यायाः संज्ञासंघसूत्राध्ययनेषु

१९४४ ५,१,०५९ पंक्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्

१९४५ ५,१,०६० पञ्चद्दशतौ वर्गे वा

१९४६ ५,१,०६१ सप्तनोऽञ्छन्दसि

१९४७ ५,१,०६२ त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण्

१९४८ ५,१,०६३ तदर्हति

१९४९ ५,१,०६४ छेदादिभ्यो नित्यम्

१९५० ५,१,०६५ शीर्षच्छेदाद्यच्च

१९५१ ५,१,०६६ दण्डादिभ्यो यः

१९५२ ५,१,०६७ छन्दसि च

१९५३ ५,१,०६८ पात्राद्घंश्च

१९५४ ५,१,०६९ कडङ्करदक्षिणाच्छ च

१९५५ ५,१,०७० स्थालीबिलात्

१९५६ ५,१,०७१ यज्ञर्त्विग्भ्यां घखञौ

१९५७ ५,१,०७२ पारायणतुरायणचान्द्रायणं वर्तयति

१९५८ ५,१,०७३ संशयमापन्नः

१९५९ ५,१,०७४ योजनं गच्छति

१९६० ५,१,०७५ पथः ष्कन्

१९६१ ५,१,०७६ पन्थो ण नित्यम्

१९६२ ५,१,०७७ उत्तरपथेनाहृतं च

१९६३ ५,१,०७८ कालात्

१९६४ ५,१,०७९ तेन निर्वृत्तम्

१९६५ ५,१,०८० तमधीष्टो भृतो भूतो भावी

१९६६ ५,१,०८१ मासाद्वयसि यत्खौ

१९६७ ५,१,०८२ द्विगोर्यप्

१९६८ ५,१,०८३ षण्मासाण्ण्यच्च

१९६९ ५,१,०८४ अवयसि ठंश्च

१९७० ५,१,०८५ समायाः खः

१९७१ ५,१,०८६ द्विगोर्वा

१९७२ ५,१,०८७ रात्र्यहःसंवत्सराच्च

१९७३ ५,१,०८८ वर्षाल्लुक्च

१९७४ ५,१,०८९ चित्तवति नित्यम्

१९७५ ५,१,०९० षष्टिकाः षष्टिरात्रेण पच्यन्ते

१९७६ ५,१,०९१ वत्सरान्ताच्छश्छन्दसि

१९७७ ५,१,०९२ संपरिपूर्वात्ख च

१९७८ ५,१,०९३ तेन परिजय्यलभ्यकार्यसुकरम्

१९७९ ५,१,०९४ तदस्य ब्रह्मचर्यम्

१९८० ५,१,०९५ तस्य च दक्षिणा यज्ञाख्येभ्यः

१९८१ ५,१,०९६ तत्र च दीयते कार्यं भववत्

१९८२ ५,१,०९७ व्युष्टादिभ्योऽण्

१९८३ ५,१,०९८ तेन यथाकथा च हस्ताभ्यां णयतौ

१९८४ ५,१,०९९ संपादिनि

१९८५ ५,१,१०० कर्मवेषाद्यत्

१९८६ ५,१,१०१ तस्मै प्रभवति संतापादिभ्यः

१९८७ ५,१,१०२ योगाद्यच्च

१९८८ ५,१,१०३ कर्मण उकञ्

१९८९ ५,१,१०४ समयस्तदस्य प्राप्तम्

१९९० ५,१,१०५ ऋतोरण्

१९९१ ५,१,१०६ छन्दसि घस्

१९९२ ५,१,१०७ कालाद्यत्

१९९३ ५,१,१०८ प्रकृष्टे ठञ्

१९९४ ५,१,१०९ प्रयोजनम्

१९९५ ५,१,११० विशाखाषाढादण्मन्थदण्डयोः

१९९६ ५,१,१११ अनुप्रवचनादिभ्यश्छः

१९९७ ५,१,११२ समापनात्सपूर्वपदात्

१९९८ ५,१,११३ ऐकागारिकट् चौरे

१९९९ ५,१,११४ आकालिकडाद्यन्तवचने

२००० ५,१,११५ तेन तुल्यं क्रिया चेद्वतिः

२००१ ५,१,११६ तत्र तस्येव

२००२ ५,१,११७ तदर्हम्

२००३ ५,१,११८ उपसर्गाच्छन्दसि धात्वर्थे

२००४ ५,१,११९ तस्य भावस्त्वतलौ

२००५ ५,१,१२० आ च त्वात्

२००६ ५,१,१२१ न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटयुधकतरसलसेभ्यः

२००७ ५,१,१२२ पृथ्वादिभ्य इमनिज्वा

२००८ ५,१,१२३ वर्ण दृढादिभ्यः ष्यञ्च

२००९ ५,१,१२४ गुणवचनब्राह्मणआदिभ्यः कर्मणि च

२०१० ५,१,१२५ स्तेनाद्यन्नलोपश्च

२०११ ५,१,१२६ सख्युर्यः

२०१२ ५,१,१२७ कपिज्ञात्योर्ढक्

२०१३ ५,१,१२८ पत्यन्तपुरोहितादिभ्यो यत्

२०१४ ५,१,१२९ प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्

२०१५ ५,१,१३० हायनान्तयुवादिभ्योऽण्

२०१६ ५,१,१३१ इगन्ताच्च लघुपूर्वात्

२०१७ ५,१,१३२ योपधाद्गुरूपोत्तमाद्वुञ्

२०१८ ५,१,१३३ द्वन्द्वमनोज्ञादिभ्यश्च

२०१९ ५,१,१३४ गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु

२०२० ५,१,१३५ होत्राभ्यश्छः

२०२१ ५,१,१३६ ब्रह्मणस्त्वः

२०२२ ५,२,००१ धान्यानां भवने क्षेत्रे खञ्

२०२३ ५,२,००२ व्रीहिशाल्योर्ढक्

२०२४ ५,२,००३ यवयवकषष्टिकाद्यत्

२०२५ ५,२,००४ विभाषा तिलमाषोमाभङ्गाणुभ्यः

२०२६ ५,२,००५ सर्वचर्मणः कृतः खखञौ

२०२७ ५,२,००६ यथामुखसंमुखस्य दर्शनः खः

२०२८ ५,२,००७ तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति

२०२९ ५,२,००८ आप्रपदं प्राप्नोति

२०३० ५,२,००९ अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु

२०३१ ५,२,०१० परोवरपरम्परपुत्रपौत्रमनुभवति

२०३२ ५,२,०११ अवारपारात्यन्तानुकामं गामी

२०३३ ५,२,०१२ समांसमां विजायते

२०३४ ५,२,०१३ अद्यश्वीनाऽवष्टब्धे

२०३५ ५,२,०१४ आगवीनः

२०३६ ५,२,०१५ अनुग्वलंगामी

२०३७ ५,२,०१६ अध्वनो यत्खौ

२०३८ ५,२,०१७ अभ्यमित्राच्छ च

२०३९ ५,२,०१८ गोष्ठात्खञ् भूतपूर्वे

२०४० ५,२,०१९ अश्वस्यैकाहगमः

२०४१ ५,२,०२० शालीनकौपीने अधृष्टाकार्ययोः

२०४२ ५,२,०२१ व्रातेन जीवति

२०४३ ५,२,०२२ साप्तपदीनं सख्यम्

२०४४ ५,२,०२३ हैयङ्गवीनं संज्ञायाम्

२०४५ ५,२,०२४ तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ

२०४६ ५,२,०२५ पक्षात्तिः

२०४७ ५,२,०२६ तेन वित्तश्चुञ्चुप्चणपौ

२०४८ ५,२,०२७ विनञ्भ्यां नानाञौ न सह

२०४९ ५,२,०२८ वेः शालच्छङ्कटचौ

२०५० ५,२,०२९ संप्रोदश्च कटच्

२०५१ ५,२,०३० अवात्कुटारच्च

२०५२ ५,२,०३१ नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः

२०५३ ५,२,०३२ नेर्बिडज्बिरीसचौ

२०५४ ५,२,०३३ इनच्पिटच्चिकचि च

२०५५ ५,२,०३४ उपाधिभ्यां त्यकन्नासन्नारूढयोः

२०५६ ५,२,०३५ कर्मणि घटोऽठच्

२०५७ ५,२,०३६ तदस्य संजातं तारकादिभ्य इतच्

२०५८ ५,२,०३७ प्रमाणे द्वयसज्दघ्नञ्मात्रचः

२०५९ ५,२,०३८ पुरुष हस्तिभ्यामण्च

२०६० ५,२,०३९ यत्तदेतेभ्यः परिमाणे वतुप्

२०६१ ५,२,०४० किमिदम्भ्यां वो घः

२०६२ ५,२,०४१ किमः संख्यापरिमाणे डति च

२०६३ ५,२,०४२ संख्याया अवयवे तयप्

२०६४ ५,२,०४३ द्वित्रिभ्यां तयस्यायज्वा

२०६५ ५,२,०४४ उभादुदात्तो नित्यम्

२०६६ ५,२,०४५ तदस्मिन्नधिकमिति दशान्ताड्डः

२०६७ ५,२,०४६ शदन्त विंशतेश्च

२०६८ ५,२,०४७ संख्याया गुणस्य निमाने मयट्

२०६९ ५,२,०४८ तस्य पूरणे डट्

२०७० ५,२,०४९ नान्तादसंख्यादेर्मट्

२०७१ ५,२,०५० थट् च च्छन्दसि

२०७२ ५,२,०५१ षट्कतिकतिपयचतुरां थुक्

२०७३ ५,२,०५२ बहुपूगगणसंघस्य तिथुक्

२०७४ ५,२,०५३ वतोरिथुक्

२०७५ ५,२,०५४ द्वेस्तीयः

२०७६ ५,२,०५५ त्रेः सम्प्रसारणं च

२०७७ ५,२,०५६ विंशत्यादिभ्यस्तमडन्यतरस्याम्

२०७८ ५,२,०५७ नित्यं शतादिमासार्धमाससंवत्सराच्च

२०७९ ५,२,०५८ षष्ट्यादेश्चासंख्यादेः

२०८० ५,२,०५९ मतौ छः सूक्तसाम्नोः

२०८१ ५,२,०६० अध्यायानुवाकयोर्लुक्

२०८२ ५,२,०६१ विमुक्तादिभ्योऽण्

२०८३ ५,२,०६२ गोषदादिभ्यो वुन्

२०८४ ५,२,०६३ तत्र कुशलः पथः

२०८५ ५,२,०६४ आकर्षादिभ्यः कन्

२०८६ ५,२,०६५ धनहिरण्यात्कामे

२०८७ ५,२,०६६ स्वाङ्गेभ्यः प्रसिते

२०८८ ५,२,०६७ उदराट्ठगाद्यूने

२०८९ ५,२,०६८ सस्येन परिजातः

२०९० ५,२,०६९ अंशं हारी

२०९१ ५,२,०७० तन्त्रादचिरापहृते

२०९२ ५,२,०७१ ब्राह्मणकोष्णिके संज्ञायाम्

२०९३ ५,२,०७२ शीतोष्णाभ्यां कारिणि

२०९४ ५,२,०७३ अधिकम्

२०९५ ५,२,०७४ अनुकाभिकाभीकः कमिता

२०९६ ५,२,०७५ पार्श्वेनान्विच्छति

२०९७ ५,२,०७६ अयःशूलदण्डाजिनाभ्यां ठक्ठञौ

२०९८ ५,२,०७७ तावतिथं ग्रहणमिति लुग्वा

२०९९ ५,२,०७८ स एषां ग्रामणीः

२१०० ५,२,०७९ शृङ्खलमस्य बन्धनं करभे

२१०१ ५,२,०८० उत्क उन्मनाः

२१०२ ५,२,०८१ कालप्रयोजनाद्रोगे

२१०३ ५,२,०८२ तदस्मिन्नन्नं प्राये संज्ञायाम्

२१०४ ५,२,०८३ कुल्माषादञ्

२१०५ ५,२,०८४ श्रोत्रियंश्छन्दोऽधीते

२१०६ ५,२,०८५ श्राद्धमनेन भुक्तमिनिठनौ

२१०७ ५,२,०८६ पूर्वादिनिः

२१०८ ५,२,०८७ सपूर्वाच्च

२१०९ ५,२,०८८ इष्टादिभ्यश्च

२११० ५,२,०८९ छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि

२१११ ५,२,०९० अनुपद्यन्वेष्टा

२११२ ५,२,०९१ साक्षाद्द्रष्टरि संज्ञायाम्

२११३ ५,२,०९२ क्षेत्रियच् परक्षेत्रे चिकित्स्यः

२११४ ५,२,०९३ इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा

२११५ ५,२,०९४ तदस्यास्त्यस्मिन्निति मतुप्

२११६ ५,२,०९५ रसादिभ्यश्च

२११७ ५,२,०९६ प्राणिस्थादातो लजन्यतरस्याम्

२११८ ५,२,०९७ सिध्मादिभ्यश्च

२११९ ५,२,०९८ वत्सांसाभ्यां कामबले

२१२० ५,२,०९९ फेनादिलच्च

२१२१ ५,२,१०० लोमादि पामादि पिच्छादिभ्यः शनेलचः

२१२२ ५,२,१०१ प्रज्ञाश्रद्धार्चाभ्यो णः

२१२३ ५,२,१०२ तपःसहस्राभ्यां विनीनी

२१२४ ५,२,१०३ अण्च

२१२५ ५,२,१०४ सिकताशर्कराभ्यां च

२१२६ ५,२,१०५ देशे लुबिलचौ च

२१२७ ५,२,१०६ दन्त उन्नत उरच्

२१२८ ५,२,१०७ ऊषसुषिमुष्कमधोरः

२१२९ ५,२,१०८ द्युद्रुभ्यां मः

२१३० ५,२,१०९ केशाद्वोऽन्यतरस्याम्

२१३१ ५,२,११० गाण्ड्यजगात्संज्ञायाम्

२१३२ ५,२,१११ काण्डाण्डादीरन्नीरचौ

२१३३ ५,२,११२ रजः कृष्यासुतिपरिषदो वलच्

२१३४ ५,२,११३ दन्तशिखात्संज्ञायाम्

२१३५ ५,२,११४ ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः

२१३६ ५,२,११५ अत इनिठनौ

२१३७ ५,२,११६ व्रीह्यादिभ्यश्च

२१३८ ५,२,११७ तुन्दादिभ्य इलच्च

२१३९ ५,२,११८ एकगोपूर्वाट्ठञ् नित्यम्

२१४० ५,२,११९ शतसहस्रान्ताच्च निष्कात्

२१४१ ५,२,१२० रूपादाहतप्रशंसयोर्यप्

२१४२ ५,२,१२१ अस्मायामेधास्रजो विनिः

२१४३ ५,२,१२२ बहुलम् छन्दसि

२१४४ ५,२,१२३ ऊर्णाया युस्

२१४५ ५,२,१२४ वाचो ग्मिनिः

२१४६ ५,२,१२५ आलजाटचौ बहुभाषिणि

२१४७ ५,२,१२६ स्वामिन्नैश्वर्ये

२१४८ ५,२,१२७ अर्श आदिभ्योऽच्

२१४९ ५,२,१२८ द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः

२१५० ५,२,१२९ वातातीसाराभ्यां कुक्च

२१५१ ५,२,१३० वयसि पूरणात्

२१५२ ५,२,१३१ सुखादिभ्यश्च

२१५३ ५,२,१३२ धर्मशीलवर्णान्ताच्च

२१५४ ५,२,१३३ हस्ताज्जातौ

२१५५ ५,२,१३४ वर्णाद्ब्रह्मचारिणि

२१५६ ५,२,१३५ पुष्करादिभ्यो देशे

२१५७ ५,२,१३६ बलादिभ्यो मतुबन्यतरस्याम्

२१५८ ५,२,१३७ संज्ञायां मन्माभ्याम्

२१५९ ५,२,१३८ कंशम्भ्यां बभयुस्तितुतयसः

२१६० ५,२,१३९ तुन्दिबलिबटेर्भः

२१६१ ५,२,१४० अहंशुभमोर्युस्

२१६२ ५,३,००१ प्राग्दिशो विभक्तिः

२१६३ ५,३,००२ किंसर्वनामबहुभ्योऽद्व्यादिभ्यः

२१६४ ५,३,००३ इदम इश्

२१६५ ५,२,००४ एतेतौ रथोः

२१६६ ५,२,००५ एतदोऽन्

२१६७ ५,३,००६ सर्वस्य सोऽन्यतरस्यां दि

२१६८ ५,३,००७ पञ्चम्यास्तसिल्

२१६९ ५,३,००८ तसेश्च

२१७० ५,३,००९ पर्यभिभ्यां च

२१७१ ५,३,०१० सप्तम्यास्त्रल्

२१७२ ५,३,०११ इदमो हः

२१७३ ५,३,०१२ किमोऽत्

२१७४ ५,३,०१३ वा ह च छन्दसि

२१७५ ५,३,०१४ इतराभ्योऽपि दृश्यन्ते

२१७६ ५,३,०१५ सर्वैकान्यकिंयत्तदः काले दा

२१७७ ५,३,०१६ इदमो र्हिल्

२१७८ ५,३,०१७ अधुना

२१७९ ५,३,०१८ दानीं च

२१८० ५,३,०१९ तदो दा च

२१८१ ५,३,०२० तयोर्दार्हिलौ च छन्दसि

२१८२ ५,३,०२१ अनद्यतने र्हिलन्यतरस्याम्

२१८३ ५,३,०२२ सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः

२१८४ ५,३,०२३ प्रकारवचने थाल्

२१८५ ५,३,०२४ इदस्थमुः

२१८६ ५,३,०२५ किमश्च

२१८७ ५,३,०२६ था हेतौ च छन्दसि

२१८८ ५,३,०२७ दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः

२१८९ ५,३,०२८ दक्षिणोत्तराभ्यामतसुच्

२१९० ५,३,०२९ विभाषा परावराभ्याम्

२१९१ ५,३,०३० अञ्चेर्लुक्

२१९२ ५,३,०३१ उपर्युपरिष्टात्

२१९३ ५,३,०३२ पश्चात्

२१९४ ५,३,०३३ पश्च पश्चा च छन्दसि

२१९५ ५,३,०३४ उत्तराधरदक्षिणादातिः

२१९६ ५,३,०३५ एनबन्यतरस्यामदूरेऽपञ्चम्याः

२१९७ ५,३,०३६ दक्षिणादाच्

२१९८ ५,३,०३७ आहि च दूरे

२१९९ ५,३,०३८ उत्तराच्च

२२०० ५,३,०३९ पूर्वाधरावराणामसिपुरधवश्चैषाम्

२२०१ ५,३,०४० अस्ताति च

२२०२ ५,३,०४१ विभाषाऽवरस्य

२२०३ ५,३,०४२ संख्याया विधार्थे धा

२२०४ ५,३,०४३ अधिकरणविचाले च

२२०५ ५,३,०४४ एकाद्धो ध्यमुञन्यतरस्याम्

२२०६ ५,३,०४५ द्वित्र्योश्च धमुञ्

२२०७ ५,३,०४६ एधाच्च

२२०८ ५,३,०४७ याप्ये पाशप्

२२०९ ५,३,०४८ पूरणाद्भागे तीयादन्

२२१० ५,३,०४९ प्रागेकादशभ्योऽच्छन्दसि

२२११ ५,३,०५० षष्ठाष्टमाभ्यां ञ च

२२१२ ५,३,०५१ मानपश्वङ्गयोः कन्लुकौ च

२२१३ ५,३,०५२ एकादाकिनिच्चासहाये

२२१४ ५,३,०५३ भूतपूर्वे चरट्

२२१५ ५,३,०५४ षष्ठ्या रूप्य च

२२१६ ५,३,०५५ अतिशायने तमबिष्ठनौ

२२१७ ५,३,०५६ तिङश्च

२२१८ ५,३,०५७ द्विवचनविभज्योपपदे तरबीयसुनौ

२२१९ ५,३,०५८ अजादी गुणवचनादेव

२२२० ५,३,०५९ तुश्छन्दसि

२२२१ ५,३,०६० प्रशस्यस्य श्रः

२२२२ ५,३,०६१ ज्य च

२२२३ ५,३,०६२ वृद्धस्य च

२२२४ ५,३,०६३ अन्तिकबाढयोर्नेदसाधौ

२२२५ ५,३ ०६४ युवाल्पयोः कनन्यतरस्याम्

२२२६ ५,३,०६५ विन्मतोर्लुक्

